॥ श्रीः ॥

# रमलरहस्यम् ।

रमलज्ञवर-पंडित-श्रीभयभञ्जनशर्मविरचितम् ।

इदं पुस्तकं

खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रागारे

मुद्रयित्वा प्रकाशितम् ।

फाल्गुन संवत् १९६३, शके १८२८.

# प्रस्तावना.

पुरा किल नानाद्रुमलतामण्डिते हिमानीविशदेऽति पावने गौरीगुरो रम्ये प्रदेशे यथासुखमासीने श्रीहरे निखिलविश्वोपकारप्रवणाचित्ता व्याजहारेशं श्रीगिरिजा स्वामिन्भूतभविष्यद्वर्तमानज्ञानोपायं ब्रूहीति । ओमिति वक्तुकामस्य स्मरारातेर्निटिल-स्थलस्थितसुधाकरात्समपतत्सुधाविन्दुर्धरायाम् । तदनुपदमेव च तमभितो वह्निवाय्व-म्बुभूमयस्तज्जिघृक्षवः प्राच्यादिक्रमेण वर्यवारयन् । एतन्निरीक्ष्य भगवाँस्तत्तद्देवागमन-क्रमेणैव तदधिष्ठानप्रदेशान्वामतो गिरिजायाश्च निर्दधार ।

तदनु ⁘ राकाबिन्द्वोः ( पूर्णिमाचन्द्रमसोः ) संयोगात्प्रतिपदादिक्रमेण चतुर्दश-बालाः सम्पन्नाः, एवं षोडश रूपिणः संजज्ञिरे । तथा च सुधार्थमागतानां वाग्मिलोहि-तादिखेटानां वह्न्यादितत्त्वानाश्च सम्बन्धाद्रमलस्य स्थितिः ।

अथैकदा द्वापरान्ते मादनो मुनिपुङ्गवस्तपस्तेपे तदवसाने च कस्यापि भूसुरस्या-श्रमपदञ्जगाम । तस्य चार्वङ्गी तनया पाद्याद्यतिथिसत्कारेण तं समभ्यर्चयत् । तामा-लोक्य धैर्यच्युतेः पतितं स्वरेतः स कक्षे न्यपातयत् । अथ कियता कालेनर्तुमती सा बाला कक्षस्थतद्रेतोयुक्तपर्णेन स्वयोनिममार्जयद्दैवयोगेनापन्नसत्त्वा सुतमजनयच्च । ततश्च तस्या दुश्चरित्रमाशङ्क्य पिता तां निरसारयत्सापि कस्मिंश्चिदरण्ये कथञ्चिदुवास । अथ स एव विप्रो महीमटंस्तमेवोद्देशं दैवादाजगाम समवलोकयच्च ससुतामेनां तप-स्विनीम् । स्वमूलिकामेव तस्या आपदं विज्ञाय स्वसुतं तं शैवं मन्त्रमुपदिश्य निरग-च्छत् । तज्जपसन्तुष्टः शिवोपि सरहस्यं रमलं तस्मै ददौ । तदाप्रभृत्येव भूमौ रमलस्य सञ्चारः तस्यादिमत्वाच्चाऽऽदम इति लोकेऽपभ्रंशतः संज्ञाप्यपप्रथत् ।

परन्तु लहियानकब्जुलदाखिलप्रभृतिसंज्ञानां यवनसङ्केतत्वाद्यवनैरस्या विद्यायाः प्रचारोऽधिकतरं विहित इति हि सिद्ध्यति । अस्तु, अस्य शास्त्रस्योत्पत्त्यादिसम्बन्धं वह्न्यादितत्त्वतत्तदधिष्ठातृतत्तद्ग्रहसम्बन्धश्च विलोक्य निश्चीयतेऽतिप्रामाणिकमेतद्गुरु-मुखात्सम्यगधिगतं महते फलायेति ।

सम्प्रति दुष्प्रापस्यास्य शास्त्रस्यानतिप्रचाराच्छुद्धपुस्तकलाभो दुर्घटस्तथाप्येतस्योद्दि-धीर्षयाऽम्बालाप्रान्तस्थनवाग्रामनिवासि हरिवंशलालशर्म्मणा पुस्तकमेकं प्रेषितमन्येन च केनचिद्विदुषाऽपूर्णमेकं पुस्तकं प्रेरितं तयोमिथः साहाय्याद्विद्वद्द्वारा यथामति शोध-यित्वा लोकोपकृतये मुद्रितमेतदस्माभिः ।

तदस्य ग्रन्थस्य प्रचारादेतद्गतविचित्रप्रश्नपद्धतेर्भाषणादिना विद्वल्लाभानुभवेन सफ-लो भूयादस्माकमायास इति ।

याभ्याञ्च पुस्तकप्रेषणेन साहाय्यं व्यधायि ताभ्यामनेकशो धन्यवादा भूयोप्येता-दृशौदार्य्यप्रदर्शनेनोपकरणीयोऽहमिति शम् ।

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालयाध्यक्ष-मुंबई.

॥ श्रीः ॥

# अथ रमलरहस्यविषयानुक्रमणिका ।

| विषय. | पृष्ठ. |
|---|---|



## अथाष्टादशोऽध्यायः ।



## अथैकोनविंशतितमोऽध्यायः ।



## अथ विंशतितमोऽध्यायः ।



## अथैकविंशतितमोऽध्यायः ।

# अथ तृतीयप्रकरणम् ।

## प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः ।



## अथ चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः।

## अथाष्टमोऽध्यायः ।



## अथ नवमोऽध्यायः ।

इत्यनुक्रमाणिका समाप्ता ।

## नक्शा शकल आदि ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|
| लहीयान् २ | कब्जुल दाखिल १५ | कब्जुल खारीज ६ | जमायत ९६ | फरुह ७ | उकलाह १० | इन्कीश ८ | हुमरा ५० |
| नर मर्दसंज्ञा | स्त्री मादासंज्ञा | नर अशुभ नहस | क्लीव मुखन्नस | नर मुसढा | नर | स्त्री | नर |
| शुभवद | शुभसाद | अशुभ नहस | अशुभ वदह | शुभसाद | अशुभ नहस | अशुभ नहस | अशुभ वदह |
| ९ ८।९ | ५ २।६।१२ | ११ ४।६।१० | ६ ९।७।८ | ७ ७।५।१२ | १० ५।९।११ | १० ४।८।११ | १ २।६ |
| वृहस्पति मुस्तरी | सूर्य शमस | राहु रासव | बुध अत्सरद | शुक्र जुहरै | शशि जुहल | शनि पुहल | भौम मरीष |
| कौस धनु | असद सिंह | दलव कुंभ | सुवह कन्या | मिजातुल | दलव-कुंभ | यदि मकर | हमल मेष |
| खारीज | दाखिल | खारीज | विसात | मुन्कलिव | मुन्कलिव | दाखिल | सावित |
| पूर्व आतसी | खाकी दक्षिण | आतसी पूर्व | खाकी जनूवि दक्षिण | वादी पश्चिम | खाकी जनूबी दक्षिण | खाकी जनूबी दक्षिण | वादी मुगरवी पश्चिम |
| मादनी धातु | कानी रत्न | मादनी धातु | कानी रत्न | हवानी जीव | कानी रत्न | कानी रत्न | हवानी जीव |
| रमजान् | जमादि-लारीव | सावाल | रविलोवल | जमादि उरसानि | सावान | रज्जव | सावान |
| शिर | गला | कानं | पोंहँचा | बांई बाजू | नाभीं | दाहनी बाजू | कमर |
| जवान अवध | जवान अवध | जवान अवध | बूढी अवध | बालअवध | जवान अवध | बूढी अवध | जवान अवध |

| ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|
| बजाय ४ | नुस्रुतुल खारीज ९ | नुस्रुतुल दाखिल | उतवतुल खारीज १३ | नकि उल-पद ९ | उत्वतुल दाखिल १९ | ईजतमा ११ | तारीक २१ |
| स्त्री | नर | स्त्री | नर | क्लीब | स्त्री | क्लीब | स्त्री |
| शुभ | शुभ | शुभ | अशुभ | अशुभ | शुभ | शुभाशभ | शुभ |
| ४ ६।१५ | ५ २०६।९ | १२ | १० ६।५।११ | ८ | २ | ३ | ४ |
| चंद्रमा कमर | सूर्य शमस | बृहस्पति मुस्तरी | केतु जनब | मंगल मरीष | शुक्र जुहर | बुध अत्सरद | चंद्रमा कमर |
| सरीता कर्क | असद सिंह | हूत मीन | यदि मकर | अकूरब वृश्चिक | सौर-वृष | जौजा मिथुन | सरीता कर्क |
| साबित | खारीज | दाखिल | खारीज | मुन्कलिब | दाखिल | साबित | मुन्कलिब |
| आबी शुमाल उत्तर | आतसी पूर्व | आबी शुमाल उत्तर | आतसी दक्षिण | आबी शुमाल उत्तर | बादी मग-रबी पश्चिम | बादी मग-रबी पश्चिम | आबी शुमाल उत्तर |
| नवाती मूल | मादनी धातु | नवाति मूल | मादनी धातु | नवाति मूल | हवानी जीव | हवानी जीव | नवाति मूल |
| मुहर्म्म | सफर | जिल्काद | रज्जब | जमादि-लौवल | रबिलौवल | जिलहिज्ज | मुहर्म |
| हाथ | पिंडली | मुंढे | जंघा | चूँतड | गला | कान | छाती |
| जवान अवध | मध्य अवध | मध्य अवध | मध्य अवध | बाल-अवध | जवान अवध | बूढी अवध | बूढी अवध |

॥ श्रीगणेशाय नमः ॥

# अथ रमलरहस्यप्रारम्भः ।

## प्रथमप्रकरणम् १.

### प्रथमोऽध्यायः ।

गणनाथं नमस्कृत्य प्रणवाद्यं गुरुं तथा ॥ कुर्वे सारतरं प्रश्नं येन मानसिकं वदेत् ॥ १ ॥ रमलरहस्यं नामेदं शास्त्रं सारतरं ब्रुवे ॥ लाभालाभौ सुखं दुःखं जयं चैव पराजयम् ॥ २ ॥ जीवनं मरणं गुह्यं मनोभिलषितं तथा ॥ वृत्तांतं सर्वजंतूनां येन जानंति तद्विदः ॥ ३ ॥

अथानुक्रमणिका ।

अस्मिञ्छास्त्रे चत्वारि प्रकरणानि संति ॥ तत्र प्रथमं रमलरूपिण उत्पत्तिकथनं नाम ॥ तस्य त्रयोदशाऽध्यायाः ॥ १३ ॥ द्वितीयप्रकरणे रूपिणां व्याख्यानम् ॥ तस्य चैकविंशतिरध्यायाः ॥ २१ ॥ तृतीयप्रकरणं तन्वादिद्वादशभावानां प्रश्नकथनरूपम् ॥ तस्य द्वादशाध्यायाः ॥ १२ ॥ चतुर्थकं तु मिश्रप्रकरणम् ॥ तस्य नानाविधैः स्फुटतरवस्तुभिरेक एवाध्यायोऽस्ति ॥ १ ॥

तत्र तावत्प्रथमप्रकरणस्य प्रथमोऽध्यायो व्याख्यायते ॥ गोप्यवस्तुप्रकटीकरणत्वं रमलत्वं नाम ॥ अत्र रमलोत्पत्तिमाह ॥

कैलासशिखरे रम्ये नानाद्रुमलतान्विते ॥ शुद्धस्फटिकसंकाशे नानापक्षिसमाकुले ॥ १ ॥ नानाशृंगैः समायुक्ते मणिवैडूर्यमंडिते ॥ स्थितवंतौ च गौरीशौ प्रीतितत्परमानसौ ॥ २ ॥ देवदेवं महादेवं प्रसन्नमुखपंकजम् ॥ दृष्ट्वाह्लादयुतं रुद्रं पार्वती वाक्यमब्रवीत् ॥ ३ ॥ भगवन्देवदेवेश शशांकांकितशेखर ॥ ब्रूहि मे परमं ज्ञानं प्रश्नोत्थं च शुभाशुभम् ॥ ४ ॥ भूतं तथा भविष्यच्च वर्तमानं तथैव च ॥

विज्ञानं सर्वकालानां येन जानंति साधकाः ॥ ५ ॥ पूर्वं प्रश्नो मया देव कृतस्तदनुसारतः ॥ कथयाशु प्रसादेन यदि तुष्टोसि शंकर ॥ ॥ ६ ॥ पार्वत्या वचनं श्रुत्वा शिवो हर्षितमानसः ॥ एतस्मिन्नंतरे चंद्रात्सुधाबिंदुः पुरोऽपतत् ॥ ७ ॥ चतुरस्रश्चतुष्कोणः स बिंदुरमृतस्य च ॥ बिंदौ पतितमात्रे तु वह्न्याद्याः सुसमागताः ॥ ८ ॥ तस्य बिंदोश्चतुर्दिक्षु वह्निवाय्वम्बुभूमयः॥ प्राच्यामग्निर्जले[1] वायुर्याम्ये सौम्ये धरा जले ॥ ९ ॥ ग्रहणायागताः सर्वे सुधाबिंदोश्च तृष्णया ॥ एतत्सर्वं शिवो दृष्ट्वा प्रीत्या वचनमब्रवीत् ॥ १० ॥ शृणु देवि परं ज्ञानं मुनीनामपि दुर्लभम् ॥ प्रत्यक्षं सर्वविद्यानामुत्तमं प्रश्नशासनम् ॥ ११ ॥ त्वया प्रश्नः कृतो यस्मिन्काले तस्मिन्पुरो मम ॥ पृथ्व्यादिपश्चतत्त्वानि द्रष्टव्यानि वरानने ॥ १२ ॥ तेष्वाकाशो बिंदुरूपश्चत्वारः स्वात्मरूपकाः ॥ पृथक्स्वभागमिच्छन्ति यदर्थमिह चागताः ॥ १३ ॥ यतः पूर्वे स्थितो वह्निस्तस्मादूर्द्ध्वं निवेशितः ॥ सम्मुखेऽग्रेः स्थितो वायुर्यतोऽसौ तदधःस्थितः ॥ १४ ॥ वामांगे गिरिजास्थानं तस्मात्तोयमधः स्थितम् ॥ त्रिभ्यो गुरुतरा पृथ्वी सर्वाधस्ताद्गता भवेत् ॥ १५ ॥ यस्माच्चन्द्रमसो देहात्सुधाबिंदुः पुरोऽपतत् ॥ तस्मादुत्पन्नरूपोयं यन्नाम्ना दर्शसंज्ञकः ॥ १६ ॥ यथा दर्शे कलाहीनश्चन्द्रमा न प्रकाशते ॥ च्युतामृतात्ततो देहात्तस्माच्च पुरुषाकृतिः ॥ १७ ॥ यदायं क्रियते द्विघ्नस्तदा राका भवेद्ध्रुवम् ॥ बिंदुभिः परिता चेयं (⁝⁝) संख्याभिर्वसुभिस्तथा ॥ १८ ॥ दर्शहीनकलश्चन्द्रः पूर्णिमायां तु पूर्णकः ॥ दिनेदिने कलावृद्धिस्तस्मात्सा च वरांगना ॥ १९ ॥ यथा पुरुषदेहात्तु बीजं निर्गत्य योनिषु ॥ कललादिक्रमेणैव पूर्णमासे तु पूर्णकः ॥ २० ॥

| | | |
|---|---|---|
| ० | ० | अ |
| ० | ० | वा |
| ० | ० | ज |
| ० | ० | पृ |

दम्पतीभ्यां युतं सर्वं जगत्स्थावरजङ्गमम् ॥ जायंते बालकास्ताभ्यामिति सत्यं वरानने ॥ २१ ॥ आभ्यां मनु १४ मिताश्चान्ये बाल-

[1] जले पश्चिमायाम् ।

रूपा भवंति हि ॥ न्यूनाधिका न जायंते षोडशांकितरूपकाः ॥ ॥ २२ ॥ एतच्च सर्वमखिलं रूपकाणामुपार्जनम् ॥ तत्सर्वं कथयिष्यामि शृणुष्वेकाग्रमानसा ॥ २३ ॥ यस्माच्चंद्रमसो देहाद्व्यक्ताश्चैते हि रूपकाः ॥ ते तस्यैव कला ज्ञेया अमाप्रभृतिसंज्ञकाः ॥ २४ ॥

प्रतिपत् १-बृ. द्वितीया २-मं. तृतीया ३-सू. चतुर्थी ४-चं. पंचमी ५-रा षष्ठी ६-बु. सप्तमी ७-के. अष्टमी ८-श. नवमी ९-श. दशमी १०-सू. एकादशी ११-शु. द्वादशी १२-बृ. त्रयोदशी १३-मं. चतुर्दशी १४-शु. अमा ३०-चं. पूर्णिमा १५-बु. ॥

अथैषां ग्रहस्वामिवशान्नामान्याह ।

वाग्मी लोहित उष्णगुस्त्वथ विधूराहुस्तथा बोधनो वक्रःसौरिशनैश्चरौ ननु तथा तीक्ष्णांशुदैत्यार्चितौ॥सूरिश्चारकवीतथाह्यभिहितौ सीतांशुसौम्यौ तथा वर्णैःषोडशसंख्यकैः खलु बुधा दीव्यंति खेटैरिमान् ॥ २५ ॥ एते बद्धा ग्रहैर्ज्ञेयास्तथालग्नैश्च राशिभिः ॥ पाशकैः सम्भवेत्प्रश्ने फलं खेटानुमानतः ॥ २६ ॥ आवयोरंतरे चेयं विद्योत्पन्ना च क्रीडया ॥ अतोरमलनाम्ना हि भविष्यति महीतले॥२७॥भूतं भविष्यद्यच्चान्यद्वर्तमानं च प्रश्नजम् ॥ अनया विद्यया सर्वं स्फुटं भवतु सर्वदा ॥ २८ ॥ एतद्रहस्यं परमं त्रिषु लोकेषु दुर्लभम् ॥ गोपनीयं प्रयत्नेन यदीच्छेच्छुभमात्मनः ॥ २९ ॥ एवं देवो वरं दत्त्वा लिखित्वा भूर्जपत्रके ॥ कैलासस्य गुहामध्ये ध्रुवं स्थापितवान्पुरा ॥ ३० ॥ रमुक्रीडार्थधातोश्च तस्मादलविधानतः ॥ औणादित्वादलं प्राप्य रमलेति प्रथां गतः ॥ ३१ ॥

अथ मर्त्यै केन प्रकाशितमित्यत्राह ।

युगेषु द्वापरांतेषु मादनो मुनिपुंगवः ॥ ३२ ॥ तपस्तेपे महातेजाः साक्षात्सूर्य इवापरः ॥ एकस्मिन्समये दैवात्स गतो ब्राह्म-

णाश्रमम् ॥ मध्याह्ने भोज्यवेलायां भोजनार्थं महामुनिः ॥ ३३ ॥ सुंदरी चारुतन्वंगी विप्रस्यैका सुता स्थिता ॥ सार्घादिभिस्तमभ्यर्च्य भोजनार्थमभाषत ॥ ३४ ॥ कुमारीं षोडशीं दृष्ट्वा सुन्दरीं कामपीडितः ॥ कामातुरेण रूपेण कक्षे बीजमपातयत्॥३५॥कौपीनं चापरं धृत्वाऽशनं कृत्वा च सन्मुनिः ॥ तत्तत्रैवं तिरस्कृत्य स्वाश्रमं पुनराययौ ॥ ३६ ॥ कुमारी दैवयोगेन रजस्नाता च साभवत् ॥ तत्काले तत्पटं नीत्वा गुह्ये धृतवती सती ॥ ३७ ॥ तत्प्रभावाच्च सा नारी दधौ दोहदलक्षणम् ॥ सुतां गर्भयुतां दृष्ट्वा पितरौ विस्मयान्वितौ ॥ ३८ ॥ शास्त्राणि बहुधा दृष्ट्वा श्रुतिस्मृतिविशारदः ॥ न बन्धनं च वैरूप्यं वधं स्त्रीणां विवर्जयेत् ॥ ३९ ॥ तथा च योगियाज्ञवल्क्यः–"स्वच्छंदगा च या नारी तस्यास्त्यागो विधीयते ॥ न चैव स्त्रीवधं कुर्यान्नचैवांगविकर्तनम् ॥ ४० ॥ एवं विंचित्य विप्रोसौ तस्यास्त्यागं तदाकरोत् ॥ गृहोज्झिता विप्रकन्या दुःखिता सा वनं ययौ ॥ ४१ ॥ प्राप्ते च दशमे मासे पुत्ररत्नमजीजनत् ॥ तस्मिन्नेव वने घोरे निर्जले जनवर्जिते ॥ ४२ ॥ सपुत्रा सा वने घोरे निवासमकरोत्सदा ॥ बहुकाले व्यतीते तु स मुनिः पुनराययौ॥ ४३ ॥ दृष्ट्वा तां च स्त्रियं पुत्रं वृत्तांतं पृष्टवान्मुनिः ॥ सर्वं वृत्तं पूर्वगतं तस्याग्रे सा न्यवेदयत् ॥ ४४ ॥ नूनं तद्वचनं श्रुत्वा प्रोवाच मुनिसत्तमः ॥ ममांशसंभवो ह्येष सत्यं सत्यं वदाम्यहम् ॥ ४५ ॥ तं पुत्रं पाठयित्वातु शैवं मन्त्रं ददौ तदा ॥ शैवमन्त्रं समागृह्य ययौ मक्केश्वरं शिवम् ॥ ४६ ॥ अहर्निशं जपं कुर्वन्प्रीत्या तत्परमानसः ॥ प्रत्यक्षः स शिवो जातो वरं ब्रूहीत्यथाब्रवीत् ॥ ४७॥ सोवाच यदि देवेश तुष्टोसि त्वं ममोपरि ॥ किंचिद्वस्तु परं गुह्यं मह्यं देहि कृपानिधे ॥ ४८ ॥ येन भूतो भविष्यश्च वर्तमानस्तथैव च ॥ वृत्तान्तः सर्वजीवानां स्फुटो भवति सर्वथा ॥ ४९ ॥ इति श्रुत्वा ददौ तस्मै रमलं पूर्वसंचितम् ॥ प्रत्युवाच शिवः प्रीत्या तत्परं विनयान्वितम् ॥

॥५०॥अनया विद्यया प्रश्नो वक्तव्यःपुत्र मानसः॥आदमनाम्नाविख्या-
तो भविष्यसि महीतले ॥५१॥ इति दत्त्वा वरं देवस्तत्रैवांतरधीयत ॥
गृहीत्वा सोपि तां विद्यां तत्रैव स्थितवान्प्रभुः ॥ ५२ ॥ स्वमातृदुःखं
संस्मृत्य हृदि शल्यमुपागतः ॥ विपरीतांस्तथा मार्गान्वैष्णवेभ्योऽ-
करोत्तदा ॥५३॥रमलाख्यश्च तद्ग्रन्थं देशगोषु समानयत् ॥ पारसीव-
चने कृत्वा सर्वं प्रश्नमवीवदत् ॥ ५४ ॥ रूपाभ्यासः कृतस्तेन
सर्वथा बालकोपरि ॥ आरबीवचने तस्य संज्ञाभूद्रमलेति च ॥ ५५ ॥
प्रसिद्धामकरोद्विद्यामादमो रमलाभिधाम् ॥ वरो दत्तः पुरा तेन यतो
देवेन नान्यथा ॥५६॥ अनया विद्यया सोपि सिद्धत्वपदवीं गतः ॥
सर्वज्ञत्वं तथोत्पन्नं शिवाशिवप्रसादतः ॥ ५७ ॥ शमने दमधातोश्च-
पूर्वमाङा युतं पदम् ॥ तस्मादाङाभिधानेन चादमेतिप्रथां गतः ॥
॥ ५८ ॥ यातैश्च बालकैः शिष्यैर्व्याप्तं सर्वजगत्तदा ॥ स चाकरो-
न्महाधृष्टः सर्वधर्मविडंबनम् ॥ ५९ ॥ इदानीं रमलं तच्च देववाचि
करोम्यहम् ॥ मतं बुद्ध्वा च ग्रंथानां सर्वेषां रमलार्थिनाम् ॥ ६० ॥
श्लोकबद्धैस्तथा वृत्तैर्भावो ज्ञातुं न शक्यते ॥ सर्वेषां सुखबोधाय
वाक्यरूपेण कथ्यते ॥ ६१ ॥

अथ प्रतीतिज्ञानार्थं वह्न्यादितत्त्वोपरि रमलप्रकाशं कर्तुं नामनिष्पत्तिमाह ।

तत्र चत्वारि तत्त्वानि वह्निवायुजलपृथ्वीरूपाणि ॥ चतुर्णामपि
तत्त्वानां स्वात्मरूपमेकं रत्नं तथा द्वे द्वे प्रकृती स्तः यथाग्नौ
वह्निरूपमेकं रत्नं तथा चोष्णशुष्के द्वे २ प्रकृती वर्तेते ॥ रत्नगुणः
१ उष्णगुः २ शुष्कगुः ३ एवं वह्नौ त्रैगुण्यं विद्धि ॥ एवं वायौ गुण-
त्रयं ज्ञेयम् ॥ यथा च वायुरूपमेकं रत्नं चोष्णश्लेष्माणौ प्रकृती द्वे
एवं जलेपि त्रैगुण्यम ॥ यथा जलरूपमेकं रत्नं शीतलश्लेष्माणौ द्वे
प्रकृती स्तः ॥ एवं पृथिव्यामपि गुण्यं ज्ञेयम् ॥ यथा पृथिवीरूपमेकं
रत्नं द्वे प्रकृती शीतलशुष्के भवतः ॥ एवं चतुर्णामपि तत्त्वानां
स्वात्मरूपमेकं रत्नं तथा द्वे द्वे प्रकृती ज्ञात्वा बुद्धिमानत्र विचार-

येत् ॥ तद्यथा-आदौ वह्नेस्त्रैगुण्यं ३ भूमौ स्थाप्य पश्चाद्द्व्यङ्कैः ३ वायुप्रकृती २ गुणयेत् पुनरनेन षङ्केन ६ जलप्रकृती गुणयेत् १२ एभिर्द्वादशांकैः क्षितिप्रकृती गुणयेत् सर्वेषां न्यासः ॥ ३ । ६ । १२ । २४ ॥ यथाक्रमेण संकलने कृते जाताः पंचचत्वारिंशत्४५ अस्मिन्नेव मध्ये आदम इति नाम स्फुटं भवति ॥

अथ तदर्थमपरव्यवहारज्ञानार्थं वर्णानां संख्यामाह ।

अबजदहौवज हुत्ती कलमन स॰अ॰फस करशत स॰अखज॰ जज्ग॥अत्र अकारे षोडश स्वराः ज्ञेयाः । तथात्र बपफभा एकरूपाः तद्यथा-जचछा एकरूपास्तद्वत् दधडढा एकरूपाः पुनस्तथा कख गघा एकरूपाः पुनस्तथा तथटठा एकरूपाः एवं सर्ववर्णानां संख्या ज्ञातव्या अथ यतः पंचचत्वारिंशत्संख्येषु चादमेति नाम स्फुटं भवति ॥ अकारस्यैकः १ तथा दकारस्य चत्वारः ४ मकारस्य चत्वारिंशत् ॥ ४० ॥ सर्वेषां सङ्कलने कृते जाताः पञ्चचत्वारिंशत ॥४५॥ ये केचिद्वदंति रमलशास्त्रे तत्त्वसंभवसंख्यासु रमलप्रकाशकर्त्तुर्नाम वर्तते । तत्त्विदमेवोक्तं मया स्फुटम् ॥ एवं ज्ञाते सति प्रतीतिर्जाता ध्रुवमादमेन रमलविद्या प्रकटितेति सत्यम् ॥

अथ प्रकारांतरेण नामोत्पत्तिमाह ।

| अ | ब | ज | द | ह | व | ॅ ज | ॅ ह | त्व | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | |
| य | क | ल | म | न | स | ॅ अ | ॅ फ | स्व ॅ | अय उस ५६ |
| १० | २० | ३० | ४० | ५० | ६० | ७० | ८० | ९० | |
| ॅ कु | र | श | त | त्स | ॅ ष | ॅ य | ॅ ग्व | ॅ ज्य | ॅ ग |
| १०० | २०० | ३०० | ४०० | ५०० | ६०० | ७०० | ८०० | ९०० | १००० |

यथाग्नौ स्वात्मरूपमेकं रत्नं तथा द्वे प्रकृतीति त्रिधा त्रिकं वारत्रयं

द्विगुणयेत् ॥ यथा त्रिकं ३ द्विगुणितं६ पुनः षट्कं द्विगुणितं १२एवं द्वादशापि द्विगुणिताः२४ सर्वेषां न्यासः ॥ ३ । ६ । १२ । २४योगे कृते जाता सैव संख्या ४५ तत्प्रभृति बहुतरे रमलाचार्या बभूवुः ॥ नानानामयुतान्ग्रंथानकुर्वंस्ते च सूरयः ॥ अनेकदेशभाषासु ह्यारबी-पारसीषु च ॥ १ ॥ बहुदेशोदीर्णभाषास्वारबीफारसीषु च ॥ कृतं रम्लं स्थितं तेषां तदत्र संस्कृतं ब्रुवे ॥ २ ॥ संस्कृतोक्तिविदि पारसीज्ञाता पारसीविदि च संस्कृतज्ञाता तद्द्वयविदि च तद्द्वयज्ञाता जायते तदधीयतामिदम् ।

अथ रमलबिंदुसंख्योत्पत्तिमाह ।

वाग्मी तीक्ष्णांशुः पातः सौम्यः दैत्यार्चितः मंदगः सौरिः लोहितः विधुः उष्णगुः सूरिः केतुः आरः कविः बोधनः शीतांशुः ये शीतांशोश्चत्वारो बिंदवः संति ते द्विघ्नाश्चेत्तदा सौम्यरूप्युत्पत्तिः स्याद्यस्मिन्नष्टौ बिंदवः । अथादौ शीतांशुरूपी चोत्पन्नः सर्वरूपिणां पिता स एव स्वघ्नः।यथा ते चत्वारो बिंदवः स्वघ्नाः खलु जाताः षोडश १६ इयं संख्या सर्वरूपिणांगुण-नायाता। एवं सौम्यरूपिणो८ वसुबिंदवस्तेषां वर्गाङ्कः कर्तव्यस्तथा कृते जाता संख्या चतुष्षष्टि६४परिमिता। इयंसख्या सर्वरूपिषु युग्म बिंदूनां जाता एवं षोडश १६ चतुष्षष्टि ६४ योगे कृते जाता। अशीतिः ८० संख्या। अपराणि यानि षोडशगृहाणि रूपिणां संति तान्यपि चाशीतौ योज्यानि तथा कृते जाता संख्या षण्णवतिमि ता ९६ इयं सर्वरूपिषु युग्मकेवलानां बिन्दूनां जाता। अस्या रमल बिन्दुसंख्यायाः ९६ द्वात्रिंशद्बिंदुकाः ३२ संपूर्णरमलरूपिषु केवल-बिंदूनां वर्तंते । शिष्टाश्चतुःषष्टिः ६४ ॥ इयं सम्पूर्णरमलेषु युग्मबिंदूनां संख्या ज्ञेया। उभयोः द्वात्रिंश ३२ चतुषष्ट्योः ६४ योगे कृते जाता सर्वरूपिणां बिन्दुसंख्या ९६ तथाहि ।

अथ किंचिद्विशेष उच्यते ।

एतच्छास्त्रं केषांचिन्मूर्खाणां हस्ते नो पततु तथेयं रमलविद्या शीसभेदान्विता ज्ञेया। यः कोपि पुरुषः अस्या विद्यायाः सिद्धान्तज्ञानार्थं स्वच्छांङ्कं कारयेत्तदा सद्गुरुभ्यः पठेदेनांयतः सफलतां यायात यः कोपि मंदो गुरुभ्यो नो पठित्वा स्वेच्छया पुस्तकं दृष्ट्वा शुभाशुभरूपं फलं वदेत् तस्योपरि दैत्यारिः क्रुद्धः स्यात्। अत एव गुरोरनुज्ञां प्रतिगृह्यैव पाठितव्यं तदा ध्रुवं प्रश्नः सत्यो भवेत्। न स्वेच्छया मूढमतीनां कुत्रापि सिद्धिः ।

अथ मूर्खाणां हस्ते नोपतत्वेतस्य प्रयोजनमाह ।

यदि चैनां रमलविद्यां मंदबुद्धयो न जानीयुस्तदा श्रीशभक्तिहीनाः स्युः॥यतो भक्तिविरहितास्ते च रमलबिंदूपर्यैवनिश्चयान्विता भवेयुः॥ यद्यपि सद्गुरुभ्योऽधीतं तथापि रमलप्रश्नं विचारयित्वा वदेत् ॥ यदि विचार्योक्तः प्रश्नस्तथ्यतां नो यायात् तदा स पुरुषः सम्यग् विचार्य स्वेच्छया वदतीति ज्ञेयम् ॥ अतोऽविचार्य नो प्रश्नं ब्रूयात् ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्यसारसंग्रहे प्रथमप्रकरणे प्रथमोध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

अस्या रमलविद्यायाः सिद्धान्तःकः तथा वादिनां पुरुषाणामस्मिन् रमलशास्त्रे केन प्रश्नकारणेन विवादो भवेदित्यत आह अस्या रमलविद्यायाः सिद्धान्तो बिंदुरूपः बिंदूनामेव प्रश्नेन विवादं कुर्वंति वादिनः। किमर्थं बिंदूनां प्रश्नेन वादिनो वादं कुर्वंतीत्यत आह बिंदूनां युग्मकेवलरूपत्वात्तथा रूपिस्वरूपत्वात्तथा रूपिणां ग्रहभागत्त्वाद्विवादिनो वादरूपं प्रश्नं कुर्वंति ॥

अथ गणितविदां मते बिंदुव्याख्यानमेतादृशो वृत्तः।

सूक्ष्मो लघुरूपो यस्य द्विधाकरणं ( द्वौभागौ ) न भवेत्स बिंदुर्नाम केचिद्बिंदुवृत्तरूपं मध्यावसानान्वितं कथयंति ॥ यथा आकाश

विंदोर्बिंदुतारूपं वदंति । एतत्रिविधव्याख्याने रमलबिंदुश्चैकोपि नास्ति । अत्र रमलविंदावपरव्यवहारो ज्ञेयः । तमाह अत्र रमलशास्त्रे तत्त्वरूपं बिंदुं विजानीयात् । तत्पूर्वमेव कथितं मया अस्या विद्यायाः सिद्धांतरूपाणि चत्वारि तत्त्वानि संति ॥ उक्तं च—अग्निरूद्ध्व समाख्यातो वायुस्तदनुभाषितः ॥ तोयं प्रोक्तमधस्तस्मात्सर्वाधः पृथिवी मता ॥ १ ॥ यथा शीतांशौ चतुर्णां ⁝ बिंदूनां समत्वे चत्वारि तत्त्वानि क्रमशस्तिष्ठंति । तथाहि—तत्रोर्द्ध्वबिंदुर्वह्निमुखः तदधो द्वितीयबिंदुर्वायुमुखः, तदन तृतीयबिंदुर्जलमुखः अधस्थश्चतुर्थबिंदुर्भूमुखः ॥

एवंज्ञाते विशेषमाह । यदि चैकतत्त्वस्थाने द्विबिंदुरेखकरूपं स्यात्तस्य युग्म २ संज्ञा ज्ञेया । यद्येकतत्त्वस्थाने चंद्र १बिंदुः स्यात्तस्य केवलसंज्ञा ज्ञातव्या । तत्र स्वजातीयतत्त्वमद्वितीयं विद्धि । यथावह्निरेकाकी स्वयमेव ॥ एवं वाय्वादिषु ॥ तथा स्वयमेव बिंदुरप्यद्वितीयः ॥ अत एव तत्त्वबिंदुनामानं कथयंति धीराः ॥

अस्य प्रयोजनमाह—यत्र यत्र बिंदुः केवलरूपस्तत्र तत्र ध्रुवं तत्त्वमपि भविष्यति । यत्र यत्र बिंदुर्युग्मरूपस्तत्र तत्र वर्तमानं तत्त्वन्न भविष्यति । कस्मात् । बिंदुरेकः स्वयमेव । तथा तत्त्वमप्येकं स्वयमेव । द्विमूर्तित्वाभावात् । अनेनेयं वार्त्ता मनसि समागता सौम्यरूपिणी ☰ चत्वार्यैव युग्मानि संति तत्र वर्तमानं तत्त्वमेकमपि नास्तीति ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्यसारसंग्रहे प्रथमप्रकरस्य द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

अस्मिन्नध्याये षोडशरूपिणामुत्पत्तिरस्ति । तत्रादौ रूपित्वं नाम किम् । केवलसमूहैस्तथा युग्मसमूहैस्तद्द्वयुग्मकेवलसमूहैश्चतुर्षु

तत्त्वेषु रूपिणो भवंति परंतु वह्न्यादिचतुर्षु तत्त्वेष्वेव केवलादीनां समूहाश्चत्वार एव भवंति । नतु चतुर्थात्परो बिंदुसमूहः स्यात् । यथा केवलसमूहैः शीतांशुः ⁞ भवति । तथा युग्मसमूहैः सौम्यः ☰ । एवं केवलयुग्मसमूहैः शेषरूपिणो भवंति । अत्र केचिच्चत्वारि केवलान्यूर्द्ध्वाधःस्थानि स्थापयंति केचित्तिर्यक् स्थापयान्ति ।⁞।.... एवमुभयथा रूपिणामुत्पत्तिः स्यात् ॥ तदाह-यदि शीतांशुं द्विघ्नं कारयेत् तदा सौम्यरूपी ⁞⁞ भवेत् । अत एव शीतांशुं प्रथमरूपिणं(पितरं)वदंति धीराः सौम्यं(मातरं)द्वितीयम्। इति।आभ्यां शेषाश्चतुर्दशमिता उत्पन्ना भवंति । यथा बहुबिंदुमध्ये क्षयत्वात्स्वल्पबिन्दुमध्ये चाधिककरणाद्यथा-सौम्ये क्षयकरणाच्छीतांशौ चाधिक्यकरणाच्छेषाश्चतुर्दशमिताः स्युः अत एव शीतांशुः सर्वरूपिणां पिता सौम्यश्च माता कथिता।पुंस्त्रीभ्यां सर्वे रूपिणो बालरूपा उत्पद्यंते॥

अथ बिंदुरूपत्वाद्रेखारूपमाह--यत्र यत्र वह्निवायुजलभूनां द्वौ बिंदू भवतस्तत्रतत्र द्वाभ्यां बिंदुभ्यामेका रेखा स्यात् । यथाग्नेर्द्विबिंदुभ्यामेका रेखा, वायोर्द्विबिंदुभ्यामेका रेखा, जलस्य द्विबिंदुभ्यामेका रेखा, भूमेर्द्विबिंदुभ्यामेका रेखा स्यात् । एवं यत्रयत्र यस्य यस्यैक एव बिंदुस्तत्र तत्र तस्य तस्य बिंदुरेव तिष्ठेन्नतु तत्रापि रेखकरूपं कर्तव्यमिति षोडशरूप्युत्पत्तिसमये धीमान् विचारयेत् ॥ तदाह-यदि सौम्यरूपिणो ☰ वह्नेरेकं बिंदुं गृहीत्वा शीतांशुः ⁞ रूपिणो वह्निस्थाने योजयेत्तदा शीतांशुः कवि (शु ⁞) भवेत्। सौम्योपि वह्निबिंदुहीनो(वाग्मी ☰) ( बृ ) स्यात् ॥ एवं सौम्याद्वायोरेकं बिंदुं गृहीत्वा शीतांशुरूपिणो वायुस्थाने योजयेत् । तदा शीतांशुरारः ( ⁞ मं ) स्यात् । तथा वायुबिंदुहीनः सौम्योपि लोहितः ( मं ☰ ) पुनरपि सौम्याज्जलस्यैकं बिंदुं गृहीत्वा शीतांशुरूपिणो जलस्थाने योजयेत् । तदा शीतांशुर्दैत्यार्चितः ( शु ⁞ ) । तथा जलबिंदुहीनः सौम्योपि विधुः ( चं ☰ )

स्यात् । पुनस्तद्वत्सौम्याद्भुवः एकं बिंदुं गृहीत्वा शीतांशुरूपिणो
भूस्थाने योजयेत् । तदा शीतांशुर्वक्रः ( केतुः ⁝ ) तथा भूबिंदुहीनोपि
सौम्यः सौरि ( श ⁝ ) स्यात् । एवं पुनरपि सौम्यात् वह्निवाय्वोरे-
कैकं बिंदुं गृहीत्वा चैतौ द्वौ बिंदू शीतांशुरूपिणः क्रमशो वह्नि-
वायुस्थाने योजयेत् । तदा शीतांशुः सूरिः ( बृ ⁝ ) तथा वह्नि-
वायुबिंदुभ्यां हीनः सौम्योप्युष्णगुः ( सू ⁝ ) स्यात् । अपरसौ-
म्याज्जलपृथिव्योरेकैकं बिंदुं गृहीत्वा शीतांशुरूपिणो जलभूस्थाने
योजयेत्तदा शीतांशुः पूर्वोक्तरूप एव ( ⁝ ) सौम्यो भवेत्
तथा जलभूबिंदुभ्यां हीनः सौम्योपि पूर्वोक्त रूप एव शीतांशूद्भवः
( ⁝ ) स्यात् । तथैव पुनः सौम्याद्वायुपृथिव्योरेकैकं बिंदुं गृहीत्वा
शीतांशुरूपिणो वायुभूस्थाने योजयेत् । तदा शीतांशुः पातः
( रा ⁝ ) तथा वायुभूबिंदुभ्यां हीनः सौम्योपि तीक्ष्णांशुः ( सू ⁝ )
स्यात् । पुनः सौम्याद्वह्निपृथिव्योरेकैकं बिंदुं गृहीत्वा शीतांशुरू-
पिणो वह्निं भूस्थाने योजयेत् । तदा शीतांशुर्बोधनः ( ⁝ बु )
तथा वह्निभूबिंदुभ्यो हीनः ( श ⁝ ) सौम्योपि मन्दगः स्यात् । एवं
सौम्याद्वायुजलयोरेकैकं बिंदुं गृहीत्वा शीतांशुरूपिणो वायुजल-
स्थाने योजयेत् । तदा शीतांशुः पूर्वोक्तरूप एव ( ⁝ ) तथा
वायुजलबिंदुभ्यां हीनः सौम्योपि पूर्वोक्त बोधनरूप एव ⁝ स्यात् ॥
यथा न्यासः ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ एषां षोडश-
रूपिणामेकोप्यधिकं न भवेत् । यतः सर्वरूपिणां मूलरूपः शीतां-
शुस्तस्मिंश्चत्वारो बिंदवः संति यदि ते स्वज्ञास्तदा षोडश मिता
नाधिकन्यूनाः स्युः ॥ अतः षोडशमिता एव रूपिणो नान्ये भवंति ।

अथ प्रकारांतरेण रूपिणामुत्पत्तिमाह ।

तेषु सर्वरूपिषु कोपि चतुर्बिंदूनां तथा कोपि पंचानां कोपि
षण्णां कोपि सप्तानां कोप्यष्टानां बिंदूनां रूपी स्यात् । न कोप्यष्टबिंदु-
भ्योधिकः स्यान्न कोपि चतुर्बिन्दुभ्यो न्यूनः तत्र चतुर्बिंदूनामेकः

शीतांशुः पंचबिंदूनां चत्वारो रूपिणः षड्बिंदूनां षड्रूपिणः सप्तबिंदूनां चत्वारो रूपिणः वसुविन्दूनामेको रूपी अत्र षड्बिंदुरूपिणामुत्पत्तिस्त्रिविधा । तत्र प्रथमः प्रकारः पंचबिंदुरूपिणः स्वस्मिन्हतास्तदा षड्बिंदुरूपिणः स्युस्तथा हि वक्ररूपिणः कविना हते जातो मंदगस्य रूपी । तथैव वक्रः आरेण हते जातस्तीक्ष्णांशो रूपी पुनर्वक्रः दैत्यार्चितेन हते जातः सूरीः रूपी । आरो दैत्यार्चितेन हते जातः बोधन रूपी । एवं पंचबिंदुरूपिभ्यः षड्बिंदुरूपिणामुत्पत्तिर्बोध्या ॥ अयं प्रकारः प्रथमरमलज्ञविदुषां ज्ञेयः अथ त एव वदंति पंचबिंदुभ्यः षड्बिंदुरूप्युत्पत्तिकरणं श्रेष्ठम् तस्मात्सप्तबिंदुरूपिभ्यो षड्बिंदुरूपिण उत्पद्यंते उक्तं च यः सर्वरूपिणां मूलरूपः शीतांशु स तु केवलबिंदुमयस्तथैव पंचबिंदुरूपिकेवलबिंदवो बहुतराः । सप्तबिंदुरूपिषु च स्वल्पा अतः सप्तबिंदुरूपिभ्यः पंचाविन्दुरूपिणो बलिष्टा ज्ञेया ॥ यथा पंचबिन्दुरूपिषु केवलबिंदवो बहुतरास्तथैव षड्बिन्दुरूपिष्वपि केवलबिंदवो बहुतरास्तस्मात्पंचबिंदुरूपिभ्यः षड्बिंदुरूपिणामुत्पतिकरणं श्रेष्ठम् । एवं षड्बिंदुरूपिणोपि स्वस्मिन्गुणिताः पुनः षड्बिंदुरूपिण एव स्युस्तथा द्वितीयशीतांशुर्नेत्वन्ये ।

अथ पश्चिमदेशीयाः पूर्वोक्तप्रकारखण्डनमार्गेण द्वितीयप्रकारमाहुः ।

संप्रति यदुक्तं पंचबिंदुरूपिभ्यः षड्बिंदुरूपिणामुत्पत्तिकरणं तदप्रमाणम् यतो रूपिणो व्यक्ताव्यक्तविपर्ययरूपतां प्राप्नुवन्ति ॥ यथा—कश्चित्प्रवेशिरूपी निर्गमरूपित्वं तथा निर्गमरूपी प्रवेशिरूपित्वं यायात् ॥ अस्मिञ्छास्त्रे मुख्यत्वं परिमाणबिंदोस्तर्हि समुचितं चैवं यत्रयत्र चतुर्णामपि तत्त्वानां केवलबिंदुस्तत्रतत्र केवलबिंदुरेव तिष्ठेत् । यत्र च युग्मरूपो बिंदुस्तत्रतत्र युग्म एव तदा रूपिणां शुभाशुभरूपं फलं वक्तुं शक्यते । तस्मादिदमेव भव्यं सप्तबिंदुरूपिभ्यः

षड्विंदुरूपिणामुत्पत्तिकरणम् ॥ अत्र सर्वतत्त्वानि स्वस्वस्थाने तिष्ठे-युर्न कोपि रूपी विपर्ययरूपत्वं यायात् । यत्र यत्र वह्न्यादितत्त्वानां केवलविंदुस्तत्र तत्र केवल एव । यत्र च युग्मरूपस्तत्रापि युग्म एव न तु केवलस्थाने युग्मो युग्मस्थाने केवल इति तत्त्वानमाज्ञां कर्तुं शक्यते ॥ ये केचित्पंचबिंदुरूपिभ्यः षड्बिंदुरूपिण उत्पादयंति तैः सम्यक्प्रकारेण बिंदोर्भेदो न ज्ञातः ॥

अथ सप्तबिंदुरूपिभ्यः षड्बिंदुरूपिणामुत्पत्तिकरणमाह ।

तत्र वाग्मिनि सौरिणा हते जातं मंदगस्य रूपम् यथा वाग्मि-सौर्य्योर्मध्ये वह्निभुवोरेकैकविंदुस्तथैव द्विविंदुमध्यगं द्रष्टव्यम् । वाग्मिनि लोहितेन हते जातमुष्णगो रूपम् यथा वाग्मिसौर्य्यो-र्मध्ये वह्निभुवोरेकैकबिंदुस्तथैव द्विबिंदुमध्यगं द्रष्टव्यम् वाग्मिनि लोहितेन हते जातमुष्णगोः रूपम् यथा वाग्मिलोहित-योर्मध्ये वह्निवाय्वोरेककेवलंबिंदुस्तथैवद्विबिंदुरुष्णगुः। वाग्मिनि विधुना हते जातं पातस्य रूपम् । यथा वाग्मिविध्वोर्मध्ये-वह्निजलयोरेकैकंकेवलंबिन्दुस्तथैव द्विबिन्दुपातः ॥ सौरौ लोहितेन हते जातं तीक्ष्णांशो रूपं यथा सौरिलोहितयोर्मध्ये भूवाय्वोरेकैकंकेवलंबिन्दुस्तथैव द्विबिन्दुस्तीक्ष्णणांशुः । सौरौ विधुना हते जात सूरे रूपम् यथा सौरिविध्वोर्मध्ये भूजलयो-रेकैककेवलं बिन्दुस्तथैव द्विबिन्दुःसूरिः ॥

अथ लोहिते । विधुना हते जातं बोधनस्य रूपम् । यथा लोहितविध्वोर्मध्ये वायुजलयोरेकैककेवलबिन्दुस्तथैवद्वि-बिन्दुर्बोधनः ॥ एवं सप्तबिंदुरूपिभ्यः षड्बिंदुरूपिणामुत्पत्तिकरणं बहुप्रमाणं वदांति धीराः ॥

---

१ राहोः ।

अथ तृतीयप्रकारेण पंचबिंदुसप्तबिंदुरूपिभिरष्टाभिः षड्बिंदुरूपिणामष्टानामुत्पत्तिमाह ।

तत्र शीतांशोः पंचबिंदुरूपिणां तथा सौम्यात्सप्तबिंदुरूपिणामुत्पत्तिः स्यात् ॥ यथा न्यासः अत्र सौम्याद्वह्नेरेकं बिंदुं गृहीत्वा शीतांशुवह्निस्थाने योजिते जातं कवेः रूपम् । तथा सौम्योपि वाग्मी स्यात् । पुनः सौम्याद्वायोरेकं बिंदुं गृहीत्वा शीतांशुवायुस्थाने योजिते जातमारस्य रूपम् । तथा सौम्योपि लोहितः स्यात् । सौम्याज्जलस्यैकं बिंदुं गृहीत्वा शीतांशुजलस्थाने योजिते जातं दैत्यार्चितस्य रूपम् तथा सौम्योपि विधुः रूपः स्यात् । पुनरपि सौम्याद्भुव एकं बिंदुं गृहीत्वा शीतांशुभूस्थाने योजिते जातोवक्रः[1] तथा सौम्योपि सौरिः स्यात् ॥

यथाक्रमेण सर्वेषां न्यासः ।

॥ शीतांशौ चैकबिन्द्वाधिक्ये कृते पंचबिंदुरूपिणः । तथा सौम्ये न्यूनैकबिन्दौ कृते सति जाताः सप्तबिंदुरूपिणः ॥ एवं शीतांशुसौम्याभ्यां पंचसप्तबिंदुरूपिण अष्टावुत्पाद्य पुनरेभ्योऽष्टरूपिभ्यः षड् बिंदुरूपिण उत्पादयेत् । यथा वाग्मिनि आरेण हते जातं सूरे रूपम् । पुनर्वाग्मिनि दैत्यार्चितेन हते जातं तीक्ष्णांशोः रूपं । वाग्मिनि वक्रेण हते जातं बोधनस्य रूपम् लोहिते दैत्यार्चितेन हते जातं मंदगस्य रूपम् । पुनर्लोहिते वक्रेण हते जातं पातस्य रूपम् । अथ विधौ वक्रेण हते जातमुष्णगो रूपम् ॥ एवमष्टाभ्यः पंचसप्तरूपिणोपि भवंति परं तु तेषां चात्र प्रयोजनं नास्ति येषां षडबिंदुरूपिणां प्रयोजनमस्ति त एवाऽस्माभिः प्रकाशिताः ॥ किं च शीतांशुसौम्याभ्यामष्टौ रूपिणः समुत्पन्नास्तथाष्टभ्यः षड्बिंदुरूपिणः समुत्पद्यंत इति पारंपर्यमिदं गुरोः ॥ तथाहि शीतांशुःसर्वरूपिणां

---

[1] वक्रो राहुः ।

पिता सौम्यश्चमाता पुंस्त्रीभ्यामष्टौ बालाः समुत्पन्नास्तेष्वपिपंचबिंदुरूपिणः।शीतांश्वंशास्तथा सप्तबिंदुरूपिणः सौम्यांशाः संतीतितेषामन्यानां शेषाः षड्बिंदुरूपिणः शिशवो ज्ञातव्याः॥ इमे षड्बिंदुरूपिणः शीतांशुसौम्ययोः पौत्राः इति पूर्वोक्तव्याख्यानेन शीतांशुसौम्यरूपिभ्यां षड्बिंदुरूपिणामुत्पादनप्रकारचतुष्टयं मनसि समागतम् ॥ किं चैकः प्रकारः साधारण्येनैव सर्वरूपिणां सांगत्ये षड्बिन्दुरूपिणामुत्पादनं पूर्वोक्तं मया । तथैतत्प्रकारत्रयम् । एषां चतुर्णां मध्ये पूर्वोक्तः प्रकारोऽनाश्रितः । किमर्थं व्यर्थमेव । सर्वेषां सांगत्ये व्यक्ताव्यक्तरूपिणामुत्पन्नत्वात् । संप्रति यत्प्रकारत्रयमुक्तं तत्तु साश्रितं समानाधिकरणं विद्धि । पारंपर्यमिदं गुरोरित्युक्तत्वात् ॥ यदिदं मया प्रकाशितमस्मिञ्छास्त्रे सर्वरूपिणामुत्पादनं तत्कस्मिन्नपि ग्रंथे नास्तीति । तस्मादिदं सम्यक्प्रकारेणाभ्यस्तव्यम्।इदं गोप्यं प्रयत्नेन दुर्जनेभ्यश्च सर्वदा ॥ गोपनाद्वेदविज्ञाता ध्रुवं भवति मानवः ॥ १ ॥

इति श्रीभयभंजनशर्म्मकृतौ रमलरहस्यसारसंग्रहे प्रथमप्रकरणस्य तृतीयोऽध्यायः ॥ ३ ॥

---

# अथ द्वितीयप्रकरणम् २.

## प्रथमोऽध्यायः ।

अस्मिन्नध्याये रमलज्ञपृच्छकरमलस्थानतत्पातनसमयानां लक्षणमस्ति ।

### तत्रादौ रमलज्ञलक्षणमाह ।

रमलशास्त्रे कृताभ्यासः सत्यवादी जितेंद्रियः ॥ मितभाषी तथा निष्ठी जपध्यानपरायणः ॥ १ ॥ परान्नं परवादं च स्वीकरोति न यो नरः ॥ सदैव शुभवक्ता च क्रीडाहास्यविवर्जितः ॥ २ ॥ सुरां निंदां च पैशुन्यं परद्रव्यं परस्त्रियम् ॥ पशुहिंसां च दुष्टत्वं सर्वदा

संत्यजेत्सुधी ः ॥ ३ ॥ विज्ञाता गुप्तवस्तूनां तदा भवति साधकः ॥ यदैवं सर्वदा तिष्ठेद्धूर्तत्वं नैव कारयेत् ॥ ४ ॥ यद्यपि सर्वत्र भेद विज्ञाता स्यात्तथापि श्रीश्वरेण दत्तमिति रमलज्ञः स्वमनसि जानातु ॥ तथापि निश्चयपूर्वकं श्रीश्वरं प्रति वदेत् भोईश किमप्यहं न जानामीति सत्यंसत्यं वदामि दीनो दासो मंदश्चाहं तवचरण-गतोस्मि यत्त्वया ज्ञापितं तदेव जानाम्यहम् । सर्वभेदज्ञाता त्वमेवासि ॥ इति ज्ञात्वा सदा तिष्ठेज्जपध्यानपरायणः ॥ प्रश्नवेलां समासाद्य पुनरेवं वदेत्सुधीः ॥ १ ॥ श्रीश्वरो यदीच्छेत्तदेव कारयेत् । तस्येच्छया सर्वं कार्य्यादिकं भविष्यतीति प्रश्नसमये रम-लज्ञः पृच्छकं प्रति वदेत् । रमलं पातयित्वा यथोक्तफलमेव ब्रूयान्नतु स्वात्मयुक्त्या कदापि । तथेदमपि ज्ञात्वा रमलज्ञः प्रश्नं वदेत् । यद्वा-क्यं गुप्तत्वेन कथ्यमानं यच्च प्रकटत्वेन तत्कस्यापि भेदं केनापि सह परस्त्रीगमनवार्तां चोपद्रवं नो वदेत् । तथा चौरहृतवस्तूनां प्रश्नो-त्थवाक्यं गोप्यत्वेन न तूर्णं प्रकटत्वेन ब्रूयात् । गोप्यवस्तूनां सर्व-भेदविज्ञाता श्रीश्वर इत्युक्तत्वात् यदि कोपि प्रष्टाऽऽगत्य रमलज्ञाग्रे वदेद्भो यथैव त्वया कथितं तथैवजातमिति । स्वात्मीयवाक्यं श्रुत्वा रमलज्ञः स्वाहंकारं नैव कुर्यादपि तु तत्रैवं वदत्विदं श्रीश्वरेच्छितं तत्कृतं तेनैव । वयं किमपि न जानीमः ॥ अथ कश्चिदागत्य वदे-द्भोरमलज्ञ त्वया कथितं तत्सर्वमनृतं जातमिति श्रुत्वा स्वमनसि ग्लानतान्नानयेत् । तत्रापि ब्रवीतु श्रीश्वरो यदीच्छाति तत्करोतीति । एवमेव ध्रुवं भविष्यतीति कदाचिदपि प्रतिज्ञा नैव कर्तव्या परंतु श्रद्धाभक्तिसमन्वितो नम्रत्वेन शास्त्रोक्तमेव वाक्यं वदतु न तु स्वयु-क्त्या । तर्हि सर्वः प्रश्नः तथ्यमायायात् ॥

### अथ पृच्छकलक्षणम् ।

रम्यतले भूभागे संपूज्य ग्रहगणं च रमलज्ञम् ॥ पश्चात्प्रश्नविधानं कुर्याद्येनाप्नुयात्सिद्धिम् ॥ १ ॥ पूर्वाह्णे प्राङ्मुखः प्रष्टा शुचिः संहृ-

ष्टमानसः ॥ कृतदेवनमस्कारो हिरण्यफलसंयुतः ॥२॥ दत्त्वा कालविदे पश्चात्प्रश्नं पृच्छेद्यथेप्सितम् ॥ दैवज्ञाग्रे स्थितः प्रष्टा तत्परो विनयान्वितः ॥ ३ ॥ अपिच ॥ प्रष्टा मणिकनकयुतः फलसुमै राशिचक्रमभ्यर्च्य ॥ पृच्छेद्यथाभिलषितं भक्त्या विनयान्वितं प्रश्नम् ॥ ॥ ४ ॥ एवम् ॥ अभक्तो रिक्तपाणिश्च दैवज्ञं यस्तु पृच्छति ॥ प्रश्नो न तथ्यतां याति यदि शम्भुः स्वयं वदेत् ॥ ५ ॥ एवं रमलपातनसमये रमलज्ञप्रष्टारौ द्वावपि पवित्ररूपावपेक्षितौ तत्रेतस्ततो वार्ता नो प्रचारणीया ॥ केवलं श्रीश्वरभक्त्या रमलज्ञस्तु स्वेष्टमूलमंत्रं जपन्तं च ध्यायन्नमलं पातयेत् ॥ अथ वेदमंत्रं पठेत् ॥ ॐ वियुंसिल्लाहिअवल्लीहिअमंधविरकायचिलिचिलिश्रमहानिसिभागे गुहमंदिरे स्वाहा ॥ अथ वा सहस्रशीर्षेति पठेत्षडंगं कवचं वा ॥

अथ रमलपातनस्थानमाह ।

सपादद्वयहस्तं दीर्घं तदर्द्धं विस्तृतं स्निग्धं काष्ठपीठं कृत्वा तस्योपरि वालुकां प्रसारयेत् ॥ यत्र गंगातीरे केषां चिद्गतिर्न तथा केषां चिज्जीवानां पादचिह्नं न स्यादेतादृशं पवित्रं स्थानं चेत्ततः कुमारो द्वादशाब्दादधस्थवयाः पवित्रत्वेन वालुकामानयेत्सा वालुका पीठयोग्या नान्या ॥ तस्मिन् वालुकायुतपीठे चंद्रमलं[1] पातयेत् । तर्हि प्रश्नस्तथ्यतां यायादसंशयम् ॥

अथ प्रश्नसमये रूप्युत्पत्तिकरणमाह ।

तत्षड्विधम् । तत्रादौ प्रथमः प्रकारः । पूर्वोक्तविध्युक्तपीठोपरि षोडशपंक्तिरेखां किंचित्तिर्यक्स्थतोर्द्ध्वयुतां कारयेत्सा पंक्तिपंक्ति प्रति सप्तभिर्न न्यूना द्वादशभिर्नाधिका स्यात् विना गणनया कृता चेत्प्रातःकाले दीर्घरेखा स्थाप्या यथा ॥ मध्याह्ने किंचिद्दीर्घमुखा अपराह्णे लघुतरा यथा एवं षोडशपंक्तिरेखां कृत्वा

१–चन्दनमलमिति पुस्तकान्तरीयः पाठः ।

धीमानत्र स्थिरचित्तत्वेन पश्येत् ॥ पंक्तिचतुर्भिरेको रूपी षोडश पङ्क्तीनां चत्वारो रूपिणः स्युः ॥

तत्करणोपायमाह ।

प्रथमपंक्तिरेखासु द्वाभ्यां २ भक्ते शेषे चंद्रमिते केवलः । शून्ये च युग्मो वह्निस्थाने स्थापनीयः । एवं द्वितीयादिष्वपि ज्ञेयः । द्वितीयपंक्तेः केवलो युग्मो वा प्राप्तमानस्तदधो वायुस्थाने स्थापनीयः । तृतीयपंक्तेः केवलो युग्मो वा जलस्थाने चतुर्थपंक्तेः केवलो युग्मो वा भूस्थाने स्थाप्यः।एवमधोऽधस्थापने चतुर्भिः पंक्तिभिरेको रूपी स्यात् । तथा षोडशपंक्तीनां चत्वारो रूपिणस्तैर्यथाक्रमगतैश्चतुर्भी रूपिभिः शेषानुत्पादयेत् । अथ द्वितीयप्रकारमाह । तस्मिन्पीठे ये चतुष्पंक्तिबिंदवस्ते च पंक्तिपंक्तिं प्रति त्रयोविंशतेर्न न्यूनाः पंचचत्वारिंशत्तो नाधिकाः कर्तव्याः॥यतस्त्रयोविंशतिबिंदुषु वक्ररूप्युत्पत्तिस्तथा पंचचत्वारिंशतिके वाग्मी ⁞ शेषा मध्यस्थबिंदुभिरुत्पद्यन्ते । अत्र केचिद्वदंति पंक्तिपंक्तिं प्रति पंचचत्वारिंशतिकान्न्यूनं नैव कार्य्यं चाधिक्यं समीचीनं यतो रूपिणां प्रथमो वाग्मी ⁞ सम्भवतीति ॥ उदाहरणम् ॥ चतुष्पंक्तिबिंदुभिश्चत्वारो रूपिणः स्युस्तद्यथा । प्रथमपंक्तौ द्वाभ्यां २ भक्ते शेष एकबिंदुस्तदा स वह्निस्थाने स्थापनीयः । यदि च द्वितीयपंक्तौ द्वाभ्यां भक्ते पूर्णं

| | |
|---|---|
| ·१·१·१·१·१·१·१·१·१·१·१·१·१·१·१ | ३१ |
| ·१·१·१·१·१·१·१·१·१·१·१·१·१·१·१ | ३० |
| ·१·१·१·१·१·१·१·१·१·१·१·१·१·१·१·१ | २९ |
| ·१·१·१·१·१·१·१·१·१·१·१·१·१·१·१ | २८ |

स्यात्तदायुग्मो वह्निस्थाने स्थापनीयः । पुनस्तामेव प्रथमां पंक्तिं चतुर्भिर्भजेत् शेषं चैकं त्रयः १ । ३ स्युस्तदा वायुस्थाने केवलश्चेच्छून्यं द्वौ चे द्युग्मः स्थाप्यं पुनस्तद्वत्तामेव प्रथमपांक्तिमष्टाभिर्भक्ते शेष एकादिसप्तावधि विषमश्चेत्तदा जलस्थाने केवलबिंदुसमं शून्यं चेद्युग्मः स्थाप्यः । पुनरपि तामेव प्रथमपंक्तिम् १६ कलाभिर्भजेत

शेष एकादिपंचदशपर्यंतानि विषमानि स्युस्तदा भूस्थाने केवलो यदि चेच्छून्यं समो वा युग्मः स्थापनीयः । एवं प्रथमपंक्तिबिंदुभिरेको रूपी संभवति तद्वच्चतुष्पंक्तिभिश्चत्वारो रूपिणः स्युः यथात्रोदाहरणं तथैव कृते प्रथमपंक्तिबिंदुभिः शीतांशुः द्वितीयपंक्तौ सौम्यः तृतीयपंक्तौ वाग्मी चतुर्थपंक्तौ लोहितः एवं पंक्तिचतुर्भिश्चत्वारो रूपिण उत्पद्यंते तैश्चतुर्भिश्च शेषानुत्पादयेत् ॥ तच्च वक्ष्यमाणम् ॥

अथ बर्बरदेशीयं तृतीयप्रकारमाह ।

पूर्वोक्तप्रकारे कर्तव्ये प्रश्नसमयोऽतीतो भवतीति तदर्थं झटित्येवैकं रूपिणमुत्पाद्येष्टकाले पश्चाच्छेषानुत्पादयेत यतः स्वेष्टकालसमुद्भवरूपिभिः प्रश्ने तथ्यतां यायात् । तथा हि । प्रश्नकाले तस्मिन्काष्ठपीठे धनुराकृतिरेखा कार्या तस्यां विना गणनयोर्द्ध्वे लघ्व्यो रेखा यावत्यः स्युस्तावत्यः कर्तव्याः परंतु षोडशभिर्न न्यूनाः तदनंतरं तस्मिन्समूहे कलाभिः १६ भजेत् । शेषा रूपिक्रमेषु प्रथमादिषु दातव्याः यत्रैवं संख्यापूर्णतां यायात्स एव रूपी ग्राह्यः । पुनस्तस्मिन्नेव रूपिक्रमे सप्तमसप्तमरूपी ग्राह्यश्चैवं चतुरो रूपिण उत्पाद्य तैश्चतुर्भिः शेषानुत्पादयेत् ॥ उदाहरणम् ॥ धनुराकृतौ चतुर्विंशतिरेखा २४ ष्षोडशभक्ते शेषं वसवः ८ प्रकृतिक्रमे दत्तेऽष्टमःप्राप्तो लोहिताख्यः तस्मादपरे त्रयः सप्तसप्त रूपिणः एभिश्चतुर्भिः क्रमशः शेषरूपिण उत्पद्यंते प्रश्नकाले । तथाहि प्रकृतिक्रमः १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
इयं रीतिबर्बरदेशीयानां त एवं वदंति पूर्वोक्तप्रकारेण प्रश्नकालोऽतीतःस्यादतो झटित्येवैकं रूपिणमुत्पाद्य तेन शेषानुत्पादयेत्तर्हि रमलप्रश्नस्तथ्यतां यायात् ॥

अथ लग्नतश्चतुर्थप्रकारमाह ।

विलग्ने बद्धाः खेटाः खेटेषु च रूपिणो निबद्धाः ॥ रूपिषु च मान-

सिकं शुभाशुभं सर्वजंतूनाम् ॥ १ ॥ उक्तं च । मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाभृतोः ॥ बुधः कन्यामिथुनयोः प्रोक्तः कर्कस्य चंद्रमाः ॥ २ ॥ स्यान्मीनधन्विनोर्जीवः शनिर्मकरकुंभयोः ॥ सिंहस्याधिपतिः सूर्यः कथितो गणकोत्तमैः ॥ ३ ॥ तथा च लग्नानयनम् ॥ शङ्कुर्यंगुलको ज्ञेयस्त्रिच्छायासमयोजितः ॥ चतुष्षष्ट्या हरेद्भागं लब्धं दंडं स्थितं पलम् ॥ ४ ॥ छायापादे रसो ६ पेतैरेकविंशशतं १२१ भजेत् ॥ लब्धांकैर्घटिका ज्ञेयाः शेषांकैश्च पलाः स्मृताः ॥५॥ घटीप्रश्नस्तु कर्तव्यो मनुष्याणां त्रिभिर्यदा ॥ अंशमिष्टघटी ज्ञेया तस्या लग्नं प्रसाधयेत् ॥ ६ ॥ तरणिव्योममध्यस्था धिष्ण्यसंख्या नगो ७ निता ॥ नख २० घ्ना नव ९ भिर्भक्ता गता रात्रिः स्फुटा भवेत ॥ ७ ॥ गता घटीः षड्गुणिता युक्ताः संक्रान्तिवासरैः ॥ एकीकृत्य हरेत्रिंशच्छेषे लग्नस्य निर्णयः ॥ ८ ॥ एवं तात्कालिकं लग्नं संसाध्य लग्नाधिपं विचिंतयेत् ॥ यदि दिने प्रश्नस्तदा लग्नेशश्च दिवारूपी चेद्रात्रौ निशारूपी च ग्राह्यः ॥ एष च दिवारात्रिविभागो रूपिणां वक्ष्यमाणः । तदेकं रूपिणं प्रथमगृहे तनुस्थाने संस्थाप्य पुनः पूर्ववत् क्रमेषु विलोक्य तस्मात्सप्तमं सप्तमं रूपिणं गृहीत्वा क्रमशो द्वितीयादिगृहेषु चतुर्थपर्यंतेषु स्थापयेत् । एवं तन्वादिचतुरः स्थाप्य पुनरेभ्यः पंचमादीनुत्पादयेद्यथा प्रथमगृहरूपिणो वह्निमुखं गृहीत्वोर्द्ध्वं स्थापयेत् । तथा द्वितीयगृहरूपिणो वह्निमुखं तदधस्तृतीयगृहरूपिणो वह्निमुखं तदधश्चतुर्थगृहरूपिणश्च तदधः स्थापयेत् ॥ एवम् प्रथमादिचतुर्णां वह्निमुखाऽधोधःस्थापने पंचमगृहरूपीप्रश्नकाले स्यात् ॥ एवं प्रथमादिचतुर्णां वायुमुखाद्गृहीत्वा क्रमशोऽधोधः स्थापने षष्ठगृहरूपी तथैव तेषां जलमुखाद्गृहीत्वा अधोधः स्थापने सप्तमगृहरूपी स्यात् ॥ पुनस्तेषां भूमुखाद्गृहीत्वाधोधः स्थापने ऽष्टमरूपी स्यात् ॥ एवं तन्वादिचतुर्भ्यः पंचमादीनुत्पाद्य पुनरेभ्योऽष्टाभ्यो नवमादीनुत्पादयेद्यथा प्रथमद्वितीययोर्वह्निमुखं गृही-

स्वोर्द्ध्वं स्थापयेत् । एतदुक्तं भवति ॥ यद्युभयोर्वह्निमुखौ केवलौ बिंदू स्यातां तदा द्वाभ्यां केवलाभ्यामेको युग्मः स्थाप्यः । यदि चेदुभयस्थाने युग्मस्तदा द्वाभ्यां युग्माभ्यां एको युग्मश्चेदेकस्थाने केवलः एकस्थाने युग्मः स्यात्तदा युग्ममपास्य केवल एव स्थाप्यः एवं नवमगृहरूपिणो वह्निस्थानं विरच्य प्रागीत्या प्रथमद्वितीययो-र्वायुमुखं गृहीत्त्वा तदधः स्थापयेत् । तथैव तयोर्जलमुखं तदधः पुनर्भूमुखं गृहीत्वा सर्वेषामधः स्थापयेत् । एवं प्रथमद्वितीयाभ्यां नवमो रूपी भवति । तथैव तृतीयचतुर्थाभ्यां दशमः । पंचमषष्ठा-भ्यामेकादशः । सप्तमाष्टमाभ्यां द्वादशो रूपी चैवं तन्वादिद्वादश रूपिणः समुत्पाद्य त्रयोदशादीनुत्पादयेत् यथा नवमोरूपी कर्तव्यस्तथा नवमदशमाभ्यां त्रयोदश एकादशद्वादशाभ्यां चतुर्दश-स्तद्वत्त्रयोदशचतुर्दशाभ्यां पंचदशः १५ प्रथमपंचदशाभ्यां षोड-शो रूपी भवति । उदाहरणम् । एवं तन्वादिषोडशरूपिणः समु-त्पाद्य क्रमशस्तन्वादीनां शुभाशुभं फलं वाच्यं प्रश्नकाले ॥

अथ पञ्चमप्रकारमाह ।

रमलज्ञः षट्कपर्दिका गृहीत्वा मंत्रं पठित्वा प्रागुक्तपीठे पातये-त्तासां मध्ये यद्येकोर्द्ध्वमुखा स्यात्तदा चंद्रमुखः समयो ज्ञेयश्चेद् द्वेऊर्द्ध्वमुखा बुधस्य । तिस्र उर्द्ध्वमुखाः शुक्रस्य । चतस्र ऊर्द्ध्वमुखाः सू-र्यस्य । बाणोर्द्ध्वमुखा भौमस्य।षडूर्द्ध्वमुखा षडधोमुखाः शनेः समयो ज्ञेयः ॥ एवं षट्कपार्दिकाशकं पातयित्वा ग्रहसमयं विज्ञाय दिवारात्रिविभागेन ग्रहबद्धं रूपिणं गृह्णीयात् ॥ प्रागुक्तवद्रूपिक्र-मेषु विलोक्य तस्मात्सप्तमं रूपिणं गृहीत्वा चतुष्टयं तैश्च शेषानु-त्पादयेत् ॥

अथ षष्ठप्रकारमाह ।

| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|
| १२ | | | ११ | १० | | ९ | |
| | १४ | | | | | १३ | |
| | | | १५ | १६ | | | |

सर्वेभ्यः पाशकपातनं श्रेष्ठं यतः प्रश्नकालोऽतीतो न स्याद्रमलज्ञोपि नो व्यग्रचित्तः । यतश्चैकवारमेव चत्वारो रूपिणः समुत्पद्यंत इति प्राचामिदं संमतम् । तथाहि आदौ चतुरस्रा लघवो वसु ८ मिताः पाशकाः कर्तव्यास्तेषां चैकैकस्य चतुरस्रे शीतांशुसौम्ययो श्चिह्नं कारयेत् । यथा । प्रदक्षिणक्रमेण प्रथमास्रे युग्मद्वयेः ः द्वितीयास्रे युग्मकेवले ः. तृतीयास्रे युग्मद्वयसम्मुखे द्वे केवले : चतुर्थास्रे युग्मकेवलसम्मुखे केवलयुग्मे ः. लेखनीये चैवं सर्वान्विधाय पृथक् पृथक् चतुः पाशकानामेकसूचिकायां ग्रथनं कर्तव्यं प्रश्नकाले तु तेषु पाशकेषु रूपिक्रमं निधाय पातयेदेवं वारैकेण पाशकैश्चत्वारो रूपिणः समुत्पद्यंते तैश्च शेषान् विभावयेत् ।

अथ किंचिद्विशेष उच्यते । प्रथमादिचत्वारि १ २ ३ ४ मातृगृहाणि पंचमादिचत्वारि ५ ६ ७ ८ दुहितृगृहाणि नवमादिचत्वारि ९ १० ११ १२ दौह्त्रीगृहाणि चैषां त्रयोदशादिचत्वारि १३ १४ १५ १६ साक्षीभूतानि ज्ञेयानि । विशेषतस्तु त्रयोदश रमलघटः । चतुर्दशो रमलदर्पणः पंचदशो रमलतुला षोडशो रमलजिह्वा ज्ञातव्या एवं तत्समग्रे स्फुटं कथयिष्यामि । अथ रमलपातनसमयविवरणम् ॥ मेघच्छन्ने तुषारपतनेऽह्नि देवे वर्षति जपार्चनकालेऽजादिस्थले क्षीणे चंद्रे अपराह्ने त्रिकाले समचंद्रांशे

द्वाविंशातिचंद्रांशादग्रे चंद्रसूर्योपरागे दिग्यांतारिक्षक्षित्युत्पातोद्भवे पर्वणि विष्ट्यां तिथिवारनक्षत्रोद्भवकुयोगे क्रूरदिनेऽधिमासे दिग्दाहे रात्रौ च रमलं नो पातयेत् ॥ उक्तंच ॥ आरूढे द्विरदे रथेऽथ तुरगे पाषाणगे बंधने नौकायां पथि मध्यगे सुचलिते क्रोधान्विते वैरसे ॥ उच्छिष्टे दिनशेषरात्रिसमये ब्रूयान्न प्रश्नं,बुधो वाच्यं प्रश्नमनित्यतां भयदिने श्रोता ध्रुवं विंदति ॥१॥ नूनं मासेषु विषमतिथिवारनक्षत्रयोगकरणचंद्रांशेषु विशेषतश्चंद्रांशेष्वेव पूर्णे चंद्रे मध्याह्नादर्वाक् सुयोगे वारेशे स्फुटकरणे स्थिरचित्ते प्रसन्नकाले सुस्थिते रमलपातने प्रश्नस्तथ्यतां यायात्॥विषमेष्वपि समेषु च विशेषतो निंद्येषु चंद्रांशेषु कदाचिदपि रमलं नो पातयेत् ॥ उक्तं च॥त्रि ३ पंच ५ षोडशां १६ आश्वि २४ पावकेन्दु १३ महीदृशः २१ ॥ पंचविंशति २५ चंद्रांशाः शुभे कर्मणि नेक्षिताः ॥ १ ॥ त्र्य ३ ष्ट ८ कामा १३ भूत १४ * त्र्यक्षि २३ पिंडै २८ रिन्दुंशकैर्नसत् ॥ फलं लोका वदन्तीह मूलं दृष्टं न कुत्रचित् ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे द्वितीयप्रकरणस्य प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

अस्मिन्द्वितीये रूपिणां क्रमा आवश्यकाः संति रमलज्ञा बहुतरां रूपिक्रमान् चतुःसप्तत्युत्तरशतत्रयान् ३७४ कथितवंतः । केचिच्च षण्णवति ९६ मितान् केचिच्चतुर्विंशतिकान् २४ तेषां मध्ये ये बहुसमीचीनास्ते जनैरभ्यसिता एव बहुपरीक्षिता मुख्यकर्मयोग्याः सद्यः फलदा रहस्या रुपिक्रमा अस्मिञ्छास्त्रे अस्माभिरुच्यन्ते ॥ तत्रादौ प्रकृतिक्रमः सर्वेभ्यः श्रेष्ठो बहुप्रमाणयुतः अस्योपरि पश्चिमदेशीयाः यूनानखुरासानबर्बरतुरुष्ककुस्तानमिसिरदेशीयाः प्रश्नं कुर्वंति ॥

---

* ष्टभूपट इति खपुस्तकपाठः ।

अथैषां प्रथमादिगृहेषु स्थानहेतुमाह ।

तत्रादौ वाग्मी प्रथमगृहे कथं प्राप्त । इति तस्मिन् रूपिणि केवलवह्निबिंदुं विना नत्वन्येषां केवलबिंदुरस्ति ॥ पुनर्वह्निमुखोपि स इह चतुस्तत्त्वानां मध्ये प्रथमगणना वह्नेरतो वाग्मीनं प्रथमगृहे स्थापितः । तीक्ष्णांशुर्द्वितीयगृहे कथं प्राप्त इति गृहं तु धनस्थानं द्रव्यादीनां प्रवेशस्य तथायमपि रूपी प्रवेशी चास्ति नाम्ना कर्मणा तस्मात् तस्मिन् गृहे स्थापितः ॥ यद्वा इह तत्त्वक्रमे वह्निवायुजलभुवो मेषादिराशिक्रमे तु वह्निभूवायुजलानिसंतीति तत्त्वक्रमे वह्न्यग्रे वायुः ॥ अथ राशिक्रमे वह्न्यग्रे भूरत्र तीक्ष्णांशौ वायुभुवोरपि केवलबिंदुस्त एनं विना षोडशरूपिणामेतादृशः कोपि नास्ति ॥ यस्मिन्नुभयं यथा क्रमाभ्यां वायुभुवोः केवलबिंदू स्यातां तस्मात्तीक्ष्णांशुरेव द्वितीयगृहे स्थापितः ॥ अथ पातः कथं तृतीयगृहे प्राप्त इति । गृहं तु निकटगमनस्य निष्कासनस्य च । तथायमपि रूपी निर्गमो नाम्ना कर्मणा च गमनादिषु निर्गमसंबंधोस्ति तस्मादेष तृतीयगृहे स्थापितः ॥ अथ सौम्यश्चतुर्थगृहे कथं प्राप्त इति । गृहं तु भूमुखं तथायमपि रूपी भूमुखो यथा–तत्त्वेषु पृथ्वी गरीयसी सकलेषु वसुबिंदुभिः सौम्यस्तद्वत्तस्मात्सौम्यः चतुर्थगृहे स्थापितः ॥ अथ दैत्यार्चितः पंचमगृहे कथं प्राप्त इति । गृहं तु पुत्रादीनां रूपिणां रूपी शुक्रस्य । शुक्रो यदि वा चन्द्रः पंचमं यदि नेक्षते तदा पुत्रस्य पृच्छायां पुत्रो नास्तीति कथ्यत इति वचनाद्दैत्यार्चितः पंचमगृहे स्थापितः ॥ अथ मंदगः षष्ठगृहे कथं प्राप्त इति गृहं तु रोगित्वबद्धवतोर्बद्धालयस्य च तथायमपि रूपी विचारांशे यवनसंस्थाननिरम्बुकूपपानबद्धोष्टादीनामिति बधादिसंबंधात्स षष्ठगृहे स्थापितः ॥ अथ सौरिः सप्तमगृहे कथमिति गृहं हठकर्मणः ॥ प्रथमगृहस्य च व्यत्ययफलदम् तथायमपि रूपी विचारांशे हठादीनां

स्वीकारे वाग्मिव्यत्यययांकितः प्रकृत्या चापि तस्मात्स ⁝ सप्तमगृहे स्थापितः ॥ अथ लोहितोऽष्टमगृहे कथं प्राप्त इति । गृहं तु भयमार्गभीकलिमरणयुद्धादीनां तथायमपि रूपी विचारांशे रणशस्त्रयुद्धरुधिरप्रक्षेपोपद्रवकलिप्रभृतीनां तस्मात्सोऽ ⁝ ष्टमगृहे स्थापितः ॥ अथविधुर्नवमगृहे कथं प्राप्त इति गृहं तु विद्यास्त्रधर्मनिश्चयप्रवासादीनां तथायमपि रूपी विचारांशे पवित्रवस्तुश्वेतवर्णपवित्रपीठविद्यानिश्चयपवित्रताप्रचलितजलादीनामिति प्रचलितजले प्रवाससंबंधात्स ⁝ नवमगृहे स्थापितः॥अथोष्णगुर्दशमगृहे कथं प्राप्तः गृहं राज्यमहत्वप्रतिष्ठोच्चताविजयादीनां तथायमपि रूपी विचारांशे बलिष्ठनायकत्वप्रतिष्ठापरमपदवीनृपप्रभृतीनां यथागृहाणां सूर्यो राजा तस्मात्स ⁝ दशमगृहे स्थापितः॥ अथ सूरिरेकादशगृहे कथमितिगृहमाशाभाग्योदयमनोभिप्रायप्रभृतीनां तथायमपि रूपी विचारांशे शुभ्रत्वभाग्योदयप्रभृतीनामतः स एकादशगृहे स्थापितः ॥ अथवा सूरौ भूजलयोः केवलबिंदू स्तो नूनं सर्वाशा जलभूभ्यां सिद्ध्यंति ॥ यथा वाटिकाक्षेत्रस्वयानपरिधानादयस्तदाशासंबंधात्स ⁝ एकादशगृहे धृतः ।

अथ वक्रो द्वादशगृहे कथमिति ।

गृहं शत्रुचतुष्पदकुकर्मप्रभृतीनां तथायमपि रूपी विचारांशे निषिद्धभयान्वितगालिप्रदातृकुकर्मकर्तॄणां, ध्रुवमेभिर्जनैः शत्रुत्वमुत्पद्यते तस्मात्स ⁝ द्वादशगृहे स्थापितः ॥ अथवायं रूपी निशायुतो दिवसस्येयं रात्रिर्दुष्टा तस्मादथवायं रूपी केतोः स च सर्वखेचराणां शत्रुस्तस्माच्छत्रुगृहे योग्योस्ति ॥ उक्तंच ॥ ग्रहा ग्रासभयाद्यस्य सृष्टिमार्गे भ्रमंति हि ॥ केतुर्दुष्टश्च सर्वेषां सर्वे केतोश्च शत्रव इति।

अआरस्त्रयोदशगृहे कथमिति ।

गृहं ग्राहकस्य तथा रूपी चापि विचारांशे ग्राहक एव तथा हि व-

क्ष्यमाणसंख्याक्रमेऽयं रूपी ⁝ गुणकत्वेन यं गुण्यं रूपिणं गुणयाति तत्फलं गुण्यरूपिणो ग्राहको वा ग्राह्यरूपी भविष्यतीति॥ यदा गुण्यरूपी ग्राहकस्तदा फलरूपी ग्राह्यस्तदा फलरूपी ग्राहको न तु गुण्यफले द्वेपि केवलग्राहके वा ग्राह्ये भविष्यतः । अतएव ग्राहकसंबंधात्स आरस्त्रयोदशगृहे धृतः ॥

अथ कविश्चतुर्दशगृहे कथमिति ।

गृहं ग्राह्यवस्तु नस्तथायमपि रूपी विचारांशे क्रीडाप्रसन्नतासुजीवनभोगसुखपुष्टत्वप्रभृतीनां नूनमेतानि वस्तूनि ग्राह्याणि तस्मात्स ⁝ चतुर्दशगृहे स्थापितः ॥

अथ बोधनः पंचदशगृहे कथमिति ।

गृहं नीतिकर्तुस्तथायमपि रूपी विचारांशे धर्मवेत्तृसर्वज्ञत्वनीतिकर्तृत्वप्रभृतीनामतस्स ⁝ पञ्चदशगृहे स्थापितः ॥

अथ शीतांशुः षोडशगृहे कथमिति ।

गृहं परिणामस्य परिणामे तु वस्तुनो विकारत्वं वा कुत्रापि गमनत्वं तथायमपि रूपी विचारांशे परिणामकोर्था न्यविकारगमनप्रभृतीनामत एवायं ⁝ ॥ षोडशगृहे स्थापितः ॥ अथ किंचिद्विशेष उच्यते ॥ पूर्वाचार्या अस्मात्प्रकृतिक्रमाद्वह्न्यादितत्त्वानां वसुमितान्सोपानान्कथितवन्तस्तानत्राह॥यैर्ज्ञातैः प्रष्टुर्मनोभिप्रायं वदेत् ॥

अथ सोपानचक्रम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | अंकाः |
|---|---|---|---|---|---|---|---|---|
| ० — — — | ० — ० — | ० ० — ० | ० — — ० | ० ० — — | ० ० ० — | ० — ० ० | ० ० ० ० | अग्नि. सो. |
| — ० — ० | ० ० — ० | — ० — — | ० ० — — | ० ० ० — | — ० ० ० | — ० ० — | ० ० ० ० | वायु. सो. |
| ० — ० — | — — ० — | — — ० ० | ० ० ० — | ० — ० ० | — ० ० ० | — ० ० — | ० ० ० ० | जल. सो. |
| — ० — ० | ० ० — ० | ० — — ० | — — — ० | — — ० ० | ० — ० ० | — ० ० ० | ० ० ० ० | भू० सो. |

यथा वह्निवायुजलभूनां पृथकपृथक् वसुमिताः सोपानाः संतीति

चक्रे दृष्टव्यम् ॥ प्रयोजनमाह । प्रागुक्तरीत्या रमलं पातयित्वा तस्य तुलासंज्ञके पंचदशगृहे वह्न्यादितत्त्वानां केवलबिंदुं विलोक्य तमुप र्य्युपरि प्रचालयेत् ॥ यथा आदौ पंचदशगृहे बिंदुमवलोक्य तत्सदृश-मेवोपरि दक्षिणांशे त्रयोदशगृहे वामांशे चतुर्दशगृहे विलोकयेत् ॥ उभयोर्मध्ये तादृग्बिंदुर्यत्र भवेत्तस्मादुपरि विलोकनं कार्य्यम् तथाहि ॥ त्रयोदशे रूपिणि बिंदुश्चेत्तदा चोपरि नवमदशमयोर्मध्ये यदि नवमे तदोपरि प्रथमद्वितीययोर्मध्ये यदि चेद्दशमे स बिंदुस्तदा तृतीयचतुर्थयोर्मध्ये विलोकयेत् ॥ एवं त्रयोदशगृहाद्बिंदौ प्रचा-लिते सति यत्र प्रथमादिचतुर्षु गृहेषु तत्सदृशं बिंदुं प्राप्नुयात् तत्रैव विचारः कर्तव्य ॥ यदि चतुर्दशे स बिंदुश्चेत्तर्हि रुद्रद्वादशयोर्मध्ये रुद्रे सति पंचमषष्ठयोर्मध्ये द्वादशे तु सप्तमाष्टमयोर्मध्ये तं बिंदुं विलोकयेत् ॥ एवं चतुर्दशगृहाद्बिंदौ प्रचालिते सति यत्र पंचमादि-चतुर्षु गृहेषु बिंदुः प्राप्नुयात्तत्रैव विलोकनं कार्यमेवं रमलतुलातः केवलबिंदुं प्रचालयेत् ॥ प्रथमादिमृत्युपर्यंतेषु यत्रावसानं स्यात्तत्रैव प्राज्ञो विचारयेत्॥तथाहि तदवसानरूपिणं तेषु तत्त्वाङ्कसंख्या सो-पानेषु केवलबिंदुमार्गेण विलोक्य तदंकान् गृह्णीयात् संख्यैक्यप्रश्न-रमलप्रथमादिगृहेषु दत्ते यत्रावसानं स्यात्तद्गृहरूपिणो वा प्रष्टुर्मनोभि-प्रायं वदेत् ॥ उदाहरणमुत्पाद्यते । रमलतुलातो १५ वह्निभुवोः केवलबिंदू प्रचालितौ मया तौ च प्रथमगृहरूपिणां परिणामौ जातौ तत्र दैत्यार्चितः स्थितः ⁝ स च तत्त्वसोपानेषु दृष्टः ॥ वह्नितृतीयसोपाने वायोर्द्वितीये भुवश्चापि द्वितीये स्थितत्वात्संख्याः प्राप्ताः ३ । २ । २ अस्मिन् रूपिणि जलस्य केवलबिंदुत्वा-भावान्न गृहीतम् । योगः ७ प्रथमगृहादिषु दत्ते सप्तमगृहेऽवसानं पातमिति तद्गृहाद्रूपिणो वा मनोभिप्रायं वदेत् ॥ एवमन्यत्रापि ॥

अथ तत्त्वसोपानानां प्रकारांतरेण विचारमाह ।

तत्रादौ वह्निसोपानेषु क्रमशो वाग्मी ⁝ पातस्य ⁝ ग्राहकस्तथा पातो

दैत्यार्चितस्य ⁝ स च मंदगस्य ⁝ मंदग उष्णगोः ⁝ अयं वक्रस्य ⁝ वक्रः आरस्य ⁝ स च शीतांशोः ⁝ ग्राहको ज्ञेयः॥ एवं वायुजलभूसोपानेषु पूर्वस्था रूपिणः परस्थानामुत्तरोत्तरग्राहका ज्ञातव्याः॥ तथा हि चक्रे द्रष्टव्यम् ॥ अथैषां प्रयोजनम् ॥ यत्पूर्वोक्तं वाग्मिप्रभृतिशीतांशुपर्य्यंतं रूपिणां क्रमस्तेषां त एव ग्राहका ज्ञेयाः॥ चेत्प्रश्न रमलस्य प्रथमगृहे वाग्मी ⁝ यत्र कुत्रापि पातः ⁝ समागतः स्यात् तदा पातस्य गृहविचारांशैः प्रष्टुर्मनोभिलषितं वदेत् ॥ यदि पातः कुत्रापि नो समागतः स्यात्तदा प्रवासिप्रश्नं वाऽनायासजं मनोभिप्रायं वदेत्॥

अथ द्वितीयसोपानचक्रम् ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| o——— | o—o— | oo—o | o——o | oo—— | ooo— | o—oo | oooo | अ. | वह्निग्राहकाः |
| o—o— | oo—o | o——o | oo—— | ooo— | o—oo | oooo | o——— | | सोपानग्राहकाः |
| —o—o | oo—o | —o—— | oo—— | —ooo | —oo— | ooo— | oooo | | वायुग्राहकाः |
| oo—o | —o—— | oo—— | —ooo | —oo— | ooo— | oooo | —o—o | व. | सोपानग्राहकाः |
| o—o— | ——o— | ——oo | ooo— | o—oo | —ooo | —oo— | oooo | ज. | सो. ग्राहकाः |
| ——o— | ——oo | ooo— | o—oo | —ooo | —oo— | oooo | o—o— | | पानीयग्राहकाः |
| —o—o | oo—o | o——o | ———o | ——oo | o—oo | —ooo | oooo | पृथ्वी | भूम्याग्राहकाः |
| oo—o | o——o | ———o | ——oo | o—oo | —ooo | oooo | —o—o | पृथ्वी | भूमिग्राहकाः |

एवं सर्वेषां स्वगृहस्य रूपिणां ग्राह्यरूपिणः प्रश्नरमलेषु यत्र कुत्रापि स्युस्तदा तद्गृहविचारांशैः प्रष्टुर्मनोभिप्रायं वदेत् चेद्यदि कुत्रापि नो समागतास्युस्तदा प्रवासिप्रश्नं वा अनायासजं मनोभिप्रायं वक्तव्यमिति स्वगृहस्था ग्रहाः यथा बलयुतास्तथा रूपिणामपि । अत्र प्रकृतिक्रमे शीतांशुमारस्थाने त्रयोदशगृहे तथाऽरं च षोडशगृहे शीतांशुस्थाने केचिद्वदंतीति ॥ प्रकारद्वयमिति बहुप्रमाणं यतोऽ

स्मिन्प्रक्रमातिक्रमे शुभरूपिणः शुभगृहेषु अशुभरूपिणोऽशुभगृहेषु तिष्ठंति ॥ एतद्रूपिणां गृहाणां च शुभाशुभत्वं वक्ष्यमाणं वर्त्तते ।

अथ किंचिद्विशेष उच्यते ।

प्रथमगृहादिषु द्वादशपर्य्यंतेषु चरस्थिरद्विस्वभावेषु वारचतुष्टयं समावृत्य संज्ञास्युरेभिः प्रष्टुः प्रश्नकारणं प्रश्नभेदं मनोभिप्रायं प्रश्नसिद्ध्यसिद्धित्वं च वदेत् । एवं चत्वारश्चरास्तथास्थिराद्विस्वभावाश्च॥

अथैषां हेतुमाह ।

यः प्रथमचरस्वामी वाग्मी ≡ तं प्रश्नत्रयोदशगृहस्थरूपिणा गुणयित्वा फलं स्थापयेत् पुनः प्रश्नाद्यगृहस्थरूपिणं पंचमगृहस्थेन गुणयित्वा फलं च स्थाप्यम् ॥ पश्चाद्वाभ्यां फलाभ्यामेकमुत्पादयेत् ॥ अनेन प्रष्टुर्मनोभिप्रायं वदेत् ॥ इति प्रष्टुर्मनोभिप्रायकथनम् ॥

अथ प्रश्नहेतुकथनमाह ।

| चर | स्थिर | द्विस्व. | चर १ | स्थिर | द्विस्व. | चर १ | स्थिर | द्विस्व. | चर १ | स्थिर | द्विस्व. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ० — — — | — ० — ० | ० — ० — | — — — — | ० ० — ० | ० — — ० | — — — ० | — ० — — | — — ० — | ० ० — — | — — ० ० | ० ० ० — |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| के. | प. | आ. | के. | प. | आ. | के. | प. | आ. | के. | प. | आ. |

यो द्वितीयचरस्वामी सौम्यः ≡ तं प्रश्नचतुर्दशगृहस्थरूपिणा गुणयित्वा फलं भिन्नं पुनः प्रश्नचतुर्थगृहस्थरूपिणमष्टमगृहस्थेन गुणित्वा फलं च स्थाप्यम् पश्चात्फलाभ्यामेकंरूपिणमुत्पाद्य तेन प्रश्नकारणं वदेत् ॥ अथ प्रश्नभेदकथनं यस्तृतीयचरस्वामी ≡ सौरिस्तं प्रश्नपंचदशगृहस्थरूपिणा गुणयित्वा फलं भिन्नम् ॥ पुनः प्रश्नसप्तमगृहस्थरूपिणमेकादशगृहस्थेन गुणयित्वा पश्चात्फलाभ्यामेकमुत्पाद्य तेन प्रश्नभेदं वदेत् ॥

---

१–चत्वारः केन्द्रास्तथा पणफरा आपोक्लिमाश्च एवमग्रेऽपि चरस्थिरद्विस्वभावस्थाने एताः संज्ञा बोध्याः ।

अथ प्रश्नसिद्ध्यसिद्धित्वमाह ।

यश्चतुर्थकेन्द्रस्वामी चोष्णगुः तं प्रश्नषोडशगृहस्थरूपिणा गुणयित्वा फलं गृहीत्वा ग्राह्यम् । पुनः प्रश्नदशमगृहरूपिणा चतुर्गृहस्थेन गुणयित्वा फलं गृहीत्वा पश्चात्फलाभ्यामेकरूपिणमुत्पाद्य तेन प्रश्नसिद्ध्यसिद्धित्वं वदेत् ॥एवमस्मिन्प्रकृतिक्रमे केन्द्रादिभिः प्रष्टुर्मनोभिप्रायप्रश्नकारणभेदसिद्ध्यसिद्धित्वं वदेत् ॥ एषां चतुर्णां प्रश्ने मुख्याधिकाराः संतीति । उदाहरणम् । यः प्रथमकेन्द्रस्वामी वाग्मी तत्रोदाहरणे त्रयोदशस्थदैत्यार्चितेन हते सति फलं तीक्ष्णांशुः पुनरत्रोदाहरणे प्रथमगृहे दैत्यार्चितेः पंचमगृहस्थेनारेण हते फलं बोधनः फलाभ्यां यातः सूरिः अनेन प्रष्टुर्मनोऽभिप्रायं वदेत् ॥ यथायं रूपी प्रकृतिक्रमे रुद्र ११ गृहस्वामी तद्गृहन्तु भाग्योदयधनागमनयोर्वाच्यम् । इति मनोभिप्रायकथनम् ॥ यो द्वितीयचरस्वामी सौम्यः तं प्रश्नचतुर्दशगृहस्थेन वाग्मिना हते फलं वाग्मी एवं पुनः प्रश्नचतुर्दशगृहस्थपातं मृत्युभवनस्थवाग्मिनाः हते फलं विधुः फलाभ्यामेकः पातः अनेन प्रश्नकारणं वदेत् । यथायं रूपी प्रकृतिक्रमेण तृतीयगृहस्वामी तद्गृहन्तु भ्रातृगोत्रकुटुंबप्रभृतीनामतो भाग्योदयधनागमनयोः प्रश्नः परन्तु भ्रातृगोत्रकुटुंबानां निकटस्थितानां प्रसंगेनेति प्रश्नकारणं वाच्यम् ॥ इति प्रश्नकारणकथनम् ॥

यस्तृतीयचरस्वामी सौरिः तं प्रश्नपंचदशगृहस्थेन तीक्ष्णांशुना हते फलं लोहितः पुनः प्रश्नसप्तमगृहस्थं सूरि मेकादशस्थेन सूरिणा हते फलं सौम्य फलाभ्यां यातो लोहितः अनेन प्रश्नभेदं वदेत् यथायं रूपी प्रकृतिक्रमेऽष्टमगृहस्वामी तद्गृहन्तु प्रवासिद्रव्यमातृपितृवित्तानामतो भाग्योदयधनागमनयोः प्रश्नः। परन्तु निकटस्थानां गोत्रजानां प्रसंगेनेति प्रश्नकारणं तथा प्रवासिद्रव्यं वा पितृधनं वा मातृवित्तमितिप्रश्नभेदः । इति प्रश्नभेदकथनम् ॥

यश्चतुर्थश्चरस्वामीह्युष्णगु ⁝ स्तं प्रश्नषोडशगृहस्थेन वाग्मिना ⁝ हते फलं लोहितः ⁝ पुनः प्रश्नदशमस्थं सौम्यं ⁝ चतुर्दशस्थेन वाग्मिना हते ⁝ फलं वाग्मी ⁝ फलाभ्यां यातउष्णगुरनेन ⁝ प्रश्नसिद्ध्यसिद्धित्वं वदेत् ॥ यथायं रूपी ⁝ शुभो बलाधिको विचारांशे मांडलिकभूपतिप्रभृतीनामतो भाग्योदयधनागमनयोः प्रश्नः । परन्तु निकटस्थानां गोत्रजानां प्रसंगेनेति प्रश्नकारणम् प्रश्नभेदस्तु॥ प्रवासिद्रव्यं वा मातृपित्रोर्द्धनसिद्ध्यासिद्धित्वं तु शुभत्वेन स्वबाहुबलेन वा देशपातिसहायाद्भूपतिसहायाद्वाप्रश्नसिद्धिः स्यादिति वक्तव्यम् । एवमन्यत्रापि प्रश्नसमये यथोक्तक्रमेण प्रष्टुः प्रश्नकारणं भेदसिद्ध्यसिद्धित्वं ब्रूयात् । एषां चतुर्णां प्रश्ने मुख्यत्वमस्ति तस्मादेतद्रहस्यं कस्मै चिन्नो दद्यात् ॥

उक्तं च ।

यस्मै कस्मै न दातव्यमभक्ताय शठाय च॥शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत्॥ १॥यस्मै किंचिन्नदातव्यं तस्मै देयं किमुत्तरम्॥ अद्य प्रातः पुनः प्रातःप्रातःप्रातःपुनःपुनः ॥ २ ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहेःप्रकृतिक्रमो नाम द्वितीयप्रकरणस्य द्वितीयोऽध्यायः २॥

---

अथाबजदक्रम नामा-

## तृतीयोऽध्यायः ।

तत्राकारादिक्रमेण संख्या । अ १ ब २ ज ३ द ४ योग १० यद्यप्यत्र दशभ्योऽग्रे गणना षोडशपर्य्यंतं प्रचलति। तथापि गणितवृत्तौ प्रयोजनमस्ति। अकारादयो वह्न्यादितत्त्वेषु क्रमशः स्थापनीयाः । यथा वह्नावकारो वायौ वकारो जले जकारो भुविदकारः ॥ इत्यऽबजदक्रमेण वाग्मिप्रभृतयः प्रथमादिगृहेषु स्थापिताः सन्त्यतोऽवजदक्रमं नाम तथाहि ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ अथ वाग्मिप्रभृतयः प्रथमादिगृहेषु कथं प्राप्ता इत्यत आह तत्रादौ वाग्मिनि

वह्निकेवलबिंदुंविनाऽपरेषां केवलबिंदुर्नास्तीति ॥ वह्नेरेकासंख्या १ अबजदमतेन । तस्मात्तं प्रथमगृहे स्थापयेत् ॥ अथ लोहिते वायुबिंदुं विना अपरबिंदुर्न तिष्ठतीत्यबजदमतेन वायोर्द्वे २ संख्ये तस्मात्तं द्वितीयगृहे स्थापयेत् ॥ अथ विधौ केवलजलबिंदुं विना परबिंदुर्नास्तीति तस्य तिस्रः ३संख्यास्तस्मात्तं तृतीयगृहे स्थापयेत् अथ सौरौ केवलभूबिंदुं विना अपरबिंदुर्न तिष्ठतीति तस्याश्चतस्रः ४ संख्या अबजदमतेन । अतस्तं चतुर्थगृहे स्थापयेत् ॥ अथ मंदगे वह्निभुवोः केवलबिंदुं विनाऽपरं नास्तीति वह्नेरेका १ संख्या अबजद-मतेन । तथा भुवश्चत्वारो योगे याता पंच तस्मात्स पंचमगृहे धृतः अथ तीक्ष्णांशौ वायुभुवोः केवलबिंदुं विनाऽपरबिंदुर्नास्ति वायोर्द्वयं तथा भुवश्चत्वारो योगे याता षट् ६ तस्मात्स षष्ठगृहे धृतः ॥ अथ दैत्यार्चिते वह्निवायुभूनां केवलबिंदवस्तिष्ठंतीति तेषां संख्यायोगे जाताः सप्त ७ मितास्तस्मात्स सप्तमगृहे स्थापितः ॥ अथारे वह्निजलभूनां बिंदवस्तिष्ठंतीति तेषां संख्या वसु ८ मितास्तस्मात्सः अष्टमगृहे स्थापितः ॥ अथ कवौ वायु-जलभूनां बिन्दवस्तिष्ठंतीति तेषां संख्या ९ नव । अतस्स नवमगृहे स्थापितः ॥ अथ शीतांशौ सर्वतत्त्वानां केवलबिंदवस्तिष्ठंति तेषां संख्या १० अत एव स दशमगृहे स्थापितः ॥ अथोष्णगौ वह्निवाय्वोर्बिंदू तिष्ठतस्तयोस्त्रि ३ संख्या अत्रैवं विद्धि प्रथमादि षोडशपर्य्यंतानां गृहाणां विभागः कर्तव्यो यथा प्रथमादिवसुपर्यंतं पूर्वार्द्धं तथा नवमादिषोडशपर्य्यन्तमुत्तरार्द्धं तत उत्तरार्द्धमार्गेण तृतीयगृहमेकादशं तस्मात्स एकादशगृहे धृतः ॥ अथ पाते वह्निजलयोर्बिन्दूस्तस्तयोश्चतस्रः संख्या अतस्स उत्तरार्द्धाच्चतुर्थे द्वादशगृहे धृतः ॥ अथ बोधने वायुजलयोर्बिन्दू स्तस्तयोः पंचमिताः ५ संख्यास्तेनोत्तरार्द्धात्पंचमे त्रयोदशगृहे स स्थापितः ॥ अथ वक्रे वह्निवायुजलानां बिंदवस्तेषां षट् ६

संख्यास्तेनोत्तरार्द्धात् षष्ठे चतुर्दशगृहे स ⁝ धृतः ॥ अथ सूरौ जलभुवोर्विंदू तिष्ठतस्तयोः सप्त ७ मिता संख्या तेनोत्तरार्द्धात्सप्तमे पंचदशगृहे स ⁝ धृतः ॥ अथ सौम्ये तथैकोपि बिंदुर्नास्ति किं कर्तव्यमिति । प्रथमादिषु रूपिषु स्थापितेषु रूपिषु शेषसौम्यगृहेषु च शेषं षोडशगृहमतस्स ⁝ षोडशगृहे स्थापितः ॥ अथ ग्रंथांतरे अ व ज द गृहरूपिणः प्रकारांतरेण स्थापिताः संतीति ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ प्राग्वदत्रापि रूपिणां स्थानत्वं गृहेषु विद्धि परन्तु सौम्यमेकादशगृहे स्थापयंतीति विशेषः ॥ अथ पाश्चिमदेशीया अस्मिन्क्रमोपर्यैव रमलाभ्यासं कुर्वन्ति ॥ तथाहि ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ । अथ यत्पूर्वोक्तं मया वह्नेरेको वायोर्द्वयमम्बुनस्त्रयं भुवश्चतुष्टयमेषां हेतुमाह । यश्चतुरस्त्राविंदुः पुरा शिवाशिवयोरग्रे चन्द्रात्पतितस्तस्य चत्त्वारो बिंदवस्तेष्वेको वह्नेरतो वह्नेरेका संख्या १ यदि वायुर्वह्निना सह कर्तव्यस्तदा द्वयमतो वायोर्द्वे संख्ये चेज्जलं वह्निवायुभ्यां सह कारयेत्तदा त्रयमतोऽबुनस्त्रिस्रः संख्या एवं यदि भुवं वह्न्यादित्रिभिः सह कारयेत्तदा चत्वारः ⁝ अतो भुवश्चतस्रः संख्या यद्वा वह्निस्तथा वायुजले भूमिरेकादिगण्या पुनरेवगण्याः हारास्तु तेषां ग्रह ९ दिग्भ १० वा ११ श्च सूर्या १२ स्तथा वह्निमुखादिकानां १ यत्र वह्न्यादीनां संख्यैक्यहारेण हृते शेषे वह्नेरेकं वायोर्द्वयमंबुनस्त्रयं भुवश्चतुष्टयमिति । इदमवजदक्रमे प्रकारांतरेण कथयिष्ये ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे अबजदक्रमो नाम द्वितीयप्रकरणस्य तृतीयोऽध्यायः ३

## अथ चतुर्थोऽध्यायः ।

अथावदहक्रमस्य विवक्षितत्त्वाच्चतुर्थाध्यायः तत्राकारस्यैको १ वकारस्य द्वयं २ दकारस्यचत्वारो ४ हकारस्याष्टौ ८ संख्या यथा-

१अवजदक्रमम्

२

न्यासः १, २, ४, ८, योगः १५ अयं क्रमः सर्वक्रमेभ्यः श्रेष्ठस्तथा हि … ॥

अथैषां प्रथमादिगृहेषु स्थानहेतुमाह ।

तत्रादौ वाग्मी प्रथमगृहे कथमिति अवदहवर्णैः क्रमशस्तत्त्वानां संबंधो ज्ञेयः । अकारादयो वह्न्यादिषु युक्तत्वाद्वह्नेरेको १ वायोर्द्वे २ पुनश्चतस्रो ४ भुवो वसवः ८ संख्याः एषां हेतुमाह-सर्वतत्त्वेभ्यो वह्निः क्षुद्रस्तस्माद्वह्नेरेका संख्या वह्नेर्वायुर्गुरुतरस्तस्माद्वह्निर्द्विघ्नोऽतस्तस्य द्वौ-वायोर्जलं गुरुतममतो वायुर्द्विघ्नमतस्तच्चतस्रसंख्या जलाद्भूर्गुरुतरा तस्माज्जलद्विघ्ना वसुसंख्या भुवो ज्ञेया

| अग्नि | वायु | जल | भू | तत्त्वा. | ० |
|---|---|---|---|---|---|
| १ | २ | ३ | ४ | गृह | द्वा. |
| ५ | ६ | ७ | ८ | मरा | द्वा. |
| ९ | १० | ११ | १२ | गृ. | द्वा. |
| १३ | १४ | १५ | १६ | गृ. | द्वा. |
| २८ | ३२ | ३६ | ४० | यो. | गा. |
| ९ | १० | ११ | १२ | द्वा | रा. |
| १ | २ | ३ | ४ | शे | षा. |

अत्र वाग्मिनि वह्नेः केवलबिंदुरस्ति तस्यैका संख्या … तस्मात्स प्रथमगृहे स्थापितः ॥ अथ लोहितो द्वितीयगृहे कथमिति वायोः केवलबिंदुरस्ति तस्य द्वे संख्ये तस्मात्स … द्वितीयगृहे धृतः ॥ अथोष्णगुस्तृतीयगृहे कथं तस्मिन्नुष्णगौ वह्निवाय्वोः केवलबिंदवस्तयोस्तिस्रः संख्यास्तस्मात्स … तृतीयगृहे स्थापितः ॥ एवं शेषरूपिणां शेषगृहेषु स्थानत्वं विद्धि ॥ तथाकृते शीतांशुः पंचदशगृहे योग्योस्ति यतः सर्वतत्त्वानां केवलबिंदवस्तेषां पंचदश १५ मिताः संख्या इति अथ गृहेषुशेषषोडशगृहरूपिषु शेषे सौम्यस्तस्मात्स … षोडशगृहे धृतः॥

अथ प्रश्नसमये रूपिणां विशेषफलमाह ।

रूपिषु चतुस्तत्त्वानां यथासंख्ये नैसर्गिकबले च मूलत्वं बिंदुरूपम् । तथाहि । वह्निवायुजलभुवो यथासंख्यमिति नैसर्गिकबलं तु वह्नेर्वायुर्गुरुतरो वायोर्जलं जलाद्भूर्गुरुतरा ज्ञेया ॥ अत्र स बिंदुर्द्विविधः दृश्यो गुप्तश्च । दृश्यो द्विधा केवलयुग्मभेदात् । गुप्तश्चापि तथा यथासंख्यनैसर्गिकबलभेदात् ॥ दृश्ये युग्मबिंदुफलं बद्धं भवेद्य-

दिति केवलबिंदोस्तु विमोचनं स्यादिति फलम् ॥ तत्र वह्न्यादिषु दर्शनकथनमेलननिषेधरूपाणि फलानि क्रमशः संतीति ॥ यस्मिन् तत्त्वस्थाने युग्मबिंदुः स्यात्तत्फलं बद्धं विद्धि यत्र च केवलबिंदुस्तत्फलं विमोचनं प्रकाशरूपं स्यात्कोर्थस्तत्फलं सिद्धिं प्राप्नुयात् ॥ अत्र रूपिणो युग्मकेवलबिंदुसंख्यादीर्घता ज्ञेया यथा शीतांशोर्दीर्घत्वे चतस्रः ४ संख्याः सौम्यस्य वसवः ८ एवं सर्वरूपिणां दीर्घत्वं विद्धि ।

अथ अवदहानां दीर्घादिचक्रम् ।

| ० — — — | — ० — — | ० ० — — | — — ० — | ० — ० — | — ० ० — | ० ० ० — | — — — ० | ० — — ० | — ० — ० | ० ० — ० | — — ० ० | ० — ० ० | — ० ० ० | ० ० ० ० | — — — — | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ७ | ६ | ७ | ६ | ५ | ५ | ७ | ६ | ६ | ५ | ६ | ५ | ५ | ४ | ८ | दीर्घाः |

अथ गुणयोस्तावत्संख्यामाह ।

ऊर्ध्वतः प्रथमस्थानस्थितत्वात् वह्नेरेका संख्या । द्वितीयस्थानस्थितत्वाद्वायोर्द्वे । तृतीयस्थानस्थितत्वादंबुनस्तिस्रः चतुर्थस्थानस्थितत्वाद्ध्रुवश्चतस्रः संख्या ज्ञेयाः ॥ इति यत्पूर्वोक्तं मया अवदहक्रमे प्रकारांतरेण कथयिष्यामि तत्त्विदमेव । यथोक्तविधिना केवलयुग्मबिंदूनां संख्यारूपिणो विस्तारत्वं विद्धि । यथा सौम्यस्य विंशतिः २० चक्रे द्रष्टव्या ।

अथ नैसर्गिकबलमाह ।

अथ वायुप्रभृतिभ्यो वह्निः क्षुद्रस्तस्मात्तस्यैका १ संख्या । वह्नेर्वायुर्गुरुतरस्तस्मात्तस्य वह्निद्विघ्नतः संख्याद्वयी २ । वायोर्जलं गुरुतममतो वायुद्विघ्नी चतस्रः ४ संख्यास्तोयस्य । जलाद्भूर्गुरुतरातस्माज्जलद्विघ्नीसंख्या वसु ८ मिता भुवो ज्ञेया ॥

अथ अद्दहपंक्तीनां रूपिपुष्टचक्रम् ।

| ० — — — | — ० — — | ० ० — — | — — ० — | ० — ० — | — ० ० — | ० ० ० — | — — — ० | ० — — ० | — ० — ० | ० ० — ० | — — ० ० | ० — ० ० | — ० ० ० | ० ० ० ० | — — — — | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २९ | २८ | २७ | २६ | २५ | २४ | २३ | २२ | २१ | २० | १९ | १८ | १७ | १६ | १५ | ३० | पुष्टानि. |

१ रेखया द्वयोर्ग्रहणम् । २ बिन्दुना चैकस्य ग्रहणम् ।

अथ अद्वहरूपिणां विस्तारचक्रम् ।

| | | | | | | | | | | | | | | | | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १९ | १८ | १७ | १७ | १६ | १५ | १५ | १६ | १५ | १४ | १३ | १३ | १२ | ११ | १० | २० | विस्तारः |

इति केवलयुग्मबिंदूनां संख्यारूपिणः पुष्टत्वरूपा भवंति । यथा शीतांशोः पंचदशमिता १५ सौम्यस्य त्रिंशन्मिता ३० संख्या एभिर्गुप्तवस्तूनां प्रश्नसमये दीर्घत्वं तथा विस्तारत्वं पुष्टत्वं च वदेत् । यथाग्रे कथयिष्यामि ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्यसारसंग्रहे अबदहक्रमंनामद्वितीयप्रकरणस्य चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ विजदहक्रमनामा—

पंचमोध्यायः ।

तत्र वकारस्य द्वे संख्ये जकारस्य७संप्तमिता दकारस्य४ चतस्रो-हकास्य ८ वसुमिताः ८ संख्या ज्ञेया न्यासः ॥ २ । ७ । ४ । ८ ॥ योगे चैकविंशतिमिताः २१ । इमे चत्वारो वर्णा वह्न्यादि-चतुंषु संकलितास्त एवं संख्या ज्ञातव्याः ॥ एकविंशति-संख्यत्वाच्छ्रेष्ठोयं क्रमस्तथाहि ॥ अपदहसंख्या १५ पंच-दशमिता ॥ रूपिणस्तु षोडशमिताः । यदि षोडशं पंचदशघ्नं कारयेत्तदा शून्यवेदद्दशः २४० ॥ अत्र रमलबिंदुसंख्या ९६ युक्ता ३३६।यद्येतान्षोडशगृहेषु दापयेत् तदा प्रतिगृहमेकविंशत्यंकाः प्राप्नुयुः । तथाहि विजदहक्रमेण रूपिण १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ अथैकैकस्य रूपिणो गृहमेवं यस्य रूपिणः संख्याऽवजदहमतेन षोडशाधिकाः स्युस्तदा षोडशहृते शेषांकान् प्रथमादिगृहेषु दापयेत् ॥ ते तु त्रय एव शीतांशुः दैत्यार्चितः कविः शीतांशोरेकविंशतिः २१ षोडशभक्ते शेषाः पंच ५ तस्मात्तं

पंचमगृहे स्थापयेत् ॥ दैत्यार्चितस्य सप्तदश १७ मिताः संख्याः षोडशभक्ताः शेषे १ एका अतस्तं प्रथमगृहे स्थापयेत् । दैत्यार्चितस्य सप्तदश १७ मिताः संख्याःषोडशभक्तेशेषे १एकस्तंप्रथमस्थानेस्थापयेत् वाग्मिनि ☷ बिंदुरेकस्तस्य संख्या२द्वे अतस्तं द्वितीयगृहे स्थापयेत् कवेरेकोनविंशतिः १९ षोडशभक्ता शेषास्त्रयः ३तस्मात्तं तृतीयगृहे स्थापयेत् । एवं तीक्ष्णांशुं ☶ पंचदशगृहे स्थापयेत् । यतस्तस्य पंचदश संख्याः संभवंति । गृहेषु शेषं षोडशगृहे दत्तम् यद्वा सौम्यो ☰ भूसुखस्तथान्तिमगृहमपि भूसुखमतस्तत्षोडशगृहे धृतम् ॥ अथ विजदहसमत्वे चत्वारि तत्त्वानि कथं यातानि । इत्यत आह । वर्णोच्चारणस्थानक्रमेण विजदहवर्णा वह्निप्रभृतीनां समत्वे तिष्ठंतीति । यथा । उपूपध्मानीयानामोष्ठौ वकारस्योष्ठस्थानं स तु प्रथमस्तस्माद्वकारो वह्निसमत्वे धृतस्तस्य द्वे२संख्ये च । एवं जकारस्थानं जिह्वाग्रं स तु वकारस्थलाद्द्वितीयस्तस्माज्जकारो वायुसमत्वे धृतस्तस्य सप्तसंख्या च तद्वद्दकारस्थानं जिह्वामध्यं स तु जकारस्थलादग्रेऽस्ति तस्मात्स दकारो जलसमत्वे स्थापितः तथा तस्य चतस्रः संख्याः । एवं अकुहविसर्ज्जनीयानां कण्ठ इति हकारस्य कण्ठस्थानं स तु वह्निरूपिवकारस्थानाच्चतुर्थस्थलेऽस्ति तस्मात्स हकारो मूलसमत्वे धृतस्तस्य वसु ८ संख्याः ।

अथ विजदहपंक्तिः ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | ग्रहाः | वि- जद ०४ स. ५ की. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| o o — o | o — — — | — o o o | — — o — | — o o o | o — o — | — o — — | — — — o | o o — — | o — — o | — o o — | — — o o | o o o — | o — o o | — o — o | — — — — | ग्राहकाः | |
| o o o o | o — o — | — o — — | — — — o | o o — — | o — — o | — o o — | — — o o | o o o — | o — o o | — o — o | — — — — | o o — o | o — — — | — o o o | — — o — | ग्राह्याः | |

अथ यद्यपि वक्ष्यमाणसंख्याक्रमेण रूपिणां संख्योत्पत्तिरस्ति तथापि विजदहक्रमेणापि रूपिणां संख्योत्पत्तिर्ज्ञातव्या इति बहवो

वदंति ॥ तद्वत्संख्याक्रमेण यद्यपि रूपिणां ग्राहकग्राह्यविभागोऽस्ति बहुमतयुतस्तथापि विजदहक्रमेणापि ग्राहकत्वं ग्राह्यत्वं च रूपिणां विद्धि । अस्मिन्विजदहक्रमेण रूपिणः पंचमो रूपी ग्राह्यः स्यात्तस्मादेव प्रष्टुर्मनोभिप्रायं वदेत् । यथा । ग्राहकस्य दैत्यार्चितस्य ००—० क्रमपदप्राप्तन्यायेन शीतांशुरूपी ०—०० ग्राह्यप्रश्न-समये प्रथमगृहस्थग्राहकरूपिणो ग्राह्यरूपी यत्र कुत्रापि समा-गतः स्यात्तदा तद्रूपिणो गृहाद्वा प्रष्टुर्मनोऽभिप्रायं वदेत् । यथोदा हरणम् प्रथमगृहे सौरिः ———० स्थितस्तदा मनोऽभिप्रायं सूरिणा ——०० ब्रूयात् एवं सर्वत्रैव ग्राह्यरूपिणा मनोऽभिलषितं वाच्यम् ।

अथ द्वितीयप्रकारेण रूपिणां ग्राहकत्वं ग्राह्यत्वं चाह ।

विजदहक्रमे रूपिणो द्वितीयरूपी ग्राह्यो ज्ञेयः यथा ग्राह-कदैत्यार्चितस्य ००—० वामी ०——— ग्राह्यस्तस्मादेव प्रष्टुर्मनोऽभिप्रायं ब्रूयात् । अत्रापि प्राग्वदेव प्रथमगृहस्थग्राहकरूपिणः प्रश्नरमलेषु यत्र कुत्रापि ग्राह्यरूपी समागतः स्यात् तस्मादेव मनोऽभिप्रायं ब्रूयात् । यथा प्रथमगृहे वाग्मी ०——— तदा कविना —००० मनोऽभिप्रायं वदेत् । "एतद्रहस्यं परमं गोपनीयं प्रयत्नतः । यस्मै कस्मै न दातव्यं साधकाय प्रकाशयेत्" ॥ १ ॥

अथ किंचिद्विशेष उच्यते ।

अस्मिन्विजदहक्रमे प्रमाणरूपा बहवः प्रकाराः संतीति तेष्वेकोयम्

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ००—० | ०——— | —००० | ——०— | ०—०० | ०—०— | —०—— | ———० | ००—— | ०——० | —००— | ——०० | ०००० | ०००— | —०—० | ———— | ग्राहकाः |
| ०—०० | ०—०— | —०—— | ———० | ००—— | ०——० | —००— | ——०० | ०००— | ०००— | —०—० | ———— | ००—० | ०——— | —००० | ——०— | ग्राह्याः |

तेषां विजदहक्रमरूपिणां चत्वारो भागाः कर्तव्याः । तथाहि ००—० ०——— —००० ——०— १ ०—०० ०—०— —०—— ———० २ ००—— ०——० —००— ——०० ३ ०००० ०००— —०—० ———— ४ अत्र प्रत्येकभागबिंदुभिर्द्वौ द्वौ शीतांशुसौम्यावुत्पद्येते तौ तत्र केवलबिंदुभिः शीतांशुयुग्मबिंदुभिः सौम्यौ भवतः ।

अथ द्वितीयः प्रकारः ।

तेषु भागेषु चतुर्षु प्रथमरूपिणं द्वितीयेन सह तृतीयं चतुर्थकेन सह हत्वा फलं तीक्ष्णांशुरेव स्यात्तथा पंचमं षष्ठेन सप्तमं चाष्टमेन नवमं दशमेन पुनरेकादशं द्वादशेन त्रयोदशं चतुर्दशेन पंचदशं षोडशेन सह हत्वा फलं तीक्ष्णांशुरेव ध्रुवं स्यान्नान्यः ।

अथ तृतीयः प्रकारः ।

प्रत्येकचतुर्भागेषु चतुर्विंशतिश्चतुर्विंशतिरेव बिंदवः संति भागे भागे द्वौ द्वौ शीतांशू तथा द्वौ द्वौ सौम्यावुत्पद्येत इति वचनात् ।

अथ चतुर्थः प्रकारः ।

तेषु चतुर्भागेषु भागैकस्य गणनासमूहः ॥ आकाशे सूर्यभ्रमणदिनानां ३६० चतुर्थांशेन ९० सदृशो भवति रविस्तु वर्षैकेनाकाशे द्वादशराशिषु भ्रमति वर्षदिनानि खरसवह्नि३६०मितानि तेषां चतुर्थांशो भवति ९० मितस्तत्सदृशो विजदहचतुर्थभागस्य गणनासमूहो भवति । तथाहि । अत्र चतुर्भागे वह्न्यादीनामंकादिद्विघ्ने संख्या ग्राह्या । यथा । वह्निबिंदुरेका १ वायोर्द्वे २ अंबुनश्चतस्रो ४ भुवो वसुमिताः ८ एवं न्यासः १, २, ४, ८, योगः १५ एवं केवलबिंदुमयस्यैव शीतांशोः पंचदशमिताः संख्यास्तथा भागैक्ये द्विघ्नः शीतांशुस्त्रिंशत् ३० द्वयोः सौम्ययोः षष्टिः ६० तयोर्योगः ९० एवं चतुर्भागानां संख्या खरसवह्निमिता ३६० यातानि सूर्यभ्रमणदिनानि ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे विजदहक्रमन्नाम द्वितीयप्रकरणस्य पंचमोऽध्यायः ॥ ५ ॥

---

अथ संख्याक्रमविवक्षितत्वात्—

षष्ठोऽध्यायः ।

यतो मनोऽभिलषितसिद्धौ दिनावधिं वदेत् । तथाहि । अत्रापि प्रमाणरूपा बहवः प्रकाराश्चतुर्भागे

षु संति १ २ ३ ४ तेष्वेकोयं प्रत्येकं चतुर्भागेषु द्वौ शीतांशू द्वौ सौम्यौ स्तः । प्राग्वदत्रापि भागैकस्य नवतिमिताः ९० संख्याश्चतुर्भागानां खरसवह्नयः ३६० तान्येव सूर्यभ्रमणदिनानि यथा पूर्वोक्तं मया विजदहक्रमे ।

अथ द्वितीयः प्रकारः ।

प्रत्येकभागेषु चतुर्विंशतिश्चतुर्विंशतिव बिंदवः । यथा । विजदहक्रमे प्रोक्तं तथात्रापि ।

अथ तृतीयः प्रकारः ।

वह्निबिंदोरेका १ वायोर्द्वे २ जलस्य तिस्रो ३ भुवश्चतस्रः ४ इति तत्त्वक्रमेण प्रत्येकभागे विंशति २० मिता गणना ।

अथ चतुर्थः प्रकारः ।

वह्न्याद्येकादिद्विघ्नमार्गेण प्रत्येकभागे त्रिंश ३० न्मिता गणना । भागे भागे द्वौ शीतांशुसौम्ययोश्चोत्पन्नत्वात् द्विघ्नमार्गस्तु वह्नेरेको १ वायोर्द्वौ २ जलस्य चत्वारो ४ भुवो वसवः ८ ॥

अथ पंचमः प्रकारः ।

प्रत्येकभागेषु द्वाभ्यां रूपिभ्यां हननफलं तीक्ष्णांशुरेव स्यात् मया यथा पूर्वोक्तम् ॥

अथ षष्ठः प्रकारः ।

अत्र क्रमे दैत्यार्चितप्रभृति सौरिपर्यंतं रूपिणः प्रत्यक्षे प्राप्तास्तथोष्णगुप्रभृति तीक्ष्णांशुपर्यंतं रूपिणः प्रत्यक्षे गुप्ताःसंत्येतच्च वक्ष्यमाणं केचिदस्य क्रमस्य विश्वासं नो कुर्वंति । विजदहक्रममेव संख्याक्रमं कथयंति किं तु संख्याक्रम आरः पंचमगृहे वक्रः षष्ठगृहे शीतांशुः त्रयोदशे गृहे चतुर्दशे पातः पंचदशे, षोडशे सौम्यः तीक्ष्णांशुश्च विजदहक्रमेभ्य एतदेवाधिक्यम् परंतु बहूनां मतेनायं संख्याक्रमः श्रेष्ठः अनेनैव क्रमेण बिंदुव्यवस्थामनोऽभिप्रायप्रश्नसिद्धासिद्धत्वानि ।

तथा रूपिणां ग्राहकत्वं ग्राह्यत्वं च सर्वे वदंति चात्र विजदह-क्रमेभ्यः षड्रूपिण एव व्यत्ययात्तेषां प्रयोजनमाह । संख्या-क्रमे चतुर्भागे प्रथमभागरूपिणः प्रत्यक्षे गुप्तत्वे च प्राप्ताः । द्वितीयभागरूपिणः प्रत्यक्षे प्राप्ताः गुप्तत्वे अप्राप्ताः । तथाहि । तृतीयभागरूपिणः गुप्तत्वे प्राप्ताः प्रत्यक्षे अप्राप्ताः । चतुर्थभाग-रूपिणः प्रत्यक्षे गुप्तत्वे च प्राप्ताः । तथाहि । रूपिषु येषामव-जदमार्गेण बिन्दूत्था संख्या द्वाभ्यां भक्ता शेष एकः स्यात्तदा ते रूपिणः प्रत्यक्षे गुप्तत्वे च प्राप्ताः ॥ यथा प्रथमभागगाः । १ येषामवजदमतेन बिन्दूत्था संख्या द्वाभ्यां भक्ता शेषं शून्यं स्यात्तदा ते रूपिणः प्रत्यक्षे प्राप्ताः गुप्तत्वेऽप्राप्ताः । यथा । २ येषां बिन्दूत्थसंख्या द्वाभ्यां भक्ता शेषे चैका स्यात् तदा ते रूपिणः प्रत्यक्षे अप्राप्ता गुप्तत्वे प्राप्ताः । यथा । ३ तथा तेषां संख्या द्वाभ्यां भक्ता शेषं शून्यं तदा ते रूपिणः प्रत्यक्षे गुप्तत्वे चाप्राप्ताः । यथा । ४ एवं तत्त्वमार्गेण रूपिणश्चतुः प्रकार-कान् विद्धि रूपिणां प्रत्यक्षगुप्तत्त्वयोर्ज्ञानस्य बृहद्भेदोयम् ॥ एभिः प्रश्नसमये मनोऽभिप्रायकथनेविशेषफलं वाच्यम् । एतद्रहस्यं गोपयेत्। "यस्मै कस्मै न दातव्यं गोपनीयं प्रयत्नतः॥एतद्रहस्यरमलं सर्वशास्त्रेषु दुर्लभम्॥१॥"अथ केचिद्वदन्ति । विजदहक्रमेभ्यश्चास्मि-न्क्रमे चत्त्वार एव रूपिणो विपर्ययगाः सन्ति यथा। ५ । ६ । १२ । १४ पूर्वोक्तं मया केचिच्चास्मिन्क्रमे बहुरूपिणो गौणभूतान्वदंति स्वार्थं परित्यज्यपरार्थावलंबने गौणमित्येवं रूपिणः स्वस्थानं परित्यज्य परस्थानेतिष्ठांति। तथाहि । यत्रभागे यु-ग्मेभ्यः केवलोधिकः स केवलगतः केवलो ज्ञेयः।यत्र भागे युग्मकेवलौ समौ स्यातां स युग्मगतः केवलो वा केवलगतयुग्मको ज्ञातव्यः। यत्र भागे केवलेभ्यो युग्माधिकाः स युग्मगतयुग्मको ज्ञेयः । अथ दैत्यार्चितप्रभृति चत्वारो रूपिणः केवलबिंदुगतकेवलाः । तथा

वाग्मिप्रभृति चत्वारो रूपिणो युग्मगतकेवलाः । तद्वत्कविप्रभृति-चत्वारो रूपिणो केवलगतयुग्मकाः।एवं विधुप्रभृतिचत्वारो रूपिणो युग्मगतयुग्मकाः । एभिः संख्याभिः प्रश्ने विशेषफलं वाच्यम् । ये रूपिणः प्रश्नसमये स्वगृहस्थास्ते पूर्णबलयुता ज्ञेयाः । यथा खेटाः स्वोच्चमित्रस्वगृहमित्रगृहेषु बलिष्ठा भवंति ।

अथ प्रश्नसिद्धौ दिनावधिकथनार्थं रूपिणां ध्रुवांकमाह ।

यो रूपी स्वगृहे स्यात्तद्युक्तसंख्यादिनमपि प्रश्नावधौ वदेत् ।तथाहि। दैत्यार्चितस्यैकः ⁝ १प्रथमगृहे संख्या वाग्मिनो द्वितीयगृहे ⁝ त्रयः कवे-स्तृतीयगृहे षट् ६ विधोः ⁝ चतुर्थे १० आरस्य ⁝ पंचमे पंचदश १५ वक्रस्य ⁝ षष्ठगृहे चंद्रदृशो २१ लोहितस्य ⁝ सप्तमेऽष्टाविंशतिः २८ सौरेरष्टमे ⁝ षट् वह्नयः ३६ उष्णगोर्नवमगृहे ⁝ पंचाब्धयः ४५ मंदगस्य ⁝ दशमे पंचपंचाशत् ५५ बोधनस्यै ⁝ कादशगृहे षट्षष्टिः ६६ सूरे ⁝ द्वादशेऽष्टसप्ततिः ७८ शीतांशो ⁝ स्त्रयोदशे चैकनवतिः ९१ पातस्य ⁝ चतुर्दशे पंचोत्तरशतं १०५ सौम्यस्य ⁝ पंचदशे विंशोत्तरशतं १२० तीक्ष्णांशोः ⁝ रसवह्निभुवः १३६ एवं रूपिणामेतानि ध्रुवांकानि दिनांकितानि ज्ञेयानि । अथ यदि कोऽपि ज्ञातुमिच्छेत्कथं प्रथमगृहे दैत्यार्चितस्यै ⁝ १ का संख्या तथा द्वितीये वाग्मिनस्त्रयः ३ पुनस्तृतीये कवेः ⁝ षट् ६ कथ-मित्यादिगृहेषु रूपिध्रुवांकाः कथं याता इत्यत आह । प्रथमतः संख्यावधारण एकोऽकः दैत्यार्चितस्य ⁝ प्रथमगृहे एका संख्या एवं द्वितीयगृहस्य द्वे संख्ये २ यदि ते द्वे दैत्यार्चितेन १ सह कारयेत् तदा त्रयः ३ स्युरतो वाग्मिनो ⁝ द्वितीयगृहे तिस्रः संख्याः। एवं तृतीयगृहस्य तिस्रः ३ संख्याः। यदि ताः ३ वाग्मिना सह कारयेत्तदा षट् ६ स्युरतः कवेः ⁝ तृतीये रसमिताः ६ चतुर्थगृहस्य चतस्रः ४ संख्या यदि ताः कविना६ सह कारयेत्तदा दश १० स्युरतो विधोश्चतुर्थगृहे दश१०

एवं सर्वरूपिणां ध्रुवांका ज्ञातव्याः ॥ यदि चेद्रूप्युक्तदिनावधौ प्रश्न-सिद्धिर्न स्यात्तदा द्वितीयावधिकथनार्थं रूपि समुद्भवांके गृहध्रुव-कान्योजयित्वा द्वितीयावधिं वदेत् ॥

अथ गृहाणां ध्रुवांकाः ।

प्रथमगृहस्य त्रयः ३ द्वितीयस्य षट् ६ तृतीयस्य ९ चतुर्थस्य द्वादश १२ पंचमगृहस्य पंचदश १५ षष्ठस्याष्टादश १८ सप्तमस्यैक-विंशतिः २१ अष्टमस्य चतुर्विंशतिः २४ नवमगृहस्य सप्तविंशतिः २७ दशमगृहस्य त्रिंशत् ३० एकादशस्य त्रयस्त्रिंशत् ३३ द्वादशस्य षट्-त्रिंशत् ३६ त्रयोदशस्यैकोनचत्वारिंशत् ३९ चतुर्दशस्य द्वाचत्वारिंशत् ४२ पंचदशस्य पंचचत्वारिंशत् ४५ षोडशगृहस्याष्टाचत्वारिंशत् ४८ एवं ग्रहाणां त्रिगुणिता ध्रुवांका ज्ञातव्याः । एभिः प्रश्ने द्वितीयावधिं वदेत् । तथा हि । प्रश्ने तद्गृहाश्रितो मनोऽभिप्रायः स्याद्गृहं रूपिणं च पश्येत् । यदि स रूपी स्वगृहे स्यात्तदा तद्रूपिसमुद्भवध्रुवांकेन प्रश्ननिष्पत्तौ प्रथमावधिं वदेत् ॥ पश्चाद्द्वितीयावधिकथनार्थं तस्मिन्न मध्ये तद्गृहध्रुवांकं योजयित्वा नूनं द्वितीयावधिं ब्रूयात् । अत्र किंचिद्विशेष उच्यते । यदि स एव मनोऽभिप्रायरूपी प्रश्नरमलेषु द्वित्र्यादिस्थले समागतः स्यात्तदा तत्र किं कर्तव्यमित्यत आह । चेन्मनोऽभिप्रायगृहात्पश्चात्सोन्वादेशः स्यात्तदातस्मिन्दिनसमूहे

| शु | बृ | शु | चं | मं | बु | मं | श | सू | श | बु | बृ | चं | रा | बु | सू | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | १० | १५ | २१ | २८ | ३६ | ४५ | ५५ | ६६ | ७८ | ९१ | १०५ | १२० | १३६ | रूपिध्रुवाः |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
| ३ | ६ | ९ | १२ | १५ | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | ३९ | ४२ | ४५ | ४८ | गृहध्रुवाः |

अन्वादेशगृहांकं तद्गृहध्रुवांकश्च न्यूनःकार्य्यः यद्यग्रेऽन्वादेशो भवे-त्तदा तस्मिन्दिनसमूहेऽन्वादेशगृहांकस्तद्गृहध्रुवांकश्च योजनीयः ॥ चेद्यदि मनोऽभिप्रायगृहादग्रे पृष्ठे चोभयत्राप्यन्वादेशः स्यात्तदा

तस्मिन्दिनसमूहैर्यथोक्तमृणं धनं कर्तव्यमिति । मनोऽभिप्राय-
रूपी यदि बहुस्थले समागतः स्यात्तत्राप्येवमेव न्यायः कर्तव्यः ।
उदाहरणम् । यथात्र पंचमगृहात्प्रश्नस्तत्रारः ⁝ संख्याक्रमेण स्वगृहे
तिष्ठति । तस्यारस्य पंचमगृहे पंचदशमिता ध्रुवांकास्तथा पंचम-
गृहस्थापित १५ ध्रुवांकयोर्द्वयोर्योगः ३० अत्रारस्यान्वादेशः
षष्ठे षोडशगृहेऽस्त्यतो मनोऽभिप्रायगृहादग्रे तिष्ठत्यतो धनं कार्य्यम् ।

अथ प्रश्नसिद्धिप्रथमोदाहरणम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|
| ९ | | १० | | ११ | | १२ | |
| १३ | | १५ | | १६ | | १४ | |

तथाहि । तत्रादौ षष्ठगृहस्य जातीयसंख्यारस ६ मिता पूर्वोक्त ३०
युक्ता ३६ पुनः षष्ठगृहध्रुवांकोष्टादश १८ युक्तो जातश्चतुः-
पंचाशः ५४ अथात्र षोडशगृहजातीयसंख्या कलात्मिका १६
युक्ता जाता सप्ततिमिता । पुनः षोडशगृहध्रुवकोऽष्टाचत्वारिंश ४८
न्मितस्तत्र युक्तोऽष्टादशोत्तरशतो ११८ यातः । एवमष्टादशो
त्तरशतदिनानामुपरि भो पृच्छक तव प्रश्नसिद्धिर्भविष्यति इति
वाच्यम् अथ चेन्मनोऽभिप्रायगृहात्पृष्टे प्रथमादिचतुःपर्य्यंते
सोऽन्वादेशः स्यात्तदा तस्मिन्मध्येऽन्वादेशः गृहांकस्तद्ग्रह-
ध्रुवांकश्चविहीनः कार्यः एवं विचार्य्य प्रश्नावधिकं वदेत् । अथ
प्रश्नेषु मनोऽभिप्रायं ग्रहरूपी स्वगृहे यदि नो भवेत् तदा किं कर्तव्य-
मित्यतआह ॥ प्रश्नरमलपंचदशगृहपर्यंतानां रूपिणां युग्मकेवल

मिश्रितं बिंदुसमूहं कृत्वा कलाभि १६ र्भजेत् । शेषान् प्रथमगृहा-
दिषु दत्त्वा यत्रावसानं स्यात्तद्गृहरूपिणां गृह्णीयात् । तच्च
वक्ष्यमाणसंख्याक्रमचक्रस्य तिर्यक्पंक्तौ विस्तरिते विलोकयेद्यत्र
भवेत्तत्र निरीक्षणं कर्तव्यमेतदुक्तं भवति पूर्वोक्तशेषांकं संख्या-
चक्रस्योर्ध्वाधः पंक्तौ दीर्घायमाने विभागं कृत्वा यत्रावसानं स्यात्त-
त्सम्मुखे तिर्यक् पंक्तौ पूर्वोक्तरूपिणोऽधः संमुखे दीर्घवि-
स्तारयोर्यस्मिन्कोष्ठके साम्यता स्यात्तत्कोष्ठकांको ग्राह्यः ।
तस्मिन्मध्ये शेषांकावसानगृहस्य ध्रुवकं योजयेत् । तत्समूहं
दिनरूपं प्रश्नावधिं वदेत् । चेद्रमलेषु स एव रूपी कुत्राप्यन्वा-
देशः स्यात् । तदा पूर्ववद्धनमृणं कार्य्यम् । एतदुक्तं भवति । यदि
शेषांकावसानगृहादग्रे सोन्वादेशः स्यात्तदा यस्मिन्गृहे भवेत्त-
द्गृहांकसंख्याक्रमचक्रस्य दीर्घत्वे तद्रूपिसम्मुखस्थं कोष्ठकांकं
गृहीत्वा पूर्वांके धनं कार्य्यमेव । शेषांकावसानगृहात्पृष्ठे सोन्वा-
देशः स्यात्तदा तद्गृहांकसमं कोष्ठकांकं पूर्वांके न्यूनं कर्तव्य-
मिति । अन्वादेशोभयस्थैरुभयं धनमृणं च कार्य्यम् । एवं
विचार्य प्रश्ने दिनसंख्यां वदेत् । तद्यथास्योदाहरणं द्रष्टव्यम्
अत्र प्रष्टा प्रवासिनः प्रश्नं पृच्छति कदागमिष्यतीति । प्रवासिनो
गृहं तु सप्तमं तत्र सप्तमगृहे बोधनरूपी ⁝ प्रवर्तते । अत्र च बोधनः
स्वगृहे नास्ति । अत एव पूर्वोक्तसंख्याचक्रोपरि विचारणीयः ॥
तत्रादौ संपूर्णप्रश्ने रमलस्य युग्मकेवलरूपयोर्बिन्दुसमूहः सप्ताशीति-
८७ परिमितः तस्मिन्समूहे षोडशभक्ते शेषं सप्त ७ परि-
मितं जातं एतच्छेषांके प्रश्नरमलेषु प्रथमगृहादौ विभागे
कृते सप्तमगृहेऽवसानं यातं सप्तमगृहे बोधनः ⁝ रूपी स्थितः
एनं रूपिणं ⁝ पूर्वोक्तसंख्याचक्रस्य विस्तरिते चैकादशगृहे पश्येत् ॥

## अथ प्रवासिप्रश्नः ।

| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|
| १२ | | ११ | | १० | | ९ | |
| १४ | | | १५ | १६ | | १३ | |

## संख्याक्रमपंक्तिचक्रम् ।

| | | | | | | | | | | | | | | | | ० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १ |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १ | २ |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | ३ |
| ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | ४ |
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | ५ |
| १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ६ |
| २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ७ |
| २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ८ |
| ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ९ |
| ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | १० |
| ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ११ |
| ६७ | ६८ | ६९ | ७० | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ | ८२ | १२ |
| ७९ | ८० | ८१ | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० | ९१ | ९२ | ९३ | ९४ | १३ |
| ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | ९८ | ९९ | १०० | १०१ | १०२ | १०३ | १०४ | १०५ | १०६ | १०७ | १४ |
| १०६ | १०७ | १०८ | १०९ | ११० | १११ | ११२ | ११३ | ११४ | ११५ | ११६ | ११७ | ११८ | ११९ | १२० | १२१ | १५ |
| १२१ | १२२ | १२३ | १२४ | १२५ | १२६ | १२७ | १२८ | १२९ | १३० | १३१ | १३२ | १३३ | १३४ | १३५ | १३६ | १६ |

तच्छेषांका दीर्घमार्गेण रूपिसम्मुखे कोष्ठकांकेप्राप्ता ३२द्वात्रिंशत्प-

रिमिताः पुनरत्र सप्तमगृहे ध्रुव २१ युता यातास्त्रिपंचाशत् ५३ परिमिताः । एतत्परिमितदिनोपरि भोः पृच्छक प्रवासी ह्यागमिष्यतीति वक्तव्यम् ॥ अन्वादेशस्योदाहरणं दीयते । अस्मिन्प्रश्नरमले बोधनकस्यान्वादेशः पंचदशगृहे स तु शेषांकावसानगृहाद्ग्रे तिष्ठति तदा पूर्वोक्तसंख्याचक्रस्य पंचदशगृहेषु बोधनकस्य संमुखे कोष्ठकांकः प्राप्तः षोडशोत्तरशत ११६ परिमितः एतत्पूर्वांक-५३ युक्ते १६९ जाताः एतद्दिनोपरि प्रवासी चागमिष्यति । एवं शेषांकावसानगृहात्पूर्वमन्वादेशश्चेत्तदा कोष्ठकांके न्यूनः कर्तव्यः पूर्वांके । अथ केचिद्वदंति । यस्मिन्गृहेऽन्वादेशःस्यात्तदाऽन्वादेशगृहांकस्तद्गृहध्रुवांकश्च शेषांकेन प्राप्तकोष्ठकांके योजनीय इति । यथा त्रिपंचदशगृहे बोधनकस्यान्वादेशो वर्तते तदा तत्र पूर्वांके ५३ पंचदशगृहांके १५ पंचदशगृहध्रुवांके च ४५ युक्ते ११३ जाताः । एवं पूर्वं न्यूनं कार्यं एतद्दिनोपरि वा ११३ प्रवासी चागमिष्यतीति वक्तव्यमित्येकः प्रकारो जातः ॥

अथात्र प्रकारांतरेण ग्रंथांतरोक्तः किंचिद्विशेष उच्यते ।

रमलपातने कृते तस्मिन् रमले कोऽपि रूपी स्वगृहे नास्ति तदा प्रथमगृहप्रभृति षोडशगृहपर्यंतं केवलरूपिबिंदूनामेक एव संख्यासमूहः कर्तव्यः । अथोत्प्रेक्षते यत्रोदाहरणे केवलरूपिबिंदूनामेकत्रिंशत्परिमिता ३१ संख्या प्राप्ता । अत्र षोडशभक्ते शेषाः पंचदश १५ परिमिताः।एवं प्रथमगृहात्पंचदशगृहेषु, यथोदाहरणे शीतांशुरूपिणः प्राप्ताः।अपरसंख्याचक्रस्य दीर्घे पंचदशगृहेशीतांशुसंमुखे कोष्ठकांकः प्राप्तोष्टादशोत्तरशतमितः ११८ पुनः शीतांशोरन्वादेशश्चतुर्दशगृहे स्थितः । तथास्य शीतांशोः प्रकृतिसंबंधरूपी विधुरपि [१] प्रश्नरमले द्वितीयगृहे स्थितस्तदात्र शीतांशोर्वर्तमानोऽन्वादेश एव ग्राह्यः । न तु प्रकृतिसंबंधरूपी विधुरूपी ग्राह्यः । कस्मात् । यदा रूपिणः

१ अब्ददपंक्तिमते ।

स्वरूपान्वादेशो रमलेषु न स्यात्तदाऽन्वादेशस्थाने प्रकृतिसंबंधरूपी ग्राह्य इति वचनात्प्रकृतिसंबंधरूपत्वं रूपिणां वक्ष्यमाणं वर्तते ॥ अत एव विधो रन्वादेशो गृहीतो मया तदन्वादेशरूपस्य शीतांशोश्चतुर्दश १४ गृहे संख्याचक्रसंमतेन कोष्ठकांकाः प्राप्ता वेदोत्तरशत १०४ मिताः एतच्च शेषांकावसानगृहात्पूर्वं स्थितत्वात्पूर्वांकै ११८ र्न्यूनं जातं ऋणे कृते शेषाश्चतुर्दश १४ परिमिताः । भोः पृच्छक चतुर्दशदिनोपरि तव मनोऽभिलषितकार्यसिद्धिःभविष्यतीति । अथवात्र केचिद्वदंति शेषांकावसानगृहकोष्ठकांके तद्गृहध्रुवांका योजनीया इति । यथात्रोदाहरणे शेषांकावसानं पंचदशगृहे जातम् । पंचदशगृहे न शीतांशोः कोष्ठकांकः प्राप्तोष्टादशोत्तरशतः ११८ अत्र पंचदशगृहध्रुवांकः ४५ यतो जाताः १६३ त्रिषष्ट्युत्तरशतपरिमिताः । अत्रान्वादेशेन प्राप्तकोष्ठकांके १०४ हीने शेषमेकोनषष्टि ५९ परिमितम् । अतश्चैकोनषष्टिदिनोपरि ५९ भोः पृच्छक तव मनोऽभिलषितसिद्धिर्भविष्यति । एवं सर्वत्र ज्ञेयम् । इति मतान्तरम् ।

इमौ द्वयोः पुस्तकयोः प्रकारौ स्वस्मिन्भिन्नरूपौ वर्तेते कुतः । केचिदाचार्याः संख्याचक्रमार्गेण कथयंति । केचिच्चक्रबाह्यतो रूपिध्रुवांकादेव वदंतीति वचनात् । अपरे इयमेव रूपिगृहे ध्रुवांकरूपा रमलसंख्या लोकेषु सर्वत्रैव प्रसिद्धा वर्तते । तथा सर्वेषु विद्वत्सु प्रमाणरूपा चेयं संख्या । अपरे इयं संख्या पूर्वोक्तबहुप्रमाण रूपा ज्ञातव्या इति । अत्र बर्बरदेशीयाचार्याः किंचिद्विशेषं वदंति । किं च प्रश्नरमलेषु चतुर्दशगृहात्कार्यसिद्धौ दिनसंख्यां वदेत् । वर्त्तमानरूपिध्रुवांकैः कस्मादिदं चतुर्दशगृहं वाच्यमानस्य कोर्थो मनोऽभिलषितस्तज्ज्ञेयम् । तथेदं गृहं रमलस्य दर्पणम् । इति वचनात् । अत एव प्रश्नरमलेषु यो रूपी चतुर्दशगृह आयाति तेन

रूपिणा प्रश्नसिद्धौ दिनसंख्यां वदेत् । इमे ध्रुवांकाः प्रकृतिक्रमोपरि कथिताः पूर्वसूरिभिर्बर्बरदेशीयाचार्यैः ।

अथ प्रकारांतरेण क्रमाद्विजदहोपरि पूर्वोक्तं चक्रं व्याख्यायते ।

| ○<br>—<br>—<br>— | —<br>○<br>—<br>○ | ○<br>—<br>○<br>— | —<br>—<br>—<br>— | ○<br>○<br>—<br>○ | ○<br>—<br>—<br>○ | —<br>—<br>—<br>○ | —<br>○<br>—<br>— | —<br>—<br>○<br>— | ○<br>○<br>—<br>— | —<br>—<br>○<br>○ | ○<br>○<br>○<br>— | ○<br>—<br>○<br>○ | —<br>○<br>○<br>○ | —<br>○<br>○<br>— | ○<br>○<br>○<br>○ | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ६ | ४ | ७ | १३ | ५० | ७ | ९ | ७ | २६ | २० | १२० | ३२ | १६ | २७ | १३ | दिनानि. |

ध्रुवांकचक्रोत्पत्तिसहितं सर्वरूपिणः प्रत्येकगृहेषु कतिसंख्याः स्थापयंति तथा तेषां प्रतिगृहेषु के याचकाः के याच्यमानाः रूपिण इत्यत आह प्रश्नरमलेषु यो रूपी यस्मिन्गृह आयाति तत्र निरीक्षणं कर्तव्यम् यदि स रूपी विजदहक्रमेण स्वस्थानादग्रे स्यात्तदा यावन्तो गृहसंख्याः स्वगृहात्प्रश्नसमयपर्यंतं तेषु भवंति तावंत एव प्रश्नसमयप्राप्तसकलगृहध्रुवांकेषु न्यूनाः कर्तव्याः शेषांकास्तस्य रूपिणस्तस्मिन् गृहे संख्या भवंति । पुनस्तेषु संख्यांकेषु षोडशभि-१६ र्भजेत् । शेषांका विजदहक्रमेण प्रथमगृहादिषु विभागरूपाः कृतास्तेषां यस्मिन्रूपिणि पर्य्यवसानं स्यात्तदा स रूपी तस्य रूपिणो याच्यमानः स्यात् । तद्यथोदाहरणे द्रष्टव्यम् । यथा प्रश्नसमये द्वादशगृहे शीतांशुः रूपी शीतांशोः स्थानं तु पंचमगृहं तस्मादग्रे पतितः प्रश्नसमये । अत एवात्र ऋणकार्यं भविष्यति । तत्र शीतांशुगृहात्प्रश्नसमये शीतांशुगृह १२ पर्य्यंतेष्वंतरालगृहसंख्यांकाः ७ सप्तमिताःप्रश्नसमयस्य द्वादशगृहानुक्रमेण प्राप्तागृहध्रुवांका वसुसप्तति ७८ परिमितास्तेषु ७८ गृहसंख्यांकैः ७ न्यूने कृते शेषमेकसप्ततिपरिमिताः ७१ । अत एव संख्यांको ७१ द्वादशगृहे शीतांशोर्वर्तते । यद्यत्र षोडशभिर्भजेत् १६ तदा षोडशभक्ते शेषाः सप्त ७ परिमिताः प्रथमगृहात्सप्तमो लोहित स्तस्य शीतांशोर्याच्यमानो यातः । शीतांशुर्याचको लोहितो याच्यमानः

एवं सर्वगृहेषु रूपिणां याचकत्वं याच्यमानत्वं च ज्ञेयम् । तथा प्रतिगृहेषु रूपिणां ध्रुवांको ज्ञातव्य इति ।अथ यदि रूपिस्वगृहाद्विजदहक्रमेण प्रश्नरमलेषु पूर्वं यावन्तो गृहाः स्वस्थानापृष्ठे स्युस्तावंत एव रूपिध्रुवांकेषु योजनीयाः । ता एव संख्यास्तस्मिन्गृहे तस्य रूपिणः स्युः । पुनस्तस्मिन्संख्यांके षोडशभक्ते शेषांकसमरूपिणं तस्य याच्यमानं ज्ञेयमिति । तद्यथोदाहरम् । यथा तीक्ष्णांशु श्चतुर्थगृहे समागतः ।तीक्ष्णांशोर्गृहं तु पंचदशं तस्मात्पृष्ठे पतितःप्रश्नसमये।अत एवात्र धनं कार्य्यम् । यथा तीक्ष्णांशुगृहात्प्रश्नसमयगृह ४ पर्य्यंतेष्वंतरालगृहसंख्या ११ एकादशपरिमिता ।प्रश्नसमये चतुर्थगृहानुक्रमेण प्राप्ता गृहध्रुवांका १० दिक्परिमिताः । अत्र चैकादशयुक्ते यातमेकविंशतिकं २१ अत एव चतुर्थगृहतीक्ष्णांशुरूपिणश्चैकविंशतिपरिमितसंख्याक्रमो विजदहचक्रेषु द्रष्टव्य इति । यदा ते २१ षोडशभक्तास्तदा शेषं पंचपरिमितं ५ एवं प्रथमगृहात्पंचमरूपी शीतांशुः स च तीक्ष्णांशुरूपिणः याच्यमानरूपी ज्ञेयः। तीक्ष्णांशुर्य्याचकः शीतांशुर्याच्यमानरूपी । एवमुभयोश्चक्रयोः सर्वांकानामुत्पत्तिर्ज्ञेया । तथा च क्रमाद्विजदहे प्रत्येकगृहे रूपिणां याचकत्वं याच्यमानत्वं च ज्ञेयम् ॥ इति ग्रंथांतरमतम् । अस्मिन्नपि चक्रोपरि पूर्वचक्रवत् प्रश्नसमये पूर्वप्रकारकर्तव्यतया प्रश्नसिद्धौ दिनसंख्यां वदेत् । रूपिणः स्वगृहाभावेषु चक्रमेतद्विचारणीयमिति । अथ किंचिद्विशेष उच्यते ॥ प्रत्येकरूपी स्वस्थानात सप्तमं रूपिणं याचते । तस्य रूपिणो ग्राहक इति संज्ञा तस्मात्सप्तमस्य ग्राह्येति संज्ञा ज्ञातव्या । तदाह ।

ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः ग्राह्यः ग्राहकः

| ००—० | ०——— | —००० | ——०— | ०००० | ०—०— | —०—— | ———० | ००—— | ०——० | —००— | ——०० | ०००— | ०—०० | —०—० | ———— | ० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १ |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | २ |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | ३ |
| ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | ४ |
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | ५ |
| १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ६ |
| २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ७ |
| २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ८ |
| ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ९ |
| ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | १० |
| ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ११ |
| ६७ | ६८ | ६९ | ७० | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ | ८२ | १२ |
| ७९ | ८० | ८१ | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० | ९१ | ९२ | ९३ | ९४ | १३ |
| ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | ९८ | ९९ | १०० | १०१ | १०२ | १०३ | १०४ | १०५ | १०६ | १०७ | १४ |
| १०६ | १०७ | १०८ | १०९ | ११० | १११ | ११२ | ११३ | ११४ | ११५ | ११६ | ११७ | ११८ | ११९ | १२० | १२१ | १५ |
| १२१ | १२२ | १२३ | १२४ | १२५ | १२६ | १२७ | १२८ | १२९ | १३० | १३१ | १३२ | १३३ | १३४ | १३५ | १३० | १६ |

ग्राह्यः —००० ग्राहकः —००० ग्राह्य ०००— ग्राहकः ००—— ग्राह्यः ———— ग्राहकः ———— ग्राह्य ०००— ग्राहकः —००— ग्राह्यः ००—० ग्राहकः —००— ग्राह्यः ०—००। प्रश्नसमये संख्याक्रमंस्यानुसारकरणे प्रयोजनरूपी प्रश्नसमये रमलस्य प्रथमगृह आगतः स्यात् तथा ग्राहकग्राह्ययोः प्रयोजनमाह । तदा द्रष्टव्यं संख्यानुसारक्रमेण

| ००—० | ०——— | —००० | ——०— | ०—०० | ०००— | —०—— | ———० | ००—— | ०——० | —००— | ——०० | ०००० | ०—०— | —०—० | ———— | ग्राहकाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| —०—— | ———० | ००—— | ०——० | —००— | ——०० | ०००० | ०—०— | ———— | —०—० | ००—० | ०——— | —००० | ——०— | ०—०० | ०००— | ग्राह्याः |

स्वस्थानादंतिमे गृहेभवेत्तावद्गृहाणि गणयेत्। यदि स्वस्थानात्केंद्र-

गृहेचागतः तथैतेषु गृहेषु ९,११,१३, १९, स्थितः स्यात्तदा शुभफलं वक्तव्यमिति। अपरस्तस्य गृहस्य विचारांशैः संज्ञां कारयेत्। गृहाणां केंद्रादिसंज्ञा तथा तेषां कनिष्ठमध्यमोत्तमादिसंज्ञा वक्ष्यमाणाः। अथोदाहरणं द्रष्टव्यम्। यथा प्रश्ने सौरिरूपी ⁝ प्रमथगृहे समागतः स तु स्वस्थानादशम १०स्थाने वर्तते संख्यानुसारक्रमेण तदा तस्य फलं दशमगृहविचारांशैर्वक्तव्यम्। यथा दशमगृहविचारांशमाह। भोः पृच्छक प्रतिष्ठायास्तथा महत्त्वस्य प्रश्नो वर्त्तते। एवं विचारांशैः प्रश्नो वक्तव्यः। अथ यदि तं प्रश्नसमये प्रथमगृहप्राप्तरूपिणा प्रथमगृहस्वामिना गुणयेत्। ताभ्यां यः रूपी चोत्पन्नो भवेत्स ग्राहकरूपी ज्ञेयस्तेन रूपिणा प्रष्टुर्मनोऽभिलषितं वदेत्। तद्यथा। प्रश्नसमयप्राप्तप्रथमगृहरूपिणा ⁝ प्रथमगृहस्वामिना दैत्यार्चित ⁝ संज्ञकेन गुणिते सति रूपी चोत्पन्न उष्णगु ⁝ संज्ञकः। अपर संख्यानुक्रमे सौरि ⁝ स्थानाद्वितीये धनस्थाने वर्त्तते ⁝ अत एव भोः पृच्छक द्रव्यादिकं याच्यते त्वया। एवं यदि प्रश्ने सूरिरूपी ⁝ प्रथमगृहे चागतः अयं तु स्वस्थानात्षष्ठगृहे वर्त्तते तदा षष्ठगृहविचारांशैः प्रश्नो वक्तव्यः यथा भोः पृच्छक म्लानताया वा विचारस्तथा चिंतायास्तथोद्विग्नताया विचारो वर्त्तते। अपरं यावन्ति वस्तूनि षष्ठगृहविचारांशे संति तानि सर्वाणि वक्तव्यानि। अथ त ⁝ प्रथमगृहस्वामिना ⁝ यदि गुणयेत्तदा ताभ्यां रूपी चोत्पन्नः ⁝ वक्रः अयं तु सूरिस्थानात्संख्याक्रमेण चैकादश ११ स्थाने तिष्ठति एकादशस्थानं तु सर्वाशायाः। अत एव भोः पृच्छक आशा याच्यते त्वया। एवं सर्वरूपिणां प्रथमगृहेषु फलं वक्तव्यमिति प्रश्नसमये। इति द्विप्रकारं प्रष्टुस्तथा ग्राहकस्याज्ञाकरणं समाप्तम्।

---

१ सौरिः ⁝।

अथ प्रश्नसमये ग्राह्यत्वस्याज्ञाकरणमाह ।

प्रश्नसमये यो रूपी प्रथमगृहे चागतस्तस्य ग्राह्यं पश्येत् स ग्राह्यरूपी प्रकटेवा गुप्ते मध्ये वर्तते।इत्येतद्विचारणीयम्। यदि प्रथमगृहरूपिणो ग्राह्यरूपी प्रश्नरमले कुत्रापि स्यात्तदा प्रकटो ज्ञातव्यः। स स्वस्थानेयस्मिन्गृहे संख्यानुक्रमेण स्थितःस्यात्तदा तत्सदृशं फलं वक्तव्यम् । यथा यदि स रूपी स्वस्थानात्केंद्रगृहेषु १, ४, ७, १०, तथैतेषु ५, ११, १३, १५, गृहेषु स्थितः स्यात्तदा शुभतया ग्राह्यत्वं वर्तते । यदि चेत्स्वस्थानाच्छेषेषु मध्यमेषु गृहेषु २, ३, ६, ८, ९, १२, १४, १६, स्थितः स्यात्तदा निषिद्धतया ग्राह्यत्वमस्ति । एवं ग्राह्यरूपिणि प्रकटे फलं वक्तव्यमिति । अथ गुप्ते ग्राह्यस्याज्ञाकरणमाह । यदि प्रश्नरमलेषु प्रथमगृहरूपिणो ग्राह्यरूपी कुत्रापि वर्तमानो नो भवेत्तदा प्रश्नरमलस्य प्रथमगृहरूपिप्रभृति प्रत्येकषोडशरूपिणः संख्यानुक्रमेण प्रत्येकगृहस्वामिना गुणयेत् । एवं प्रश्नरमलस्य षोडशरूपिभ्योऽपरान् षोडशरूपिण उत्पादयेत् । उत्पन्नेषु तेषु षोडशरूपिषु तं प्रश्नरमले प्रथमगृहरूपिणो ग्राह्यरूपिणं पश्येत् । यदि यत्र कुत्रापि स्यात्तदा द्रष्टव्यं संख्यानुक्रमेण स्वस्थानात्कतिगृहोपरि वर्तते । यदि स्वस्थानाच्छुभगृहेषु केंद्रसंज्ञकेषु १, ४, ७, १०, तथैतेषु ५, ११, १३, १५, गृहेषु स्थितो भवेत्तदा ग्राह्यस्य शुभत्वमिति प्रश्नो वक्तव्यः । ग्राह्य इति मनोऽभिलषितम् । यदि संख्यानुक्रमेण स ग्राह्यरूपी शेषेषु निषिद्धगृहेषु २, ३, ६, ८, ९, १२, १४, १६, स्थितो भवेत्तदा ग्राह्यत्वं निषिद्धतरं वर्तते इति वक्तव्यम् । यदि चेत्तेषु षोडशरूपिषूत्पन्नेष्वपि स प्रश्नरमलस्य प्रथमरूपिणो ग्राह्यरूपी न स्यात्तदा ग्राह्यत्वं मनोऽभिलषितं व्यर्थं वाच्यम् ।

अथ मनोऽभिलषितस्य सिद्ध्यसिद्धित्वमाह ।

प्रकटगुप्तप्रकारयोर्मध्ये यस्मिन् गृहे ग्राह्यरूपी समागतः स्यात्तत संख्यानुक्रमेण तस्य गृहस्य स्वामिना तं ग्राह्यरूपिणं गुणयेत् ।

ताभ्यां यो रूपी चोत्पन्नो भवेत्तदा तं रूपिणं पश्येत् । यदि स रूपी प्रवेशी स्यात्तदा मनोऽभिलषितस्यासिद्धिर्वक्तव्या । यदि स शुभरूपी चोत्पन्नः स्यात्तदा सुगममार्गेण मनोभिलषितासिद्धिः।यदा क्रूरस्वरूपी चोत्पन्नः स्यात्तदा महाकष्टेन मनोऽभिलषितस्य सिद्धिः॥ अथ यदि स रूपी निर्गमोत्पन्नः स्यात्तदा मनोभिलषितस्य सिद्धिर्न स्यात्। यदि शुभरूपी भवेत्तदा स्वेच्छया स्वशक्त्या वा मनोऽभिलषितस्य सिद्धिर्न स्यात् । यदि स क्रूररूपी चोत्पन्नो भवेत्तदा स्वेच्छया मनोभिलषितस्य सिद्धिर्न स्यात्।अथ यदि स रूपी द्विस्वभावः स्यात्तदा मनोऽभिलषितं कार्यमवस्थांतरं प्राप्नुयात् । यदि स शुभरूपी भवेत्तदा परिणामे मनोऽभिलषितस्य सिद्धिः स्यात् । यदि च स क्रूररूपी चोत्पन्नः स्यात्तदा मनोऽभिलषितस्य सिद्धिर्न स्यात्। अपरं यदि स स्थिररूपी स्यात्तदा मनोभिलषितं यथास्थितमेव तिष्ठेत् । यदि शुभरूपी भवेत्तदा परिणामे मनोभिलषितस्य सिद्धिः । यदि च स क्रूररूपी चोत्पन्नः स्यात्तदा मनोऽभिलषितस्य सिद्धिर्न स्यात्। अपरं यदि प्रश्नरमलस्य प्रकटप्रकारे तथा गुप्तप्रकारे च प्रथमगृहरूपिणो ग्राह्यरूपी न स्यादित्यतआह। यदिचोभयप्रकारे ग्राह्यरूपिणो भवेत्तदा द्रष्टव्यम् । ग्राह्यरूपिणो गृहे कोऽपि समागतः तं रूपिणं ग्राह्यरूपिणं च गुणयेत्।ताभ्यां यो रूपी चोत्पन्नो भवेत्तदा तं पश्येत् । प्रवेशिनिर्गमद्विस्वभावस्थिररूपैः पूर्ववन्मनोऽभिलषितसिद्धौ फलं वक्तव्यमिति । परंत्वस्मिन्प्रकारे स्थिरतया फलानि भविष्यंति । इति प्राचीनाचार्याणां मतम् ।

अथ सर्वरूपिणां प्रवेशिप्रभृतिसंज्ञास्तथा तेषां गृहाणांशुभत्वं क्रूरत्वं चैतत्सर्वं वक्ष्यमाणम् । एष पूर्वोक्तप्रकारो बहुसमीचीनः पूर्वाचार्याणां पारंपर्य्यमिदम्। एतत्परमरहस्यं गोपनीयं प्रयत्नतः । सद्यः प्रत्ययकारकमिदम् ।एतत्प्रकारं प्रीत्या स्थापयेन्मूर्खाय नो दापयेत्॥

इति भयभंजनशर्मकृतौ श्रीरमलरहस्ये संख्याक्रमः षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः ।

अस्मिन् सप्तमाऽध्याये खेटक्रमोऽस्ति तेन खेटक्रमसंज्ञकेन प्रश्नसिद्धौ दिनरात्रिविभागेन संख्यां वदेत् । यथा । प्रत्येकरूपिणः स्वभावं प्रकृतिभिर्ग्रहा एव सर्वरूपिणः खेटैर्बद्धतराः तत्र सूर्यादि गणना कार्या । कस्मात् । ग्रहाणां राजा सूर्य इति वचनात् । तत्र द्वौ रूपिणौ सूर्यस्य, द्वौ रूपिणौ शुक्रस्य, तथा द्वौ रूपिणौ बुधस्य, द्वौ रूपिणौ चन्द्रमसो ज्ञेयौ । तथा द्वौ रूपिणौ शनैश्चरस्य द्वौ रूपिणौ गुरोः द्वौ भौमस्य शेषौ द्वौ रूपिणौ तिष्ठतः तयोर्मध्ये चैकः राहोर्ज्ञेयः एकश्च केतोः । एतत्प्रसिद्धं वर्तते । परन्तु द्वावपि केतोर्ज्ञेयाविति प्रमाणं शुद्धतरम् यथा रूपिणां विचारांशे व्याख्यानं करिष्यामि । सप्त वासराणि दिनरात्रिविभागैर्ग्रहेषु बद्धानि प्रत्येकदिनानि प्रत्येकग्रहैर्बद्धानि संति । स्वदिनात्पंचमरात्रिस्तस्मिन्नेव दिने युता ज्ञेया यथा सूर्यदिने गुरो रात्रिः, शुक्रवासरे भौमस्य रात्रिः, बुधवासरे सूर्यस्य रात्रिः, सोमवासरे शुक्रस्य रात्रिः, शनिवासरे बुधस्य रात्रिः, गुरुवासरे सोमस्य रात्रिः, भौमवासरे शनैश्चरस्य रात्रिः, राहुस्थाने शनैश्चरस्य रात्रिः, तथा केतुस्थाने चादित्यवारस्य रात्रिः, यथा प्रश्नसमये चाह यदि प्रश्नसमये रमलं पातयेत् तेषु रमलेषु मनोऽभिलषितग्रहस्य स्वामी तस्मिन्नेव गृहे स्यात्तदाऽमुकदिनेऽमुकरात्रौ वा प्रष्टुः कार्यसिद्धिर्भविष्यतीति वक्तव्यम्

अथ रूपिणां स्वगृहज्ञानार्थं खेटक्रममाह ।

| o<br>o<br>—<br>— | —<br>o<br>—<br>o | o<br>o<br>—<br>o | —<br>o<br>o<br>o | —<br>—<br>—<br>— | —<br>o<br>o<br>— | —<br>—<br>o<br>— | o<br>o<br>o<br>o | —<br>—<br>—<br>o | o<br>—<br>—<br>o | o<br>—<br>—<br>— | —<br>—<br>o<br>o | —<br>o<br>—<br>— | o<br>—<br>o<br>o | o<br>—<br>o<br>— | o<br>o<br>o<br>— |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |

अथवा यदि प्रश्नरमलस्य प्रथमगृहे उष्ण (o o — —) गुतीक्ष्णांशूभवतस्तदा सूर्यवारस्य दिने कार्यसिद्धिः । यदि तीक्ष्णांशुः (— o — o) प्रथमगृहे चेत्तदा गुरुवारस्य रात्रौ कार्यसिद्धिः स्यात् । एवं प्रश्नरमलस्य द्वितीयगृहे

---

१ खेटः पञ्चमपंक्तिः ।

दैत्यार्चित ⁝ कवी ⁝ यदि भवतस्तदा दिनं शुक्रस्य तथा रात्रि- भौमस्य वक्तव्यां कार्यसिद्धौ। यथा दैत्यार्चितो ⁝ द्वितीय- गृहे चेत्तदा शुक्रस्य दिने कार्यसिद्धिः। यदि द्वितीयगृहे कविः ⁝ चेत्तदा भौमस्य रात्रौ कार्यसिद्धिः स्यात्। एवं प्रश्नरमलस्य तृतीय- गृहे सौम्य ⁝ बोधनौ ⁝ भवतस्तदा दिनं बुधस्य तथा रात्रिः सूर्यस्य कार्यसिद्धौ वक्तव्या। यथा सौम्य ⁝ स्तृतीयगृहे चेत्तदा बुधवारस्य दिने कार्यसिद्धिः स्यात्। यदि बोधनः ⁝ प्रश्नरम- लस्य तृतीये चेत्तदा सूर्यवारस्य रात्रौ कार्यसिद्धिः स्यात्। एवं प्रश्नरमलस्य चतुर्थगृहे विधु ⁝ शीतांशू ⁝ भवत- स्तदा दिनं सोमवारस्य तथा रात्रिः शुक्रस्य वक्तव्या। यथा विधुश्चतु ⁝ र्थगृहे चेत्तदा सोमवारस्य दिने कार्यसिद्धिः यदि शीतांशुः ⁝ चतुर्थगृहे तदा शुक्रवारस्य रात्रौ कार्यसिद्धिः स्यात्। एवं प्रश्नरमलस्य पंचमगृहे सौरि ⁝ मंदगौ ⁝ यदि भवतस्तदा दिनं शनैश्चरस्य तथा रात्रिर्बुधस्य वक्तव्या। यदा सौरिः ⁝ पंचमगृहे भवति तदा शनैश्चरस्य दिने कार्यसिद्धिः यदि पंचमगृहे मंदगः ⁝ स्यात्तदा बुधस्य रात्रौ कार्यसिद्धिः स्यात्। एवं प्रश्नरमलस्य षष्ठगृहे वाग्मि ⁝ सूरी ⁝ यदि भवतस्तदा दिनं गुरो रात्रिश्च सोमवारस्य वक्तव्या। षष्ठगृहे यदि वाग्मी ⁝ भवेत्तदा गुरोर्दिने कार्यसिद्धिः स्यात्। यदि षष्ठगृहे सूरिः ⁝

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहा० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| o o — — | — o — o | o o — o | — o o o | — — — — | — o o — | — — o — | o o o o | — — — o | o — — o | o — — — | — — o o | — o — — | o — o o | o — o — | o o o — | खेटक्रमः |
| संध्या. | अपरा० | प्रत्यूष. | अपरा० | मध्या० | प्रत्यूष. | रात्रिमुख. | अपरा० | रात्रिमुख. | निशा. | रात्रिमुख. | प्रत्यूष. | संध्या. | प्रत्यूष. | मध्या० | मध्या० | समया: |

स्यात्तदा सोमवारस्य रात्रौ कार्यसिद्धिः स्यात्। एवं प्रश्नरमलस्य

सप्तमगृहे लोहिता ⁝ रौ ⁝ यदि भवतस्तदा दिनं भौमस्य रात्रिः शनेर्व्यक्तव्या । यदा सप्तमगृहे यदि लोहितो ⁝ भवेत्तदा भौमस्य दिने कार्यसिद्धिः स्यात् । यदा सप्तमगृहे चारो ⁝ भवेत्तदा शनिवारस्य रात्रौ कार्यसिद्धिः स्यात् । एवं प्रश्नरमलस्य यद्यष्टमगृहे वक्ररूपी ⁝ भवेत्तदा रविवारस्य रात्रौ कार्यसिद्धिः । यदि प्रश्नरमलस्याष्टमगृहे पातः ⁝ स्यात्तदा शनैश्चरस्य रात्रौ कार्यसिद्धिः स्यात् । इति सिद्धांतवृत्तांतक्रमः ।

एवं ग्रहाणां द्वौ द्वौ रूपिणौ प्रोक्तौ यदि ग्रहाणां द्वयो रूपिणोर्मध्ये रूपिविपर्य्ययः स्यात् । कोर्थः आद्यो द्वितीये चेदाद्ये द्वितीयश्च तथापि बहुप्रमाणतरमिदं वाक्यम् । कस्माद्द्वयोरूपिणोरेक एव नायकत्वात् । अपरे तत्र रूपी पंचदशगृहस्याधिपतिः पातः ⁝ स राहुर्ज्ञेयः तदा षोडशगृहाधिपो वक्रः ⁝ स केतुर्ज्ञेयः । परंतु बहुपुस्तकेष्वेवं कथितं वर्तते । किं च वक्ररूपी पातस्थाने पंचदशगृहे स्थापनीयः । परंत्वस्य वचनस्य विपर्ययः पूर्वोक्त एव प्रकारः समीचीनः कस्मात् । प्रश्नरमलतुलास्वरूपे पंचदशगृहे कदापि विषमबिंदुरूपिणो नो पतंतीति वचनात् ।

अथ प्रश्नसिद्ध्यसिद्ध्योर्दिनरात्र्योः समयनिश्चयमाह ।

ब्राह्ममुहूर्तात्प्रभति द्विघटिकादिनपर्य्यंतं प्रत्यूष इति संज्ञा दिनस्य गतद्विघटिकाप्रभृति मध्याह्नसमयपर्य्यंतस्य मध्याह्न इति संज्ञा । केचिच्च मध्याह्नमिति सर्वसमयं वदंति । अभिजिन्मुहूर्तात्प्रभृति दिनशेषदंडचतुष्टयपर्यन्तस्यापराह्ण इति संज्ञा । एवं दिनशेषघटीचतुष्टयस्य संध्या इति संज्ञा । एवं तदग्रे गोधूलिसमयप्रभृति रात्रिगतघटीचतुष्टयपर्य्यंन्तस्य रात्रिमुखमिति संज्ञा । एवं रात्रिगतघटीचतुष्टयात्प्रभृति ब्राह्ममुहूर्तपर्यन्तस्य निशा इति संज्ञा । एवं पारसीमतेन समयाः षट् । यदि प्रश्नसमये रमलं पातयेत्तेषु रमलेषु मनोऽभिलषितस्य गृहस्य रूपी स्वगृहे यदि

स्यात्तदा तस्य रूपिण उक्तदिनेष्वेवं समयं वदेत्प्रश्नकार्यसिद्धौ । अथवा यदि प्रश्नरमलस्य प्रथमगृहे चोष्णगु ⁝ तीक्ष्णांशू ⁝ भवतस्तदा संध्यापराह्णौ समयौ प्रोक्तौ । यथा प्रश्नरमलस्य प्रथमगृहे यद्युष्णगुरूपी ⁝ भवेत्तदा तदुक्तदिने सन्ध्यासमये कार्यसिद्धिः स्यात् । यदि प्रथमगृहे तीक्ष्णांशु ⁝ भवेत्तदा तदुक्तदिने अपराह्णसमये कार्यसिद्धिः स्यात् । एवं प्रश्नरमलस्य द्वितीयगृहे दैत्यार्चित ⁝ कविरूपिणौ ⁝ यदि भवतस्तदा प्रत्यूषापराह्णौ समयौ वक्तव्यौ यदा द्वितीयगृहे दैत्यार्चितो ⁝ भवेत्तदा तदुक्तदिने प्रत्यषसमये कार्यसिद्धिः स्यात् । यदि प्रश्नरमलस्य द्वितीयगृहे कविरूपी ⁝ स्यात्तदा तदुक्तदिने अपराह्णसमये कार्यसिद्धिः ।

खेटादिक्रमः ।

| सू | शु | बु | चं | श | बृ | मं | रा | के | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ० |
| ।।०० ०।०। | ०।०० ०००। | ।।।। ।००। | ०००० ।०।। | ०।।। ०।।० | ।।।० ००।। | ।।०। ००।० | ।०।० | ।००० | गृहरूपिणः |
| संध्यापराह्णदिने रवेरात्रौ गुरोः | प्रत्यूषाऽपराह्णदिनेभृगो रात्रौ भौमस्य. | मध्याह्नप्रत्यूषदिनेबुधस्य रात्रौ सूर्य० | रात्रिमुखअपरा० दिने सोमस्य रात्रौ शुक्रस्य. | रात्रिमुखनिशादिने शनैश्चरस्य रात्रौ बुधस्य. | रात्रिमुखप्रत्यूष दिने गुरो रात्रौ सोम० | संध्याप्रत्यूषदिने भौमस्य रात्रौ शनै० | मध्याह्नरात्रं शनेः रात्रौ सूर्य्यस्य. | मध्या०रात्रं शनेः रात्रौ सूर्य्यस्य. | समयाः दिनरात्रिविभागाः |

एवं प्रश्नरमलस्य तृतीयगृहे सौम्य ⁝ बोधनौ ⁝ यदि भवतस्तदा मध्याह्नप्रत्यूषसमयौ वक्तव्यौ । तृतीयगृहे ⁝ यदि सौम्यरूपी ⁝ स्यात्तदा तदुक्तदिने मध्याह्नसमये कार्यसिद्धिः स्यात् । यदि

तृतीयगृहे बोधनो ⁝ भवेत्तदा तदुक्तदिने प्रत्यूषसमये कार्यसिद्धिः स्यात् । एवं प्रश्नरमलस्य चतुर्थगृहे विधु ⁝ शीतांशू ⁝ यदि भवतस्तदा रात्रिमुखापराह्णसमयौ वक्तव्यौ । यदा चतुर्थगृहे विधुरूपी ⁝ भवेत्तदा तदुक्तदिने रात्रिमुखसमये कार्यसिद्धिः स्यात् । यदि चतुर्थगृहे शीतांशुरूपीः ⁝ भवेत्तदा तदुक्तदिने ऽपराह्णसमये कार्यसिद्धिः स्यात् । एवं प्रश्नरमलस्य पंचमगृहे शौरिः ⁝ स्यात्तदा तदुक्तदिने रात्रिमुखसमये कार्यसिद्धिः स्यात् । यदि पंचमगृहे मंदगः ⁝ स्यात्तदा तदुक्तदिने निशासमये कार्यसिद्धिः एवं प्रश्नरमलस्य षष्ठगृहे वाग्मि ⁝ सूरिरूपिणौ ⁝ यदि भवत-

| आ | य | क | ग | एकादशी. | | ज | अ | य | स |
|---|---|---|---|---|---|---|---|---|---|
| १ | १० | १०० | १००० | | | ७ | ७० | ७०० | प्तमी. |

| ह | न | त्स | प | पंच | | ज | ल | श | तृती |
|---|---|---|---|---|---|---|---|---|---|
| ५ | ५० | ५०० | ० | मी. | | ३ | ३० | ३०० | या. |

| त्व | स्व | ज्व | नवमी | | द | म | न | चतु | | द | क | र | द्विती |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ | ९० | ९०० | | | ४ | ४० | ४०० | र्थी. | | २ | २० | २०० | या. |

| ह | फ | ग्व | अष्टमी. | | व | स | ष | षष्ठी. |
|---|---|---|---|---|---|---|---|---|
| ८ | ८० | ८०० | | | ६ | ६० | ६०० | |

स्तदा तदुक्तदिने रात्रिमुखप्रत्यूषसमयौ वक्तव्यौ । यदा षष्ठगृहे वाग्मी ⁝ भवेत्तदा तदुक्तदिने रात्रिमुखसमये कार्यसिद्धिः । यदि षष्ठगृहे सूरिरूपी ⁝ भवेत्तदा तदुक्तदिने प्रत्यूषसमये कार्यसिद्धिः । एवं प्रश्नरमलरहस्य सप्तमगृहे लोहिता ⁝ रौ ⁝ भवतस्तदा संध्याप्रत्यूषसमयौ वक्तव्यौ । यथा सप्तमगृहे लोहितः ⁝ स्यात्तदा तदुक्तदिने संध्यासमये कार्यसिद्धिः । यदि सप्तमगृहे चारो भवे ⁝ त्तदा तदुक्तदिने प्रत्यूषसमये कार्यसिद्धिः । एवं प्रश्नरमलस्याष्टमगृहे पात ⁝ वक्र ⁝ रूपिणौ यदि भवतस्तदा तदुक्तदिने मध्याह्नसमय उभयस्थाने वक्तव्यः । मध्याह्नः सर्वसमयः स्यादित्यर्थः ।

इति श्रीभयभञ्जनमशर्मकृतौ रमलरहस्ये खेटकक्रमसंज्ञको नाम सप्तमोऽध्यायः॥ ७ ॥

## अथाष्टमाध्यायो व्याख्यायते ।

अस्मिन्नष्टमाध्याये वर्णक्रमस्य व्याख्यानं वर्तते तस्य ९ परमपदव्यः संति तथाहि अ १ य १० क १०० ग १००० वकर २ २०, २०० जलश ३, ३०, ३०० दमत ४, ४०, ४०० हनत्स ५, ५०, ५०० वसष ६, ६०, ६०० अजय ७, ७०, ७०० हफग्व ८, ८०, ८०० त्वस्वज्व ९, ९०, ९०० इमा परमपदव्यो नवपरिमिताः सन्ति परमपदवीरूपाः ते के यथा १, १०, १००, १०००, एकदशशतसहस्राणि शेषाणामष्टानां शिवनेत्रेति संज्ञा वर्तते। यतस्त्रिवर्णात्मकाः परमपदवीरूपाः संति यथा २, २०, २००, इत्यादयः परमपदवीनां प्रयोजनं वक्ष्यमाणं वर्तते । एतत्सर्वमवजदमतं संप्रोक्तम् । तैरवजदवर्णैरेव वर्णक्रमसंज्ञकः संबद्धो वर्तते । तथाहि । तत्र वर्णक्रमेण प्रथमवाग्मि ⁝ रूपिणः अकारफकारौ द्वौ वर्णौ वर्तेते । तथा द्वितीयस्य सौरिरूपिणौ ⁝ वकारस्वकारौ एवं तृतीयस्य लोहित ⁝ रूपिणो जकारककारौ एवं चतुर्थस्य विधु ⁝ रूपिणो दकाररकारौ तथा पंचमस्य सूरि रूपिणो ⁝ हकारशकारौ द्वौ वर्णौ एवं षष्ठस्योष्णगुरूपिणो ⁝ वकारतकारौ द्वौ वर्णौ तथा सप्तमस्य कविरूपिणो ⁝ जकार सकारौ वर्णाविवमष्टमस्य वक्ररूपिणो ⁝ हकारषकारौ वर्णौ तथा नवमस्य दैत्यार्चितस्य ⁝ त्वकारयकारौ वर्णौ तथा दशमस्याररूपिणो ⁝ यकारग्वकारौ वर्णौ तथैकादशस्य तीक्ष्णांशुरूपिणः ⁝ ककारज्वकारौ वर्णौ एवं द्वादशस्य पातरूपिणो ⁝ लकारगकारौ वर्णाविवं त्रयोदशस्य सौम्यस्य ⁝ मकारवर्णश्चैक एव एवं चतुर्दशस्य मंदगस्य ⁝ रूपिणो नकारो वर्णस्तथा पंचदशस्य बोधनरूपिणः ⁝ सकारो वर्णः एवं षोडशस्य शीतांशुरूपिणः ⁝ ङ्जकारवर्णः । कथमत्र द्वादशरूपिणां द्वौद्वौ वर्णौ चतुर्णामेकैक एवेत्यत आह । यवनमतेन वर्णा अष्टविंशति २८ परिमितास्तथा रमल-

रूपिणः षोडश १६ परिमिताः । अत एव ये रूपिण उर्ध्व-मुखाधोमुखमार्गेण प्रत्युत्तरदायकरूपास्ते तु द्वादशपरिमिता एव संति। तादृशानां रूपिणां द्वौद्वौ वर्णौ वर्तंते । अपरशेषरूपिणो ये चोर्द्ध्वमुखाऽधोमुखमार्गेण विपरीते कृतेऽपि समानरूपास्ते तु चत्वार एव तिष्ठंति तादृशानां रूपिणामेकैकवर्णाः । अपरे यथाक्र-मेण अवजदहवर्णक्रमसंज्ञकोपरि विभागरूपाः सन्ति । तद्यथा वर्णक्रमे दृष्टव्यम् ।

अथ वर्णक्रमचक्रम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ०<br>—<br>—<br>— | —<br>—<br>—<br>० | —<br>०<br>—<br>— | —<br>—<br>०<br>— | —<br>—<br>०<br>० | ०<br>०<br>—<br>— | —<br>०<br>०<br>० | ०<br>०<br>०<br>— | ०<br>०<br>—<br>० | ०<br>—<br>०<br>० | —<br>०<br>—<br>० | ०<br>—<br>०<br>— | —<br>—<br>—<br>— | ०<br>—<br>—<br>० | —<br>०<br>०<br>— | ०<br>०<br>०<br>० | गृहाणि. |
| अ १ | व २ | ज ३ | द ४ | ह ५ | व ६ | ज ७ | ह ८ | त्व ९ | य १० | क १ | ल २ | म ४ | न ५ | व ६ | अ ७ | वर्ण. |
| फा ८ | स्व ९ | क १ | र २ | श ३ | त ४ | त्स ५ | ष ६ | य ७ | ग्व ८ | ज्व ९ | ग १० | ० | ० | ० | ० | क्रमः |

अथ वाग्मिप्रभृतिरूपिणः प्रथमगृहादिषु कथं प्राप्ता इत्यत आह । तत्राग्निरेकाकी सर्वरूपिणां मध्ये वाग्मिनि ०/—/—/— चतुर्भ्यः-स्तत्त्वेभ्यः प्रथमं वर्तते । अत एव वाग्मी ०/—/—/— प्रथमगृहे योग्यो ऽस्ति । तस्य वाग्मिरूपिणः स्पर्द्धकः सौरिरूपी अत एव सौरिरूपी —/—/—/० द्वितीयगृहे योग्योऽस्ति । अपरो वायुरेकाकी लोहिते —/०/—/— वर्ततेऽत एव लोहितस्तृतीयगृहयोग्योऽस्ति । तस्य लोहितस्य स्प-र्द्धको विधुरूपी —/—/०/— अत एव विधुश्चतुर्थगृहयोग्योऽस्ति । अग्निरेकाकी तस्य स्पर्द्धारूपा भूमिरेकाकिनी वर्तते । तथा वायोरेकाकिनः स्प-र्द्धकं जलमेकाकि वर्तत इमानि ०/—/—/— —/—/—/० —/०/—/— —/—/०/— चत्वारि प्रागुक्तानि । अधुना जलभूमिभ्यां युतो रूपी विचारणीयः । यथा । एते द्वे जलभूमी सूरिरूपिण्यौ —/—/०/० दृश्येते । अत एव सूरिरूपी पंचमगृहयोग्योऽस्ति । अस्य सूरिरूपिणः स्पर्द्धको उष्णगु ०/०/—/— वर्तते।अत एवोष्णगुरूपी षष्ठ-

गृहयोग्योऽस्ति। अपरं जलवायुभ्यां सार्द्धं पृथ्वी मिलिता कविरूपिणी ⁝ अत एव कविः सप्तमगृहयोग्योऽस्ति । अस्य कवेः स्पर्द्धको वक्ररूपी ⁝ अत एव वक्रोऽष्टमगृहयोग्योऽस्ति। अधुना वह्निना मिलितो वायोरभ्यासः समुचितो वर्तते स तु ⁝ पूर्वमुक्तो मया । इदानीमत्यावश्यकवायुवह्निभ्यां सार्द्धं पृथिवी मिलिता दैत्यार्चिते ⁝ स्ति। अत एव दैत्यार्चितो नवमगृहयोग्योऽस्ति। अस्य दैत्यार्चितस्य स्पर्द्धक आरोऽस्ति ⁝ अत एवाररूपी दशमगृहयोग्योऽस्ति। पुनस्तथाधुना वायुमिलितपृथिव्या अभ्यासः कर्तव्यः । सा तु वायुमिलिता पृथिवी तीक्ष्णांशु ⁝ रूपिणि वर्तते । अत एव तीक्ष्णांशुश्चैकादशगृहयोग्योऽस्ति । अस्य तीक्ष्णांशुरूपिणः स्पर्द्धकः पातो ⁝ वर्तते । अत एव पातरूपी द्वादशगृहयोग्योऽस्ति । अपरं ये चत्वारो रूपिणो विपर्ययेऽपि समानरूपाः ⁝ ⁝ ⁝ ⁝ ते यद्यपि विपरीतरूपानकर्तव्यास्तथापि रूपांतरं न प्राप्नुयुः । इमे यथाक्रमेण त्रयोदशगृहादिषु १३ १४, १५, १६ योग्याः संति। अथ पूर्वोक्तपदवीमार्गेण किंचिद्विशेष उच्यते । वाग्मिरूपी ⁝ प्रथमगृहे अकारफकारौ स्थापयति तथा सौरिः ⁝ द्वितीयगृहे वकारस्वकारौ स्थापयति । एतत्प्रकारः पूर्वमुक्तो मया । अत्र तु केचिदाचार्या एवं वदंति । प्रथमवर्णः स्वगृहस्थो द्वितीयश्च स्वगृहादष्टमस्थानस्थो वर्तते। परमपदवीनां गणनामार्गेण । यथा वाग्मिरूपी ⁝ प्रथमगृहे अकारं स्थापयंति स्वगृहादष्टमगृहस्थवक्रस्थाने ⁝ फकारं स्थापयंति । कस्मात्। अकारः अप ⁝ कगेन तथा ⁝ ककारो ⁝ ह ⁝ कग्वेन वर्तते ⁝ यथा। अय ⁝ क ⁝ गादष्टमस्थाने तिष्ठतीति वचनात्। एवं सौरिरूपि ⁝ द्वितीयगृहे केवलवकारं स्थापयंति। तथा स्वगृहादष्टमस्थस्य नवमगृहस्य दैत्यार्चितस्थानस्य स्वकारं स्थापयंति । कस्मात्। वकारो वकारेण तथा स्वकारःस्वस्वन्येन यो वकारादष्टमस्थाने तिष्ठतीति वचनात् । एवं लोहितरूपितृतीय ⁝ गृहे

जकारं स्थापयंति । तथा स्वगृहादष्टमस्थस्य दशमगृहस्यारस्थाने ककारं स्थापयंति । कस्मात् । जकारो जलसेन तथा । ककार अकगेन जलादष्टमस्थाने तिष्ठतीति वचनात्। एवं विधुरूपि ः दकारं चतुर्थगृहे स्वगृहात्स्थापयंति । तथा स्वगृहादष्टमस्यैकादशगृहस्य तीक्ष्णांशु ः स्थानस्य रकारं स्थापयंति । कस्मात् । दकारोदमतेन । तथा रकारो वकारेण यो दमतादष्टमस्थाने तिष्ठतीति वचनात् । एवं सूरिरूपि ः पंचमगृहे हकारं स्वगृहे स्थापयंति । तथा शकारं स्वगृहादष्टमस्थस्य द्वादशगृहस्य पातस्थाने स्थापयंति । कस्मात् । हकारो हनत्सेन । तथा जकारो जलसेन यो हनत्सादष्टमे तिष्ठतीति वचनात् । एवमुष्णगुरूपि ः षष्ठगृहे वकारं स्वगृहस्य स्थापयंति । तथा स्वगृहादष्टमस्थस्य त्रयोदशगृहस्य सौम्यस्थानस्य तकारं स्थापयंति । कस्मात् । वकारो वसषेन तथा तकारोदमतेन यो यसःशादष्टमे तिष्ठतीति वचनात् । एवं कविरूपि ः सप्तमगृहे जकारं स्वगृहस्य स्थापयंति । तथा स्वगृहादष्टमस्थस्य चतुर्दशगृहस्य मंदगस्थानस्य त्सकारं स्थापयंति । कस्मात् । अत्र जकारो ,ॅ ज ,ॅ अ ,ॅ येन वर्तते । तथा तत् सकारो हनत्सेन वर्तते । यो ः ज ,ॅ अ ,ॅ पातादष्टमस्थाने तिष्ठतीति वचनात् । एवं वक्र ः रूपी अष्टमगृहे हकारं स्वगृहस्य स्थापयंति तथा । षकारं स्वगृहादष्टमस्थस्य पंचदशगृहस्य बोधनस्थानस्य स्थापयंति ः कस्मात् हकारो ह ॅ क ॅ खेन तथा षकारो वसःषेन यो ह ॅ फ ॅ ग्वादष्टमस्थाने तिष्ठतीति वचनात् । एवं दैत्यार्चितो ः नवमगृहे त्वकारं स्वगृहस्य स्थापयंति । तथा यकारं स्वगृहाहष्टमस्थस्य षोडशगृहस्य शीतांशुस्थानस्य स्थापयंति । कस्मात् त्वकारस्त्वस्व ॅ ज्वेन तथा पकारो ॅ ज ॅ अ ॅ येन ॅ यस्त्वस्व ॅ ज्वादष्टमस्थाने तिष्ठतीति वचनात् । एवमार ः रूपी दशमगृहे यकारं स्वगृहस्य स्थापयंति । तथा । ग्वकारं स्वगृहादष्टमस्थ-

स्य प्रथमगृहस्य वाग्मिस्थानस्य स्थापयंति । कस्मात् । यकारो अय ’ कगेन तथा वकारो ॅ ह ॅ फ ॅ ग्वेन यो अय ॅ क ॅ गादष्टमस्थाने तिष्ठतीति वचनात् । एवं तीक्ष्णांशु ⁝ श्चैकादश-गृहे ककारं स्वगृहस्य स्थापयंति । तथा । स्वगृहादष्टमस्थस्य द्वितीयगृहस्य सौरिस्थानस्य ज्वकारं स्थापयंति । कस्मात् । चकारो वकारेण । तथा । ज्वकारस्त्वस्वः ज्वेन यो वकारादष्ट-मस्थाने तिष्ठतीति वचनात् । एवं पातरूपी ⁝ द्वादशगृहे लकारं स्वगृहस्य स्थापयंति । तथा । स्वगृहादष्टमस्थस्य तृतीयगृहस्य लोहितस्थानस्य गकारं स्थापयंति । कस्मात् । लकारो जलशेन तथा गकारः अयः कगेन यो जलशादष्टमस्थाने तिष्ठतीति वचनात् एवं प्रत्येकद्वादशरूपिणां द्वौ द्वौ वर्णौ यौ प्रोक्तौ तौ तनुनिधन-योर्ज्ञेयो । अत एव प्रथमवर्णस्तस्मिन् तनुगृहे स्थापितो वर्त्तते । तथा । द्वितीयवर्णश्च निधनगृहे स्थापितो योऽष्टमगृहे वर्त्तते स्वगृहात् कस्मात् तद्गृहं मृत्युनो वर्त्तते । तथा युः क्षीयमाणस्य इति वचनात् तथा शेषेषु चतुर्षु रूपिषु सौम्यादिषु चतुर्णां वर्णा-नामुत्पत्तिमाह । तथा सौम्यरूपी ⁝ त्रयोदशगृहे मकारं स्वगृह-स्यस्थापयंति । एकमेव वर्णम् । कस्मात् । मकारो दमतेन वर्त्तते यस्माच्छेषो द्वितीयवर्णः कोऽपि नास्तीति वचनात् । एवं मंदगश्च ⁝ तुर्दशगृहे नकारमेकमेव वर्णं स्वगृहे स्थापयंति ॥ कस्मात् । नकारो हनत्सेन वर्त्तते ः हनत्से यस्माच्छेषो द्वितीय-वर्णः कोऽपि नास्तीति वचनात् । तथा बोधनरूपिपंचदश-गृहे सकारमेकमेव वर्णं स्वगृहे स्थापयंति । कस्मात् । सकारो वसषेन यस्माच्छेषो द्वितीयवर्णः कोऽपि नास्तीति वचनात् । पुनस्तथैव शीतांशुः ⁝ षोडशगृहे अकारमेव स्वगृहे स्थापयन्ति । कस्मात् । अकारो जअयेन यस्माच्छेषो द्वितीयवर्णः कोऽपि

नास्तीति वचनात् । एवमुभयथा सर्वरूपिवर्णानामुत्पत्तिं ज्ञातुं सम्यक्प्रकारेण अभ्यासः कर्तव्य इति । यथा वाग्मिप्रभृतीनां पूर्वोक्तान् वर्णान् जानीयात्तथा प्रथमगृहादीनामपि वर्णानापि । किमर्थम् । चौरादीनां नामनिष्कासनार्थमिति ।

अथ प्राचीनाचार्याः प्रथमादिषोडशगृहाणां वर्णान्वदन्ति । तत्रावजदवर्णानामाद्यान् कतिपयवर्णांस्तथान्तस्थान्कतिपयवर्णानपास्य मध्यस्थैरेव षोडशपरामितैर्वर्णैर्गृहाणां वर्णाः कथिताः संति। तथा प्रथमगृहस्य यकारः तथा द्वितीयगृहस्य ककारः, तथा तृतीयगृहस्य लकारः, एवं चतुर्थगृहस्य मकारः, तथा पंचमगृहस्य नकारः, एवं क्रमेण षोडशगृहस्य यकारो ज्ञेयः । कथमत्रावजदहवर्णेष्वाद्यान्कतिपयवर्णांस्तथान्तस्थान्कतिपयवर्णानपास्य मध्यस्थानां पकारादीनामेव ग्रहणं कृतमित्यत आह।रूपिणां गृहाणि षोडश १६ परिमितान्येव अत्र मूलांकैर्विचारः कर्तव्यः। तत्रांकानां मूलानि नवैव ९ अनेन द्विखंडयोः षोडशमरिमितः स्यात् । तत्रैकादिनवपर्यंतानां १, २, ३, ४, ५, ६, ७, ८, ९, मूलांकानां प्रथमखंडः एवं चैकादिसप्तपर्यंतानां १, २, ३, ४, ५, ६, ७, द्वितीयखंड एवं नवांकसप्तांकयोः ९, ७, योगे कृते तदेव षोडश १६ परिमिताः स्युः । यतः षोडशगृहेषु रमलविद्यायाः सिद्धान्तः सदा युक्त एव वर्तते । एवं बोधनस्वरूपी पञ्चदशगृहे सकारमेकमेव वर्णं स्वगृहे स्थापयन्ति तस्मात्सकारो वसषेन युत एव वर्तते । तदेवाह । रमलविद्यायाः सिद्धान्तस्तु बिंदुरूपः स बिंदुर्द्विविधः युग्मः केवलरूपश्च । तत्रैक एव बिंदुः केवलरूपः । द्विबिंदुर्युग्मरूपश्च । तत्रादौ तेषु प्रथमखंडेषु मूलां-

१ चारनामेत्युपलक्षणम् । ततश्च मुष्टौपदार्थनामाक्षरेणाङ्कसंख्येत्यादिक्रमश्च वर्णक्रमेणावगन्तव्यः ।

केषु १, २, ३, ४, ५, ६, ७, ८, ९ केवलरूपा बिंदवो दशप्रभृति नवतिपर्य्यन्ताः । अत्राऽवजदमतेन चैषां संख्यांकानामधिपवर्णाः संगृह्यंते यथा य १० क २० ल ३० म ४० न ५० स ६० अ ७० फ ८० स्वा ९० एवं प्रथमगृहादिनवमगृहपर्यंतेषु यथाक्रमेण यकारादिस्वकारांतानां वर्णानामुत्पत्तिः ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| य | क | ल | म | न | स | अ | फ | स्व | क | र | श | न | त्स | ष | य | वर्णाः |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | २ | ३ | ४ | ५ | ६ | ७ | अंकाः |

अथ शेषवर्णानामुत्पत्तिमाह ।

तत्र द्वितीयखंडेषु १, २, ३, ४, ५, ६, ७ युग्मबिंदवो युताः संति तथा कृते याताः । १००, २००, ३००, ४००, ५००, ६००, ७०० शतादिसप्तशतपर्यंताः संख्यांकाः अत्राप्यवजदमतेन चैषां संख्यांकानामधिपवर्णाः संगृह्यंते । यथा क १०० र २०० श ३०० ग ४०० त्स ५०० ष ६०० य ७०० एवं दशमगृहादिषो-

अथ वर्णक्रमचक्रम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | — | — | — | — | ० | — | ० | ० | ० | — | ० | — | ० | — | ० | रूपिणः |
| — | — | — | — | — | ० | ० | ० | ० | — | ० | — | — | — | ० | ० | |
| — | — | ० | — | ० | — | ० | ० | — | ० | — | ० | — | — | ० | ० | |
| — | ० | — | ० | ० | — | ० | — | ० | ० | ० | — | — | ० | — | ० | |

डशगृहपर्यंतेषु यथाक्रमेण ककारादि यकारांतानां वर्णानामुत्पत्तिः स्यात् अत एव प्रथमगृहादिषु ककारादियकारांतानां वर्णानामेव ग्रहणां कृतं वर्तते ।

अथ रूपिणां दीर्घविस्तारपुष्टत्वमाह ।

तदर्थं वर्णक्रमो द्रष्टव्यः यो रूपी वर्णक्रमेण स्वगृहाच्चतुर्थे प्रश्नसमये चागतः स्यात् तदा स रूपी स्वदीर्घत्वे तिष्ठतीति ज्ञेयम् । यदि वर्णानुसारक्रमेण स्वगृहादष्टमे यो रूपी स्यात्तदा स रूपी स्वविस्तारत्वे तिष्ठतीति ज्ञेयम् । एवं यो रूपी स्वगृहाद्द्वादशे स्थितः स्यात्तदा स रूपी स्वपुष्टत्वे तिष्ठतीति ज्ञेयम् । उदाहरणम् । यथा मंदगस्य ⁝ गृहमस्मिन् क्रमे

चतुर्दशमस्ति । यदि मंदगः प्रश्नरमलस्य प्रथमगृह आयाति तदा स्वगृहाच्चतुर्थगृहे चोपविष्टत्वात् o/—/o स्वदीर्घत्वेऽस्ति ।एवं बोधन —/o/o/— स्यास्मिन्क्रमे पंचदशगृहमस्ति। स यदि प्रश्नरमलस्य द्वितीयगृहे पतितः स्यात्तदा स्वगृहाच्चतुर्थगृहे वर्तते सोऽपि स्वदीर्घत्वे तिष्ठति । एवं प्रश्नरमलेषु रूपिणां दीर्घत्वं सर्वत्रैव येज्ञम् । तद्यथा । रूपिणां दीर्घस्थानानि प्रथमगृहादिषु । यथाररूपिणः o/—/o/o वर्णक्रमे दशमगृहमस्ति । स यदि प्रश्नरमलस्य प्रथमगृहे पतितः स्यात्तदा स्वगृहादष्टमस्थाने तिष्ठति । अतएवाररूपी o/—/o/o स्वविस्तारत्वे तिष्ठति । एवं प्रश्नरमलेषु रूपिणां विस्तारत्वं सर्वत्रैव ज्ञेयम् । तद्यथा । रूपिणां विस्तारस्थानानि प्रथमगृहादिषु द्रष्टव्यानि एवमुष्णगुरूपिणः o/o/—/— अस्मिन् क्रमे षष्ठगृहमस्ति स यदि प्रश्नरमलस्य प्रथमगृहे पतितःस्यात्तदा स्वगृहाद्द्वादशस्थाने तिष्ठति । अत एवायं स्वपुष्टत्वे तिष्ठति । एवं प्रश्नरमलेषु रूपिणां पुष्टत्वं सर्वत्र ज्ञेयमिति । तद्यथा । पुष्टत्वस्थानानि प्रथमगृहाहिषु द्रष्टव्यानि । यथा चक्रेषु चोक्तं मया ॥

अथ दीर्घविस्तारपुष्टत्वानां संख्यामाह ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| o/—/—/o | —/—/o/— | o/o/o/o | o/—/—/— | —/—/—/o | —/o/—/— | —/—/o/— | —/—/o/o | o/o/—/— | —/o/o/o | o/o/o/— | o/o/—/o | o/—/o/o | —/o/—/o | o/—/o/— | —/—/—/— | दीर्घत्वं. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
| o/—/o/o | o/—/o/— | o/—/o/— | —/—/—/— | o/o/—/— | —/o/o/— | o/o/o/o | —/—/o/o | —/—/—/o | —/o/—/— | —/—/o/— | —/—/o/o | o/o/—/— | —/o/o/o | o/o/o/— | —/—/o/— | विस्तरत्वं. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
| o/o/—/— | —/o/o/o | o/o/o/— | o/o/—/o | o/—/o/o | —/o/—/o | o/—/o/— | —/—/—/— | o/—/—/o | —/o/o/— | o/o/o/o | o/—/—/— | —/—/—/o | —/o/—/— | —/—/o/— | —/—/o/o | पुष्टत्वं. |

तत्रादौ दीर्घत्वे रूपिणां युग्मकेवलरूपिणो विंदुसंख्या ग्राह्या सा संख्या रूपिणां दीर्घत्वं भवेत् । विस्तारत्वे केवलमेव गृह्यते

तत्त्वगणनामार्गेण वह्नेरेको १ वायोर्द्वौ २ जलस्य त्रयः ३ पृथिव्याश्चत्वारः ४ एवं तत्त्वगणना विचारणीया। पुष्टत्वे सा संख्या गृह्यते या द्वयोर्हननेनोत्पद्यते । दीर्घविस्तारगुणिता रूपिणां पुष्टत्वसंख्या स्यात्। यदैवं ज्ञानं भवेत्तदा संख्या वक्तुं शक्यते । तद्यथोदाहरणम् । वाग्मि ☰ रूपिणः सप्त ७ परिमिता संख्या कुतः वाग्मिरूपिणो युग्मकेवलरूपिणोः सप्त एव बिंदवस्तिष्ठंति एतत्सप्तपरिमितं वाग्मिनो दीर्घत्वं ज्ञेयम् । एवं सर्वेषां, अपरवाग्मिनो ☰ विस्तारश्चैक १ परिमितः। कुतः। वाग्मिनि वह्निबिंदुस्थितत्वात् । वह्नेरेको ग्राह्यः। अपरवाग्मिनः पुष्टत्वमपि सप्त७परिमितम्। कस्मात्। दीर्घः१ विस्तारगुणः एकेन गुणितन्तदेव इति वचनात् ॥ यथा द्वितीयोदाहरणम्।सौरि ☰ रूपिणोऽपि दीर्घत्वं सप्त७परिमितं विस्तारत्वं चत्वारः४तस्य पुष्टत्वमष्टाविंशति २८ परिमितम् तद्वत्सर्वेषां द्रष्टव्यम् ॥ एषप्रकारो बहुसमीचीनस्तथा प्रसिद्धतरो वर्तते ॥ अनेनैव सर्वत्रैव विजयं विंद्यात्। एष प्रकारो रमलसिद्धांतवेत्तृभिः बृहदाचार्यैः सिद्धांते कथितो वर्तते।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० — — — | — — — ० | — ० — — | — — ० — | — — ० ० | ० ० — — | — ० ० ० | ० ० ० — | ० ० — ० | ० — ० ० | — ० — ० | ० — ० — | — — — — | ० — — ० | — ० ० — | ० ० ० ० | रूपिणः |
| ७ | ७ | ७ | ७ | ६ | ६ | ५ | ५ | ५ | ५ | ६ | ६ | ८ | ६ | ६ | ४ | दीर्घत्वं. |
| १ | ४ | २ | ३ | ७ | ३ | ९ | ६ | ७ | ८ | ६ | ४ | ८ | ५ | ५ | १० | विस्तारत्वं. |
| ८ | ११ | ९ | १० | १३ | ९ | १४ | ११ | १२ | १३ | १२ | १० | १६ | ११ | ११ | १४ | पुष्टत्वं |
| ७ | २८ | १४ | २१ | ४२ | १८ | ४५ | ३० | ३५ | ४० | ३६ | २४ | ६४ | ३० | ३० | ४० | मथनम्. |

अथ केचिदाचार्या वदंति पुष्टत्वं नाम किमित्यत आह ।

दीर्घविस्तारयोर्योगे पुष्टत्वं भवेत्। न तु दीर्घविस्तारगुणितपुष्टत्वम्। एवं प्रकारेण वाग्मिनः पुष्टत्वं वसु ८ परिमितं जातम्।

तथा सौरेः पुष्टत्वं चैकादश ११ परिमितं यातमित्येवं सर्वेषां ज्ञेयम्।
एतद्रूपिणां दीर्घविस्तारपुष्टत्वादिकं प्रकृतिक्रमोपरि ज्ञातव्यम् ।
यो रूपी चास्मिन्वर्णक्रमेण स्वगृहे भवेत्स एव बलयुक्तो ज्ञेयः। यथा
गृहाः स्वगृहादिषु स्थिता एव बलयुता भवन्ति । इति जना वदंति॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये वर्णक्रमो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

तस्मिन् नवमाध्याये गृहाणां विचारांशस्य व्याख्यानं वर्तते ।
गृहरूपिणोर्मध्ये गृहं बलिष्ठं ज्ञेयम् । कस्मात् । गृहाणि स्थितिस्था-
नानि रूपिणः स्थितिकर्त्तारः । तत्र प्रथमं स्थितिस्थानान्यपे-
क्षितानि पश्चात्स्थितिकर्त्तारः । यद्यादौ स्थितिस्थानानि नो चेत्तदा
स्थितिकर्तारः कथमिति वचनात् । अत एव तावद्गृहाणां व्याख्यानं
करोमि पश्चाद्रूपिणां व्याख्यानं करिष्यामि।तत्र प्रथमगृहस्य विचारां-
शमाह । शरीरावयवायुर्दायसुखदुःखादीनां तथा नूतनावस्थायाः
विचारः।तथा बलस्य राजकर्मणस्तथा राजनीतिकस्य सम्यङ्नेष्टस्य
रोगशांतिकस्य वक्तृत्वसुगंधत्वयोश्च विचारः । प्रसन्नताम्लानतयोः
उद्वेगचिंतायाः संभावनायाः कार्याणां प्रारंभस्य सर्ववस्तूनां सिद्धां-
तस्य जातकानां जन्मनो विचारः । केचिद्वदंति चेदिदं प्रथमगृहं
सर्वमनोऽभिलषितस्य वर्तते । अत एव प्रथमगृहात्तनुस्थानाद्वि-
चारयेत् ॥ १ ॥

### अथ द्वितीयगृहस्य विचारांशमाह ।

द्रव्याणां विचारः कोशादिकस्य जीवनवृत्तेः । आहारस्य प्राप्ति-
व्यययोर्विचारः । मित्रत्वदातुः सहायकर्तुः साक्षीभूतस्य च विचारः।
ग्राह्यस्य दानस्य ऋणग्रहणस्य ऋणदानस्य लक्ष्मीप्राप्तेर्वराकत्वस्य
प्रवासिनामागमनस्य वस्तूनां क्रयविक्रययोर्विचारः । दातृत्वस्य

कृपणत्वस्य तनयाबालयोर्व्यापारफलप्राप्तेरप्राप्तेश्च । केषांचिद्गृहे यद्वस्तु स्थापितं तस्य विचारः । मृत्युसमये यत्किंचिद्भुक्तस्य दत्तस्य च, तद्वस्तुनो विचारो यद्वस्तु एकस्थानाद्द्वितीयस्थाने प्राप्तं भवेत् । स्थानांतरस्थबालानां गुणादिकदातृत्वस्य विचारः । इत्यादि द्वितीयगृहाद्धनस्थानाद्विचारयेत् ॥ २ ॥

अथ तृतीयगृहस्य विचारांशमाह ।

भ्रातुर्विचारः भगिन्याश्च । स्वगोत्रस्य स्वकुटुंबस्य बालानां मुखे क्षीरदातृस्त्रिया विचारः।यः कृपां कुर्यात्प्रीत्या तस्य स्वगृहाद्द्वितीयगृहगमनस्य शरीरकंपस्य वर्तमानावस्थातो द्वितीयावस्थांतरस्य निकटगमनस्य स्वप्नस्य स्वल्पविद्यायाः नियतेंद्रियस्य स्वधर्मस्यार्चनस्य नष्टवस्तुनो देवालयस्यच्छत्रशालायाः स्वप्नफलस्य च विचारः । केचिद्वदंति स्वप्नस्य फलं नवमगृहाद्विचारणीयम् । इत्यादि तृतीयगृहात्सहजस्थानाद्विचारयेत् ॥ ३ ॥

अथ चतुर्थगृहस्य विचारांशमाह ।

पितुर्विचारः स्थितसीम्नो विचारः । स्वसत्तया स्वात्मनो गृहेषु तूलिकोपधानपटादीनां भूसीमायाः सर्वेषां प्राचुर्यस्य क्षेत्रस्य वृक्षस्य वृक्षारोपणस्य तोयगतनाडिकाया अंत्यजमृतकस्थानस्य भूमिमध्ये यत्किंचिद्वस्तु स्थापितं तस्य गुप्तकार्यस्य ( कार्यावसाने किं भविष्यत्यस्य ) प्रष्टुर्यशोविचारः । इत्यादि चतुर्थगृहाद्विचारयेत् ॥ ४ ॥

अथ पंचमगृहस्य विचारांशमाह ।

स्त्री वर्तते वा पुरुष इत्यस्य दृष्टिलग्नपुरुषस्य दृष्टिलग्नस्त्रियाश्च तन्मित्रं वर्तते वा नेत्यस्य । आश्चर्यवस्तुनः सम्यङ्नूतनवस्तुनः प्रेष्यपुरुषस्य सर्ववृत्तांतानां नीतिकर्त्तुः पुत्रस्य प्रवासिनः पत्रिकायाः विचारः नूतनवध्वा गृहे मंगलस्य प्रसन्नतायाः स्वांग-

लग्नपटस्य नृपदत्तपटस्य विचारः । इत्यादि पंचमगृहात्सुतस्थानाद्विचारयेत् ॥ ५ ॥

अथ षष्ठगृहस्य विचारांशमाह ।

दासीदासाऽनुचरादीनां विचारः कर्तव्यः । तथा नीचजातीनां तथा शोकादीनां विचारांशं वदेत् । शिक्षाकरणस्य रोगिणां विचारः सगर्भायाः स्त्रिया विचारः स्पर्द्धायाः कुकर्मणो विचारः अगम्यागमनस्य च कुत्सितकार्यस्य बन्धगानां पुरुषाणां कठोरवस्तुनो विचारांशं विचारयेत् । तथा स्त्रीतिरस्कृतस्य पुरुषस्य तथा पुरुषतिरस्कृतायाः स्त्रियाश्च विचारो यो गुप्तस्थाने तिष्ठति तस्य विचारः वशीकरणादिप्रयोगस्य विचारः भेदः प्रकटो भविष्यति वा नेत्यस्य स्वभेदो गुप्तो वर्तते वा नेत्यस्य । पितुः स्थानांतरे प्राप्तिः स्याद्वा नेत्यादीनां भ्रातृणां स्थितिर्वर्तते वा नेत्यादिविचारः कर्तव्यः । चतुष्पदानां गर्दभानां च विचारांशः कर्तव्यः । अपरेषां चतुष्पदानां येषां चरणतले द्विधाकरणं नो भवेत् । तेषां च विचारांशः कर्तव्य इत्यादि षष्ठगृहाद्विचारयेत् ॥ ६ ॥

अथ सप्तमगृहस्य भार्यास्थानस्य विचारांशमाह ।

तस्मिन्सप्तमगृहे याच्यमानवस्तुनो विचारः । स्त्रीणां विवाहकरणस्य सांगत्यपुरुषस्य प्रवासिनो विचारः । भूकटकस्य प्रतिज्ञायाः शत्रूणां विचारः । यस्मात्पुरुषान्मनसि भयमुत्पद्यते तेन सार्द्धं कटकस्य विचारः । हठकर्मणः, केनापि पुरुषेण सह विवादविचारः । साक्षीभूतपुरुषस्य मध्यस्थपुरुषस्य पितामहस्य विचारः । मातुर्विचारः स्वगृहोपस्थितानां जनानां विचारः । चौराणां विचारः । पलायमानस्य । स्थापितवस्तुनो व्ययकर्तुर्विचारः। रक्तनीलादिवर्णानां विचारः। चौरादीनां स्वरूपस्य विचारः प्रवासिनो वृत्तांतस्य च वंधेजकस्य, ऋणग्राहकस्य सर्व-

वस्तूनां सिद्धांतं प्रथमतः सप्तमगृहाद्विचारयेत्पश्चात्प्रथमगृहविचारः । यथोक्तं फलं वक्तव्यम्।इत्यादि सप्तमगृहाद्भार्यास्थानाद्विचारयेत् ७॥

अथाष्टमगृहविचारः ।

साधारणभयस्य विचारः कर्तव्यःमार्गे द्विविधभयस्य मृत्युनो विचारः हन्यमानस्य विचारस्तथा घातकपुरुषस्य हालाहलस्य जलमग्नस्य । प्रवासिनो द्रव्यस्य चौरहृतवस्तुनो विचारः मृत्युपरीक्षितस्य मृतकस्य द्रव्यादीनां भागयोग्यस्य विचारः कर्तव्यः । ऋणप्रसंगेन द्रव्यस्य विचारः तथा स्त्रीणां द्रव्यस्य आयस्य मृतस्य द्रव्या दीनां भागयोग्यो न कश्चिद्भवति तस्य द्रव्याणि पृथ्वीपतिकोशयोग्यानि भवंति । लोके वैतालमाल इत्युच्यते तस्ये विचारः कर्तव्यः । चौरस्य विचारः भूमौ स्थापितस्य निधेर्विचारः दृष्टिलग्नपुरुषाणां गृहस्य पितुर्दृष्टिलग्नपुरुषस्य अभाग्यस्य विचारः यद्वस्तु नष्टं स्यात्तथा क्षीयमाणं स्यात्तस्य विचारः। उपद्रवाधिक्यस्य विचारः शत्रूणां मित्रत्वकरणस्य यदौषधेन शरीरं नष्टं स्यात्तस्य विचारः । इत्याद्यष्टमगृहाद्विचारयेत् ॥ ८ ॥

अथ नवमगृहस्य विचारांशमाह ।

दूरगतप्रवासिमार्गस्थ प्रवासिसाधारणस्य पथि कुशलादिकं विचारयेत् । प्रवासान्निवृत्तस्य विचारः स्वधर्मविद्यायाः स्थापितवस्तुनो लोके थातीत्युच्यते स्वदेशस्य विचारः स्वप्नफलस्य विचारः ये दूरकुटुम्बिनः श्यालिकाश्यालकप्रभृतयस्तेषां विचारः । दृष्टिलग्नमित्रस्य पितुः रोगस्य विचारः । प्रमाणवचनस्य देवानां दूतवचनस्य ईश्वराज्ञया मनसि या भाविनी वार्ताऽऽयाति तस्य विचारः । स्वप्नस्य विचारः । संध्यावचनस्य विचारः । अन्यायकर्तृपुरुषसांगत्येन कलहकरणस्य विचारः । पुस्तकानामध्ययनस्य, इत्यादि नवमगृहाद्विचारयेत् ॥ ९ ॥

अथ दशमगृहस्य विचारांशमाह ।

राज्यस्य विचारः।नृपाज्ञायाः परमपदवीकस्य नायकस्य विचारः प्रतिष्ठायाः गुरुत्वपदवीकस्य शुभनाम्नो विचारः । नृपतेजस्त्व कार्यादिकस्य विचारः । मांडलिकस्यानीतिकर्तुर्विचारः । महापुरुषस्य विचारः स्वस्वज्ञातिकर्म्मणो विचारः । गुरोर्विचारः स्वस्य श्वशुरस्य पितृव्यबालकानां स्वबालकानां रोगित्वस्य स्त्रीणां सत्ताया भूमिवस्तूनां विचारः । प्रवासिनो देशग्रामस्य चौराणां स्थिते भूम्याश्चौराणां गृहस्य नृपतेजस्त्वाद्भ्रष्टस्य परमपदवीसकाशात्पतितस्य स्वाज्ञायाः सर्वकार्याणां पूर्णत्वस्य स्ववृत्तिजीविकायाश्च विचारः । इत्यादि दशमगृहाद्विचारयेत् ॥ १० ॥

अथैकादशगृहस्य विचारमाह ।

आशायाः भाग्योदयस्य सात्त्विकमित्राणां परमपदवीप्राप्तेर्विचारः। यद्द्रव्यस्य हस्ते चागमनं तेजस्त्वेन भवेत्तस्य द्रव्यस्य विचारः । अशक्ततायाः विचारः । एकं वस्तु दृष्ट्वा तिष्ठेत्तस्य विचारः । न्यायकर्तुः यस्याः स्त्रियाः प्रथमपुरुषेण जातो बालस्तस्य विचारः । यस्य पुरुषस्य प्रथमास्त्रिया जातो बालस्तस्य बालस्य च भ्रातुः प्रवासस्थभूपतेः कोशस्य भ्रातुर्द्रव्यस्याकारस्य दुष्टानां विचारः । स्त्रीणामशक्ततायाः । अपरं तासां मिलनस्य भाग्यस्य लक्ष्म्या विचारः । धान्यकरणस्य ईश्वराणां स्तुतेर्विचारः । इत्याद्येकादशगृहाद्विचारयेत् ॥ ११ ॥

अथ द्वादशगृहस्य विचारमाह ।

दुष्टानां निषिद्धवचनचारः बृहच्चतुष्पदानां क्रयविक्रयस्य विचारः केचिद्वदंति येषां चतुष्पदानां खुराणि वृत्तानि भवंति तेषां चतुष्पदानां विचारः बंधस्य विचारः । तथा बंधगृहस्थरुद्धस्य च धार्यवस्तुनो विचारः । अभाग्यस्य कार्य्येभ्यो भिन्नतायाः । तथा नृपार्पितपरमपदव्या भिन्नता स्यात् । इत्यादिद्वादशगृहाद्विचारयेत् ॥ १२ ॥

अथ त्रयोदशगृहस्य विचारमाह ।

स्पर्द्धकपुरुषाणां भेदस्य चिंतायाः उपायस्य शरीरस्येच्छायाः मातुः परिणामस्य । दृष्टिलग्नपुरुषाणां प्रवासस्थशत्रूणां द्रव्यस्य वर्त्तमानसाक्षिभूतस्य चिंतनं कर्त्तव्यम् । शुभभाग्यस्यविचारः।अस्य त्रयोदशगृहस्य साक्षीभूतानि प्रथमपंचमनवमगृहाणि १, ५, ९, द्रष्टव्यानि इत्यादि त्रयोदशगृहाद्विचारयेत् ॥ १३ ॥

अथ चतुर्दशगृहस्य विचारमाह ।

स्वज्ञातितः परज्ञातिपुरुषस्य याच्यमानवस्तुनो विचारः।यद्वस्तु याच्यमाने गतं भवेत्तस्य तथा यद्वस्तु पृष्ठतो भवेत्तस्य विचारः मनोवार्तायाः परिणामस्य विचारः । अस्य चतुर्दशस्य साक्षीभूता द्वितीयषष्ठदशमगृहे २, ६, १०, द्रष्टव्या इति चतुर्दशाद्वि-चारयेत् ॥ १४ ॥

अथ पंचदशगृहस्य विचारमाह ।

बृहत्प्रसन्नतायाः विचारः । नीतिकर्तुः पंचदशगृहे यो रूपी स प्रश्नरमलस्य तुला पंचदशगृहे यो रूपी स किमर्थं तुलां यातः।इत्यत आह।यदि प्रश्नरमले कुत्राप्यशुद्धता स्यात्तदा काले अनेनैव पंचदशरू पिणा शुद्धाशुद्धत्वं विचारणीयम् तदाह।यदि प्रश्नसमये पंचदशगृहस्य रूपी विषमबिंदूनां भवति तदा तस्मिन् प्रश्नरमले कुत्रापि रूपिण्य-शुद्धता वर्तते । यदि च सप्तबिंदूनां पंचदशगृहे रूपी भवति तदा प्रश्नरमलमतीव शुद्धतरं ज्ञेयम् । अतः कारणादेवायं पंचदशगृहेषु यो रूपी स प्रश्नरमलस्य तुला ज्ञेया । अपरसर्वावस्थाया विचारः । सर्वकार्य्याणां विचारोऽस्माद्गृहाद्विचारणीयः । यथा । अनेन पुरु-षेण सार्द्धं विरुद्धं करोमि वा न एनं पुरुषं नीतिकर्तुर्निकटे गृहीत्वा-यामि वा न । अपरमनेन सार्द्धं संमतं करोमि वा नेत्यादिविचारः कर्तव्यः । अस्य साक्षीभूतास्तृतीयसप्तमैकादशगृहा ३, ७, ११,

द्रष्टव्याः । अपरं विक्रयस्य साटिकस्य विचारः । इत्यादि पंचदश-गृहाद्विचारयेत् ॥ १५ ॥

अथ षोडशगृहस्य विचारमाह ।

निश्चितताया: विचारः । मध्यस्थपुरुषस्य विवाहविचारः । त्यागकरणस्य याचनं सम्यग्वा त्यागकरणं सम्यगित्यस्य परिणाम-समीचीनस्य निदानीभूतस्य विचारः । अयं षोडशरूपिवचनस्य जिह्वा वर्तते । पुनरस्मादेव सर्वावस्थायाः स्वरूपं वाच्यम् । अत एवायं षोडशसर्वावस्थायाः स्वरूपी वर्तते । अस्य षोडशरूपिणः साक्षीभूताश्चतुर्थाष्टमद्वादशगृहा ४, ८, १२, द्रष्टव्याः । अपरयवनाचार्यैः कथितं वर्तते । किंच षोडशगृहचतुर्थगृहाभ्यां मिलित्वा यो रूपी चोत्पद्यते तेन रूपिणा सर्ववस्तूनां परिणामस्य विचारः कर्तव्यः । तथा । प्रवेशनिर्गमस्थिरद्विस्वभावरूपैः परिणामस्य फलं वाच्यम् । अत एवोक्तमेनं षोडशगृहरूपिणं चतुर्थगृहस्य रूपी बलं ददाति ॥ १६ ॥

अथ गृहाणां संज्ञा आह ।

"केंद्रपणफरापोक्लिम" इति वारचतुष्टयं समावृत्त्य द्वादशगृहाणां संज्ञा स्यात् । तत्र प्रथमगृहं १ केंद्रसंज्ञकं द्वितीयगृहं पणफरसंज्ञकं २ तृतीयगृहमापोक्लिमसंज्ञकम् । एवमग्रेऽपि ज्ञेयम् । तथा कृते प्रथम १ चतुर्थ ४ सप्तम ७ दशम १० गृहाणि केंद्रसंज्ञकानि भवंति ॥ केंद्रं नाम भव्यं सर्वगृहेषु बलिष्ठं श्रेष्ठं चे-तथा द्वितीय २ पंचम ५ अष्टमैकादश ८, ११ गृहाणि पणफरसंज्ञकानि भवंति ॥ पणफरं नाम मध्यमं नातिश्रेष्ठं नातिनेष्टं नाति बलिष्ठं च ॥ एवं तृतीय ३ षष्ठ ६ नवम ९ द्वादश १२ गृहाणि चापोक्लिमसंज्ञकानि भवंति ॥ आपोक्लिमं नाम चातिनेष्टं क्रूरं बलरहितमिति केचिदाचार्या वदंति । किंच द्वादशगृहेषु यानि गृहाणि प्रथमगृहं तनुस्थानं पश्यंति तानि श्रेष्ठानि बहुबलयु-

तानि च यथा १, ३, ४, ५, ७, ९, १०, ११ एतानि वसुपरिमितानि गृहाणि भव्यानि श्रेष्ठानि संति अपरं शेषाणि चतुर्गृहाणि २ ६, ८, १२ पतितानि नेष्टानि बलरहितानि ज्ञेयानि । एतद्बलसंमतेन बहुबलहीने चातीव नेष्टे द्वे षष्ठद्वादशे ६ १२ गृहे ज्ञेये कस्मात्। आपोक्लिममध्ये तथा पतितमध्येप्यतीव बलहीने इति वचनात्। परन्तु प्रसिद्धमिदं वर्तते। किंच रमलमध्ये त्रीणि गृहाणि ६, ८, १२ नेष्टानि संति । कस्मात् उभयसंमते चापोक्लिममध्ये तथा पतितमध्येऽपि स्थितत्वात्। अथ केंद्रगृहादीनां फलानि। तत्रादौ केन्द्रगृहाणां १, ४, ७, १० विचारांशो गुर्वाचार्याणामुपरि वर्तते। अपरं पणफरगृहाणां २, ५, ८, ११ विचारांशः स्थानभ्रष्टोपरि वर्तते । अपरमापोक्लिमगृहाणां ३ ६, ९, १२ विचारांशो यथास्थितोपरि तथा बलरहितोपरि वर्तते अथ यदि कोऽपि पृच्छेत् त्रयोदशादीनां १३, १४, १५, १६ व्याख्यानं किमित्यतआह । एतानि त्रयोदशादीनि गृहाणि यथाक्रमेण केंद्रगृहेषु चतुर्षु १, ४, ७, १० विभागरूपाणि संति । यथा केंद्रस्य प्रथमगृहं १ त्रयोदशगृहे १३ बद्धं तथा ४ चतुर्थगृहं चतुर्दशगृहे बद्धं एवं सप्तम ७ गृहं पंचदश १५ गृहे बद्धं एवं दशमगृहं १० षोडशगृहे १६ बद्धं वर्तते ॥ रमलपुस्तकेष्वेवमेव प्रसिद्धिर्वर्तते ॥ अथ केचिदाचार्यास्त्रयोदशादिचतुर्णां गृहाणां प्रकारांतरेण व्याख्यानं कुर्वन्ति। तदाह । एषां त्रयोदशादीनां चतुर्णां गृहाणां नामाधिक्यं साक्षीभूतमिति । अपरं केंद्रप्रथमगृहे १ त्रयोदश १३ गृहं बद्धम् ॥ एवं चतुर्दश १४ गृहे सप्तमगृहं ७ बद्धं तथा पंचदश १५ गृहे दशमगृहं बद्धं १० एवं षोडश १६ गृहं चतुर्थगृहे बद्धं ४ मिति कथितं वर्तते । अत्र पूर्वसंमतेन चतुर्दशादीनां त्रयाणामेव व्याख्यानांतरं कृतं त्रयोदशगृहं तु पूर्ववदत्रापि ॥ अस्याभ्यासः सम्यक्प्रकारेण कर्तव्यः ॥

अथ केषुचिद्ग्रंथेषु किंचिद्विशेषः कथितो वर्तते तमेवाह । केंद्ररूपी केंद्रगृहे यद्यायाति तदा शुभं फलं वक्तव्यम् । एवं केन्द्ररूपी यदि चापोक्लिमगृहेष्वायाति तदा नेष्टं फलं वक्तव्यम्।तथा यदि केन्द्ररूपी पणफरेष्वायाति तदा समानं फलं वक्तव्यम् । एवं पणफररूपी केन्द्रगृहे यद्यायाति तथापोक्लिमरूपी केन्द्रगृहे यद्यायाति तदा शुभं फलं वक्तव्यम् । एवं पणफररूपी यद्यापोक्लिमगृहेष्वायाति तदा नेष्टं फलं वाच्यम् । तथापोक्लिमरूपी पणफरगृहेष्वायाति तदा शुभं फलं वक्तव्यम् ।

अथ ग्रन्थान्तरेषु किंचिद्विशेषः कथितो वर्तते तमेवाह।त्रयोदशादीनां केन्द्रानुरक्तसंज्ञा । यदि केन्द्रानुरक्तरूपी केन्द्रगृहेष्वायाति तथा केन्द्ररूपी यदि केन्द्रानुरक्तगृहेष्वायाति तदा तद्रमलं बहुबलयुतं ज्ञेयमिति।तद्यथाऽत्र प्रकृतिक्रमेणोदाहरणं द्रष्टव्यम् वाग्मी ⁝ त्रयोदशगृहे प्रथमगृहस्य स्वामी तथा त्रयोदशगृहस्य स्वामी आरः ⁝ रूपी प्रथमगृहे एवं चतुर्दश १४ गृहस्वामी कवि ⁝ रूपी यदि चतुर्थगृहे तथा चतुर्थगृहस्य स्वामी सौम्य ⁝ रूपी यदि चतुर्दशगृहे एवं पंचदशगृहस्य स्वामी बोधन ⁝ रूपी सप्तमगृहे तथा सप्तमगृहस्य स्वामी सौरि ⁝ रूपी पंचदशगृहेष्वपेक्षितः स तु विषमबिंदुत्वात् कदापि पंचदशगृहे नायाति ॥ अत एष न धृतो मया तथा षोडशगृहस्य स्वामी शीतांशु ⁝ रूपी यदि दशमगृहे तथा दशमगृहस्वामी चोष्णगु ⁝ रूपी यदि षोडशगृहेष्वायाति एवं सर्वक्रमेषु ज्ञेयम् ।

अथ केषुचिद्ग्रन्थेषु केन्द्रप्रभृतिगृहाणां फलं तदाह।

तत्र केन्द्रस्य विचारांशः शरीरोपरि तथा अवयवोपरि तथा यानि वस्तूनि बलिष्ठानि तेषामुपरि तथा यानि वस्तूनि प्रकटानि संति तेषामुपरि तथा यत्किंचित्कर्म वर्तते तस्य कर्मणो योग्यवस्तूपरि जीवोपरि वा विचारांशः । तथाऽ

भूततद्भावार्थे यानि वस्तूनि संति तेषामुपरि अजातस्य तद्रूप-भवनमभूततद्भावः । अथापोक्लिमस्य विचारांशस्तित्क्षोपरि तथा स्पृहोपरि । तथा यानि वस्तूनि गुप्तानि संति तेषामुपरि तथा यानि वस्तून्यभ्यासे कृते स्वायतत्वे प्राप्नुवंति तेषामुपरि । अथ पणफरस्य विचारांशः शरीरोपरि तथा शरीर्य्युपरि पृथक् पृथग्वा द्वयोरुपरि । अपरं यानि वस्तूनि बलादभ्यासे कृते स्वायतत्वे नायांति तेषामप्युपरि स प्रकारः परमोत्कृष्टः पृथक् पृथक् शरीरिशरीरयोः शुभनेष्टज्ञानाय द्वयोर्वा शुभनेष्टज्ञानाय सुखादिकं शुभत्वं कष्टादिकं नेष्टत्वम् ॥

अथ प्रथमगृहप्रभृतिगृहाणां संज्ञा आह ।

वह्निमुखवायुमुखजलमुखभूमुखेति वारचतुष्टयं समावृत्य षोडशगृहाणां संज्ञा स्यात् । यथा प्रथमगृहं वह्निमुखं द्वितीयं वायुमुखं तृतीयं जलमुखं चतुर्थकं भूमुखम् । एवं सर्वेषां राशिचक्रेषु प्रकारांतरेण वर्तते । यथा मेषादीनां संज्ञा वह्निभूवायुजलमुखेति क्रमेण ज्ञेया तथा कृते यातानि चत्वारि गृहाणि वह्निमुखस्य ॥ १ । ५ । ९ । १३ । एवं चत्वारि गृहाणि ॥ २ । ६ । १० । १४ ॥ वायुमुखानि । एवं चत्वारि गृहाणि ॥ ३ । ७ । ११ । १५ ॥ जलमुखानि । एवं पुनरपि चत्वारि गृहाणि ॥ ४ । ८ । १२ । १६ ॥ भूमुखानि ।

अथ गृहाणां पूर्वादिज्ञानमाह ।

तत्र पूर्वदिशि वह्निगृहाणि ज्ञेयानि । उत्तरदिशि वायोर्गृहाणि ज्ञेयानि । एवं पश्चिमे जलगृहाणि ज्ञेयानि । दक्षिणदिशि भुवो-गृहाणि ज्ञेयानि । केचिद्वायुं पश्चिमदिशि वदंति । तथा जलमुत्तर-दिशि एतद्वाक्यं दृढतरं यस्मिन्नुपरि विचारयंति जनाः ॥

अथ संज्ञांतरमाह ।

वह्निवायुमुखगेहौ पुरुषौ ज्ञेयौ । तथा जलभूमुखौ स्त्रियौ-

ज्ञेये । अथ किंचिद्विशेष उच्यते । रमलेषु यानि गृहाणि यस्मिन्नुपरि विश्वासीकृतानि संति तान्यहश्यानि । अत एवांतःकरणेन जानीयात् । अथवा रूपिणां साहचर्याज्ज्ञातव्यानि । यथा रूपिणां शुभमशुभं तथा पुंस्त्रीरूपं तथा संख्यांकः तथा प्रकृतिदिशादिकं सर्वं वर्त्तते । तथा गृहाणामपि सर्वं ज्ञेयम् । यद्येकरूपी प्रश्नरमलेष्वेकस्मिन् गृहे स्थितः स्यात्स प्रकृतिविरुद्धगृहे स्थितो भवेत्तदा तं रूपिणं बलरहितं जानीयात् । अपरं यदि गृहरूपिणां प्रकृतिसाम्यता न स्यात्तदा तं रूपिणं बलिष्ठं जानीयात् । अपरं गृहाणां यद्विचारांशे स्थितं तत्सर्वं मया वक्ष्यमाणचक्रे स्थापयिष्यते । अरबदेशीयाचार्याणां संमतेन तदेवाह। गृहाणां मूलसंख्यासु वसु ८ भिर्भक्ते शेषांकास्तस्मिंश्चक्रे प्रथमगृहादिषु स्थापिताः संति । अत्र पश्चिमदेशीयाचार्याः शेषगृहस्य नामभावसाक्षीति कथयंति । अस्यार्थः । शेषांकसमगृहं मनोऽभिलषितस्य साक्षीभूतं ज्ञेयम् । यथा केनापि प्रश्नः कृतस्तदा द्रष्टव्यं कस्मिन् गृहे मनोऽभिलषितं वर्त्तते । यस्मिन् गृहे मनोऽलषितं स्यात्तदा द्रष्टव्यं तस्य गृहस्य शेषांकः कतिपरिमितो वर्त्तते । तदा तच्छेषांकं मनोऽभिलषितगृहात्प्रचालयेत् । द्वादशगृहावधि पुनः प्रथमगृहादिगणना कार्या ॥ यत्रावसानं भवेत्तत्रैव मनोऽभिलषितस्य साक्षीभूतं ज्ञेयमिति । यदि स रूपीमनोऽभिलषितरूपिणः साम्यतायां स्यात् । तदा ज्ञातव्यं मनोऽभिलषितकार्यसिद्धिर्भविष्यति विपर्यये विपर्ययः स्यात् । अस्योदाहरणं द्रष्टव्यम् । यथा । रमलपातने कृते प्रश्नो दशमगृहे वर्त्तते । दशमगृहं तु नृपप्रतापतेजस्त्वस्य अपरं दशमगृहे चोष्णगुरूपी स्थितः ⁞ तेन दशमगृहेण शेषांकाश्चत्वारः ४ प्राप्ताः । एतच्चतुर्णां ४ दशमगृहात्प्रचालने कृते प्रथमगृहेऽप्यवसानं यातमित्यत्र प्रथमगृहे आररूपी स्थितः ⁞ अयं रूपी मनोभिलषितरूपिणः साक्षीभूतो जातः । अत एवोक्तं मया

पूर्णप्रतापी नो भविष्यति तथा मनोऽभिलषितमपि नो भविष्यति । एवं सर्वत्रैव ज्ञेयमिति ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये ग्रहविचारांशो नाम नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

तस्मिन्दशमेऽध्याये ग्रहाणां चिंतनं वर्त्तते केंद्रादिक्रमेण । तत्र प्रथमकेंद्रे १तनुस्थाने शरीरोत्पत्तिस्थानोपरि चिंतनं वर्तते । शरीरोत्पत्तिस्थानन्तु पूर्वदिशि ज्ञेयम् । यत्रोदयाचले सूर्योदयः स्यात् । अत एव लग्नस्योदयसंज्ञा । तथा शरीरनिमित्ताय भोग्यवस्तुन उपरि भोग्यवस्तुस्थानमपि पूर्वदिक्सकाशात् । तथा शरीरभोग्यायुर्दायोपरि शरीरस्य विचारोस्ति। अथ प्रथमपणफरगृहे तनुस्थानाद्द्वितीयस्थाने शरीरस्य द्वितीयावस्थोपरि चिंतनं वर्तते । कस्मात् । तनुस्थानाद्द्वितीयस्थाने तिष्ठतीति वचनात् । अपरं यस्य निमित्ताय भोग्यायुर्दायः संतिष्ठेत्तस्यावस्थोपरि चिंतनं करोति पणफरगृहम् । तत्किमेतत् खानपानादिकं तस्य पश्चात्खानपानादीनां संबंधोपरि चिंतनम् । यतः खानपानादिकं ज्ञायते संबंधरूपं द्रव्यादिकम् । अथ प्रथमापोक्लिमगृहे तनुस्थानात्तृतीयस्थाने शरीरस्य तृतीयावस्थोपरि चिंतनं वर्तते । यथा प्रचलनं कष्टकरणम् । एतत्किम् । प्रतिदिनं यतः खानपानादिकं भवेत् । अपरम् । परममित्रोपरि तथा भगिनीभ्रात्रोरप्युपरि चिंतनम् । अपरं यो द्रव्यादिषु जीवनवृत्तिषु च भाग्ययोग्यो भवेत्तस्योपरि ।

अथ चतुर्थकेंद्रदशम १० गृहे शरीरविख्यातोपरि चिंतनं शरीरधारी पृथिव्यां प्रसिद्धो भवेत् । तथा शरीरस्योच्चतोपरि चिंतनम् । अपरं यत्किंचित्सिद्धत्वं भवेत्तस्याप्युपरि । यथा नृपतेजःप्रतापादिकं तथा स्वस्वज्ञातिकर्म्मगुणादीनामुपरि । एतत्सर्वं विख्यातप्रसिद्धत्वाद्भवति तथोच्चता स्यात् । अथात्र दशमगृहे प्रसिद्धत्वमुच्चत्वं च कस्मादुच्यत इत्यत आह । दशमगृहस्य व्योमसंज्ञा । व्योम त्वा-

काशं स्यात् । उच्चत्वे त्वाकाशं तिष्ठतीति वचनात् । दशमगृहे उच्चतायाः व्याख्यानं कृतं मया । प्रसिद्धत्वं तु यथा आकाशमार्गेण ग्रहादीनां भ्रमणत्वात्संपूर्णपृथिव्यां देदीप्यमानत्वं जायते । यथा ग्रहाः प्रसिद्धास्तथा सोऽपि नरः प्रसिद्धस्स्यात् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | गृहाणि. |
|---|---|---|---|---|---|---|---|---|
| ३ | ६ | ९ | १२ | १५ | १८ | २१ | २४ | गृहध्रुवांकाः |
| आतशी अग्नि | वादी वायु | आवी जल | खाखी भू. | आतशी अग्नि | वादी वायु | आवी जल | खाखी भू. | प्रकृतयः |
| पूर्व | पश्चिम | उत्तर | दक्षिण | पूर्व | पश्चिम | उत्तर | दक्षिण | दिशः |
| शुभं | समान | अशुभं | शुभं | शुभं | अशुभं | समान | अशुभं | शुभाशुभम्. |
| पुरु. | पु. | स्त्री. | स्त्री. | पु. | पु. | स्त्री. | स्त्री. | पु. स्त्री. |
| ५ | ६ | ७ | २ | ५ | ५ | ७ | ५ | मूलसंख्यां० शेषांकाः |

| ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | गृहाणि. |
|---|---|---|---|---|---|---|---|---|
| २७ | ३० | ३३ | ३६ | ३९ | ४२ | ४५ | ४८ | गृहध्रुवांकाः |
| आतशी अग्नि | वादी वायु | आवी जल | खाखी भू. | आतशी अग्नि | वादी वायु | आवी जल | खाखी भू. | प्रकृतयः |
| पूर्व | पश्चिम | उत्तर | दक्षिण | पूर्व | पश्चिम | उत्तर | दक्षिण | दिशः |
| शुभं | समान | अशुभं | शुभं | शुभं | अशुभं | समान | अशुभं | शुभाशुभम्. |
| पुरु. | पु. | स्त्री. | स्त्री. | पु. | पु. | स्त्री. | स्त्री. | पु. स्त्री. |
| ८ | ४ | २ | ७ | ३ | १ | ६ | ३ | मूलसंख्यां० शेषांकाः |

अथास्य पणफरगृहे शरीराणां पूर्वोक्तरूपिभ्यो द्वितीयावस्थायाश्चिंतनम् । सावस्थाऽस्य शरीरस्य पदवीप्रयोजनोपरि चिंतनम्, तथा भोग्यायुर्दायस्य प्रयोजनोपरि चिंतनं करोति । तथा तेषु प्रयोजनेषु बहुनिकटं दैवी भाग्योदयशक्तिः । तस्य पश्चादाशोपरि भाग्योदयस्य तथा भाग्यायुर्दायस्य प्रयोजनोपरि चिन्तनमेतत्कष्टप्रयोजनं जातमिति । अपरं तेषु प्रयोजनेषु मध्यमं तु मित्रसुहृदहृष्टलग्नादिकम् । अथास्यापोक्लिमगृहे १९शरीरस्य पूर्वोक्तव्यवस्था-

भ्यस्तृतीयावस्थोपरि कस्मात् । दशमस्थानात्तृतीयस्थाने तिष्ठतीति वचनात् । अत एव दशमगृहप्रयोजनस्याधीनतायां यावंति वस्तूनि संति तेषामुपरि चिंतनम् । यथा कठोरवचनेभ्यो मनसि समाधानकरणम् । तथा नेष्टत्वेभ्यश्च शत्रुभ्यश्च स्वस्पर्धायुतपुरुषेभ्यश्च कठोरवचनं श्रुत्वा क्षमाधनुर्गृह्णीयात् । कोऽर्थः एषां वचनेभ्यः स समानो भवेत् ।

अथात्र सत्त्वादीनामुपद्रवाः कस्मादित्यत आह ।

यथा पुरुषस्य बृहन्महत्त्वं जातं तथा पृथिव्यां प्रसिद्धो जातो यदा तदा शत्रव उत्पद्यंते नान्यथा । उक्तं च । "दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना। अशक्तास्तत्पदं गंतुं ततोनिंदां प्रकुर्वते। "अथ तृतीयकेंद्रसप्त ७ मगृहस्य चिंतनमाह । यत्सप्तमगृहं तनुस्थानात्सम्मुखे वर्तते । अत एव सप्तमगृहं तनुस्थानतुल्यं ज्ञेयमिति । तनुगृहस्य पूर्वं उदयाचलस्थानं तथा तस्य सम्मुखस्य सप्तमगृहस्य पश्चिमेऽस्ताचलस्थानं ज्ञेयम् । अत एव सप्तमगृहस्थानस्यास्तसंज्ञा । अत एव सप्तमगृहे शरीरस्य दृष्टिधर्मोपरि चिंतनम् । अत्र दृष्टिधर्मं तु भर्तारं कथयाति । तथा विवादिस्पर्द्धिपुरुषस्योपरि तथा वादिपुरुषो वर्वते तथा शत्रुः कोऽपि । कस्मात् तस्य सप्तमगृहस्य स्थानं पश्चिमेऽस्ताचले तिष्ठतीति वचनात् । पश्चिमं किं तनुगृहस्य मनोऽभिलषितानां स्थानम् । अत एव सप्तमगृहे शरीराणां मनोऽभिलषितस्य चिंतनम् । तथा तस्य शरीरस्य प्रचलनोपरि चिन्तनम् । अथास्य पणफरगृहे ८ शरीरस्य पूर्वोक्तव्यवस्थाभ्यो द्वितीयावस्थोपरि चिंतनम् । यथा मृत्योः कारणोपरि चिंतनम् । कस्मात् । सप्तमगृहस्यास्तस्थानं तस्मादप्यग्रे तिष्ठतीति वचनात् । अपरं तस्य शरीरस्याधोमुखोपरि चिंतनम् । तथा द्रव्यादीनां कारणोपरि स्वांशोपरि च तथा स्पर्द्धालुपुरुषाणां चिंतनम् । एतत्कस्मात् कथितमित्यत आह । तनुगृहतुल्यसप्तम-

स्थानाद्द्वितीयस्थाने तिष्ठतीति वचनात् । तथेदं ८ गृहं शत्रूण मित्रत्वदानस्य । अथास्यापोक्लिमगृहे ९ शरीरस्य पूर्वोक्तव्यवस्थाभ्यस्तृतीयावस्थायाश्चिंतनं वर्तते । विद्याहेतोश्चिंतनं तथा स्वधर्ममार्गस्य तथा प्रवासस्य नियतेन्द्रियस्य तथा नैष्ठिकस्य । कस्मात् मरणांते स्वधर्ममार्गादिकं विना कार्य्यं किमपि नायातीति वचनात् । अथ द्वितीयकेन्द्रचतुर्थगृहे ४ चात्यंतगुप्तत्वस्य चिंतनम् अतीव गुप्तवस्तूनां चिंतनम् । यथा दशम १० गृहे चतुर्थकेन्द्रेऽतीव प्रकटत्वस्य चिंतनं कथितं मया । तथात्र चतुर्थगृहेऽतीव गुप्तस्य विचारो वर्तते । कस्मात् ? चतुर्थगृहं दशमगृहात्सम्मुखे तिष्ठतीति वचनात् । अत एव दशमगृहफलानि विपरीतमार्गेण चतुर्थगृहयुतानि।यानि फलानि दशमगृहे सन्ति तान्यत्र चतुर्थगृहे विपरीतरूपाणि ज्ञेयानि । तत्किमेतत् । यथा एकांतस्थलोपरि गुप्तोपरि गुप्तवास्तूनामुपरि भूमिस्थद्रव्योपरि चिंतनं करोति ।अपरं तस्य चिंतनं वर्तते॥ यस्मात् गुप्तबालकः प्रसिद्धो भवेत् ।यथा जनकस्तथा तादृशोयस्यगोत्रेषु तेषामपि चिंतनम् । अपरमनेनमार्गेण वक्तव्यन्तदाह ध्रुवतारकद्वयं वर्तते।एकमुत्तरदिशि चोर्द्ध्वस्थं ध्रुवतारकं दशमगृहस्य ज्ञेयम्। तथा तस्य दशमगृहस्य सम्मुखे चतुर्थगृहस्य स्थानं दक्षिणदिशि ध्रुवतारकं रसातलस्थं ज्ञेयम् । अत एव चतुर्थगृहस्य पातालसंज्ञा तदा निम्नगभूम्याश्चिंतनम् ।तथा स्थलोपरि स्थितिस्थानोपरि तथा परिधानवस्तुन उपरि चिंतनं करोति।तथा यद्वस्तुन उत्थापने कृते स्थानांतरे नो व्रजेत्तस्योपरि चिंतनं करोति । यथा कूपभूमिवृक्षादिकम् । अपरमनेन मार्गेण वक्तव्यम् । तदाह । दशमगृहस्य परिणामं चतुर्थगृहं ज्ञेयम् । अत एवायुः पूर्णं जातमित्यस्य चिंतनं करोति । एवमेतादृशानां चिंतनं कर्त्तव्यमिति । अथास्य पणफरगृहे ५ पूर्वोक्तव्यवस्थाभ्यो द्वितीयावस्थोपरि यथा गुप्तवस्तूनि प्रकटानि भवंत्यस्य, यथा बालकादयो गुप्तत्वात्प्रकटा

भवेयुः । कुतश्चिद्वृत्तांतप्राप्तेश्चिंतनम् । कुतश्चिद्वस्तुन आगमनस्य अपरक्षेत्रेषु यथा गोधूमचणकादीनां शुष्कस्य चिंतनं करोति । अथास्यापोक्लिमगृहे ६ पूर्वोक्तव्यवस्थाभ्यस्तृतीयावस्थोपरि चिंतनं करोति। कस्मात् । चतुर्थस्थानात्तृतीयस्थाने तिष्ठतीति वचनात् । तस्मिन्षष्ठगृहे दासीदासादीनामवस्थायाश्चिंतनम् । तथा चतुष्पदानामवस्थायाश्चिंतनम् ।कस्मात् इदं षष्ठगृहं सर्वगृहकार्यकर्तृज्ञेयमिति वचनात् । तथा वस्त्रादीनां कार्यकर्त्ता ज्ञेय इत्यपि। अपरं रोगिणः अवस्थोपरि चिंतनम् । इयमप्येकांतस्थले स्थिता वर्त्तत इति वचनात् अथापरः यत्पूर्वोक्तप्रत्येकगृहाणां विचारांशः स तु विशेष्यविशेषणपूर्वेण नोक्तोमया संज्ञामात्रं प्रोक्तं च किमर्थं ये पुरुषाः स्वच्छप्रकृतिरूपाः बुद्धिप्रकाशरूपाः । कुशाग्रबुद्धिरूपाश्चितनं यस्य सत्यतां यांति तेषां पुरुषाणां ज्ञानाय सर्वसंज्ञामात्रं पूर्वोक्तम् । अथापरं यदिदानीं प्रत्येकगृहाणां चिंतनं प्रोक्तं चेत्तत्सर्वभेदानां सिद्धांतो वर्त्तते। अपरं प्रागग्रे यद्बहुग्रंथे प्रत्येकयवनाचार्य्यैः कृतं वर्तते तत्सर्वं ग्रंथेभ्यः सर्वभेदसिद्धांतेभ्यो रहितं ज्ञेयमिति।अस्मिन्ग्रंथेह्येतच्च स्फुटं मया प्रकाशितं एतादृशः प्रकारः केष्वपि रमलपुस्तकेषु तथा ज्योतिषशास्त्रे कुत्रापि नास्ति । अतः कारणादेतद्रहस्यं केषां चिदग्रे न प्रकाशनीयं प्रयत्नतो गोपयेत् । सम्यक्प्रकारेण स्थापयेत् यस्मै कस्मै न दातव्यमिति ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये प्रत्येकगृहाणां चिन्तनं नाम दशमोध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः ।

अस्मिन्नेकादशाध्याये गृहाणि साक्षीभूतानि संति।तथामनोऽभिलषितरूपिण उपरि रूपिणां दृष्टिज्ञानमुक्तमस्ति अपरं भूतभविष्यद्वर्तमानज्ञानं प्रश्नरमलेष्वेतेषां प्रकटीकरणमत्यावश्यकं तदाज्ञाकरणे समर्थो भवेत् । तत्र रमलेष्वेकः साक्षीभतो निकट एकश्च दूरे

तिष्ठतीति वचनात् । साक्षीभूतो द्विविधः । एवं दृष्टिकर्ता अपि द्विविधः । एको निकट एकश्च दूरे तिष्ठतीति वचनात् । तत्र प्रश्न-गृहाद्द्वितीयगृहे निकटसाक्षीभूतो ज्ञेयः । तथा प्रश्नगृहात्पंचमगृहे दूरसाक्षीभूतो ज्ञेयः । एवं प्रश्नगृहात्तृतीयगृहे निकटदृष्टिकर्ता । तथा प्रश्नगृहात्सप्तमगृहे दूरदृष्टिकर्ता ज्ञेयः । एवं मनोभिलषित-रूपिणौ दूरोपस्थौ साक्षाद्भूतवृष्टिकर्तारौ ज्ञेयौ यदि कोऽपि पृच्छे-त्तदा द्रष्टव्यं तस्य प्रष्टुः प्रश्नं कस्मिन् गृहे तथा कस्माद्गृहाद्द्वितीये तृतीये च तथा पंचमे सप्तमेऽपि च पश्येत् । तत्र द्वितीयपंचमस्थौ रूपिणौ प्रश्नस्य निकटदूरौ साक्षीभूतौ ज्ञेयौ । एवं निकटदूरतृतीय सप्तमस्थौ रूपिणौ प्रश्नस्य दृष्टिकर्तारौ ज्ञेयौ । तत्र सर्वं प्रश्नं द्विविधं द्विप्रकारे सर्वाणि प्रश्नानि संति एकं तु सन्धिरूपम् । एकं च भिन्नरूपम् । सम्मेलनकरणं संधित्वं पृथक्करणं भिन्नत्वम् । यदि संधौ प्रश्नं भवेत् । तदा तं प्रश्नरूपिणं तथा तस्य साक्षीभूतौ दृष्टि-कर्तारौ च पश्येत् । यदि ते प्रवेशिनः स्युस्तदा वक्तव्यं संधिरूपं मनोऽभिलषितं सिद्धिं प्रयास्यति । यदि प्रवेशिनः शुभरूपिणोभवे युस्तदा सुगममार्गेण कार्यसिद्धिः । यदि च प्रवेशरूपिणः अशुभा भवेयुस्तदा कष्टेन कार्यसिद्धिः । अथ यदि भिन्नतायाः प्रश्नं भवेत् । तदा तं प्रश्नरूपिणं तथा तस्य साक्षीभूतौ दृष्टिकर्तारौ च पश्येत् । यदिमे निर्गमाः स्युस्तदाज्ञा कर्तव्या भिन्नतायाः पर्य्यायरूपां कार्यसिद्धिं प्रयास्यति ॥ यदि ते निर्गमाः१ शुभाः भवेयुस्तदा सुगममार्गेण कार्यसिद्धिः । यदि च निर्गमरूपिणः अशुभा भवेयुस्तदा कष्टेन कार्यसिद्धिः । द्विस्वभावेषु स्थिरेषु च नामसमानं फलं वाच्यम् । अथ किंचिद्विशेष उच्यते । यदि प्रश्नरू-पिणः साक्षीभूतौ दृष्टिकर्तारौ द्वौद्वौ रूपिणौ द्वितीयतृतीयगृहस्थौ तथा पंचमसप्तमगृहस्थौ निजदूररूपौ प्रकृत्या विपर्य्ययरूपौ भवेतां तदाऽपरविचारो ज्ञेय इति । तथा प्रश्नरूपी निर्गमः स्यात्तदा तौ द्वौ

निजदूररूपौ प्रवेशिरूपौ यदि भवतः।अथवा प्रश्नरूपिणौ प्रवेशी तौ च निर्गमौ यदि भवतः अथवारमलेषु साक्षीभूतावेव प्रश्नरूपिणौ प्रकृत्या विपर्य्ययरूपौ भवतः । तत्रोपायमाह-निजेन निजं दूरेण दूरस्थं गुणयेत् । तत्र प्रश्नगृहात्पंचमरूपिणं सप्तमरूपिणा गुणयेत।आभ्यां यो रूपी चोत्पन्नो भवेत्तमेकस्मिन् स्थले स्थापयेत् । पश्चात्प्रश्नरूपिणो यो द्वितीयगृहे रूपी भवेत्तं प्रश्नतृतीयरूपिणा गुणयेत् । आभ्यां यो रूपी चोत्पन्नस्तं पृथक् स्थापयेत् । पश्चात् पृथक्स्थाभ्यां द्वाभ्यां रूपिभ्यां यो रूपी भवेत्तं च प्रश्न रूपिणा गुणयेत्।अनेन यो रूपी भवेत्तेन रूपिणा संधिरूपे भिन्नरूपे च कार्य्ये पूर्ववदाज्ञां कुर्यात् । द्विस्वभावे तथा स्थिररूपे च नामसमानं फलं वाच्यम् । इति मुख्यसंमतं भवति ।

अथ पश्चिमदेशीयाचार्याः किंचिद्विशेषं वदंति ।

ते च प्रश्नरमलस्य चतुर्दश १४ पंचदश १५ गृहे चाज्ञाकरणार्थं विश्वासं कुर्वंति । तद्यथा प्रष्टुः प्रश्नः संबंधिनां वर्तते । तदा प्रश्नगृहस्य रूपी तथा चतुर्दश १४ पंचदशगृहयोः रूपिणौ ॥ एते च त्रयो यदि प्रवेशिनः स्युस्तदा संमेलनरूपमनोऽभिलषितकार्य्यसिद्धिः स्यात् । यदि निर्गमाः स्युस्तदा संधिसंबंधकार्यं सिद्धिं नो प्रयाति । ते प्रवेशरूपिणो यदि शुभा भवेयुस्तदा सुगममार्गेण कार्य्यसिद्धिः । यदि च प्रवेशरूपिणश्चाशुभा भवेयुस्तदा कष्टेन कार्यसिद्धिः । अपरं यदिमे त्रयो द्विस्वभावरूपाः स्युस्तदा कार्यं सिद्धिं गतं पुनरपि हस्ताद्व्रजेत् । यदि शुभा भवेयुस्तदा स्वायतत्वेन कार्यसिद्धिः । यदि चाशुभा भवेयुस्तदा स्वायतत्त्वेन कार्यसिद्धिर्नस्यात् । कोर्थः अनायासेन कार्यसिद्धिः अपरं यदिमे त्रयः स्थिराः स्युस्तदा कार्यं यथास्थितमवतिष्ठेत् । यदि ते शुभा भवंति तदा परिणामे कार्यसिद्धिः । यदि चाशुभा भवंति तदा कदापि कार्यसिद्धिर्न स्यात् । मिश्रितेषु मिश्रितं फलं

वाच्यम् अपरं यदि प्रष्टुः प्रश्नो भिन्नतया स्यात्तदा प्रवेशिनिर्गमद्वि-स्वभावस्थिरेषु संधेः फलं विपर्ययरूपं वक्तव्यम् । तद्यथा भिन्नतया प्रश्ननिर्गमेषु सिद्धिं प्रयाति प्रवेशिषु सिद्धिं नो प्रयाति । द्विस्वभा-वस्थिरयोर्मध्ये पूर्ववत् फलं वक्तव्यम् शुभाशुभरूपिणां फलं पूर्व-वत् यदि तेषु त्रिषु कोऽपि प्रवेशी कोऽपि निर्गमः कोऽपि द्विस्वभावः स्थिरो वा तदा किं वक्तव्यमित्यत आह । चतुर्दशं १४ पंचदशेन गुणयेत् १५ तेन यो रूपी चोत्पन्नो भवेत्तं च प्रश्नरूपिणा गुणयेत् । आभ्यां यो रूपी भवेत्तेन रूपिणा प्रश्नेषु पूर्ववत् फलं ब्रूयात् ।

अथ पश्चिमदेशीयाः केचिद्विशेषं वदंति ।

प्रश्नरमलेषु द्वाभ्यामेव रूपिभ्यां चतुर्दश १४ पंचदशभ्यां १५ कृत्वा सर्वं प्रश्नं ब्रूयात् । यदि द्वौ चैकरूपौ न भवत-स्तदा ताभ्यां यो रूपी भवेत्तेन मनोऽभिलषितस्य चाज्ञां कुर्यात् । किमपि प्रश्नं भवेत् । अत्रापि प्रवेशिनिर्गमद्विस्वभावस्थिरैः शुभा-शुभरूपैः पूर्ववत्फलं वक्तव्यम् प्रकारद्वयप्रश्ने ॥

अथ भूतभविष्यवर्तमानगृहाण्याह ।

गृहात्पृष्ठे यद्गृहं भवेत्तद्भूतगृहं ज्ञेयं एवं गृहादग्रे यद्गृहंभवेत्तद्भ-विष्यरूपं गृहं ज्ञेयम् । वर्तमानं तुस्वयमेव तद्गृहं ज्ञेयम् ।एतत्सर्वं द्वादशगृहपर्य्यंतेष्वेव विश्वासः कृतो वर्तते । तत्र प्रथमगृहस्य भूत-रूपं द्वादशगृहम् । एवं प्रथमगृहस्य भविष्यरूपं द्वितीयं गृहं वर्त्त-मानं तु स्वयं प्रथमगृहमेव । एवं द्वितीयगृहस्य भूतरूपं प्रथमगृहं ज्ञेयम् । भविष्यरूपं तृतीयगृहं द्वितीयगृहस्य वर्तमानं तु स्वयमेव द्वि-तीयगृहम् । एवं द्वादशगृहाणां भूतभविष्यवर्तमानसंज्ञा ज्ञातव्याः । बुद्धिमतः पुरुषस्यैतावदेव बहुतरं वर्तते ।

अथैषां प्रयोजनमाह ।

यदि द्वादशरूपी प्रश्नेष्वशुभो भवेदपरं प्रथमद्वितीयरूपिणौ शुभौ यदि भवतस्तदाज्ञां कारयेत् । भोः पृच्छक भवदीया-

वस्था पृष्ठेऽतीतकाले निषिद्धतरा अभूत्। अधुना वर्तमाने समीचीनावस्था वर्तते। अग्रेऽपि समीचीनावस्था भविष्यति। एवं यदि प्रश्नेषु द्वादशरूपी शुभो भवेदपरं प्रथमद्वितीयरूपिणावशुभौ यदि भवतस्तदा वक्तव्यम्। भोः पृच्छक भवदीयावस्था पृष्ठे अतीतकाले समीचीनाऽभूत्। अधुना वर्तमाने निषिद्धतराऽवस्था वर्तते। अग्रेऽपि निषिद्धतरावस्था भविष्यति। यदि च प्रथमरूपी शुभो भवेदपरं द्वादशद्वितीयरूपिणावशुभौ यदि भवतस्तदा वक्तव्यम्। भोः पृच्छक भवदीयावस्था पृष्ठेऽतीतकाले निषिद्धतराऽभूत्। इदानीं समीचीनावस्था वर्तते। अग्रे-निषिद्धतरावस्था भविष्यति। एवं यदि प्रथमगृहरूपी अशुभो भवेद्द्वौ च शुभौ यदि भवतस्तदा वक्तव्यम्। भोः पृच्छक भवदीयावस्था पूर्वमतीतकाले समीचीनाऽभूत्। अधुना निषिद्धतराऽवस्था वर्तते। अग्रे तु समीचीनाऽवस्था भविष्यति। यदि च द्वादशरूपिणौ प्रथमशुभौ भवतस्तदा द्वितीयरूपी अशुभो यदि भवेत्तदा वक्तव्यम्। भोः पृच्छक भवदीयावस्था पृष्ठेऽतीतकाले समीचीनाऽभूत्। इदानीं समीचीनावस्था वर्तते। अग्रे निषिद्धतरावस्था भविष्यति। यदि च द्वादशप्रथमरूपिणावशुभौ भवतस्तदा द्वितीयरूपी शुभो यदि भवेत्तदा वक्तव्यम्। भोः पृच्छक भवदीयावस्था पृष्ठेऽतीतकाले निषिद्धतराऽभूत्। अधुनापि निषिद्धतरा वर्तते। अग्रे तु समीचीना भविष्यति। एवमन्यत्रापि प्रश्नसमयस्य भूतभविष्यद्वर्तमानेषु रूपिषु नेष्टेषु नष्टं फलं शुभेषु शुभं फलं वक्तव्यम्। एवं भूतभविष्यवर्तमानरूपाः पुरुषावस्था जीवावस्था वा वक्तव्याः।

अथ केचिदाचार्याः किंचिद्विशेषं वदंति।

अत्र प्रथमं केंद्रगृहं १ वर्तमानं ज्ञेयम्। अस्य पणफर २ गृहं भविष्यकालरूपं ज्ञेयम्। एवमस्यापोक्लिम ३ गृहं भूतकाल-

रूपं ज्ञेयम् । तथा द्वितीयकेंद्रगृहं ४ वर्तमानकालरूपं ज्ञेयम् ।अस्य पणफरगृहं ५ भविष्यकालरूपं ज्ञेयम् । एवमस्यापोक्लिमगृहं ६ भूतकालरूपं ज्ञेयम् । तथैव तृतीयकेंद्रगृहं ७ वर्तमानकालरूपं ज्ञेयम् । अस्य पणफरगृहं ८ भविष्यकालरूपं ज्ञेयम् । एवमस्यापोक्लिमगृहं ९ अतीतकालरूपं ज्ञेयम् । पुनस्तथा चतुर्थकेंद्रगृहं १० वर्तमानकालरूपं ज्ञेयम् । अस्य पणफरगृहं ११ भविष्यकालरूपं ज्ञेयम् । एवमस्यापोक्लिमगृहं १२ भूतकालरूपं ज्ञेयम् । एतेषामपि फलं पूर्ववद्धक्तव्यम् ।

अथ किंचिद्विशेष उच्यते ।

केनापि संबंधेन द्वे गृहे स्वस्मिन्त्साक्षीभूते भवतः । अत्र द्विसंबद्धं गृहं स्वस्मिन् साक्षीभूतं वर्तते । एकं तु केंद्रेण पणफरेण चापोक्लिमेन । द्वितीयं तु एतेभ्यः केंद्रादिसंबंधेभ्यः अपरसंबंधेन ज्ञेयम् । एवं स्वस्मिन् साक्षीभूतौ वर्तेते किमर्थम् । मनोऽभिलषितकार्यसिद्ध्यसिद्धिविचारणार्थम् । तद्यथा । प्रथमसप्तमगेहौ स्वस्मिन् साक्षीभूतौ परं तु संबंधद्वयेन एकं तु केंद्रेण । कस्मात् । प्रथमगृहं केंद्ररूपमुदयाचलस्य । तथा सप्तमगृहं केंद्ररूपमस्ताचलस्य वर्तते । इति वचनात् । द्वितीयं त्विदम् । सप्तमगृहस्य प्रथमगृहेण सार्द्धं विवाहसंबंधोऽस्ति । कस्मात् । तनुस्थानं पुरुषस्य स्त्रियाश्च सप्तमस्थानमिति वचनात् । अत एव प्रथमगृहसप्तमगृहौ स्वस्मिन् साक्षीभूतौ वर्तेते । एवं द्वितीयाष्टमगृहौ स्वस्मिन् साक्षीभूतौ वर्तेते परंतु संबंधद्वयेन । एकं तु पणफरेण । कस्मात् । द्वितीयगृहमुदयाचलकेंद्रस्य पणफररूपम् तथाष्टमगृहमप्यस्ताचलकेंद्रस्य पणफररूपं वर्तते इति वचनात् । अपरद्वितीयं त्विदम् । उदयाचलकेंद्राद्द्वितीयगृहं धनस्थाने तिष्ठतीति । तथास्ताचलकेंद्रादष्टमगृहमपि धनस्थाने तिष्ठति इति वचनात् । कस्मात् । द्वे गृहे द्रव्यादीनां वर्तेते । इति अत एव द्वितीयगृहाष्टमगृहौ स्वस्मिन्साक्षीभूतौ एवं

तृतीयनवमगृहौ स्वस्मिन्साक्षीभूतौ । इदमपि संबंधद्वयेन एकं तु चापोक्लिमेन । कस्मात् । तृतीयगृहमुदयाचलकेंद्रस्यापोक्लिमरूपं तथा नवमगृहमस्ताचलकेंद्रस्यापोक्लिममिति वचनात् । अथ द्वितीयं त्विदं तृतीयगृहस्य नवमगृहेण संबंधो वर्तते केन प्रसंगेन प्रवासिप्रसंगेन । तथा प्रचलनप्रसंगेन तथा स्वप्नप्रसंगेन । अत एव तृतीयनवमगृहौ स्वस्मिन् साक्षीभूतौ परंतु अत्रापि संबंधद्वयेन एकं केंद्रेण । कस्मात् । चतुर्थगृहं केंद्ररूपं पातालस्य ध्रुवतारकस्य । तथा दशमगृहं केंद्ररूपमाकाशस्य ध्रुवतारकस्य इतिवचनात् । द्वितीयं त्विदं वर्तते । चतुर्थगृहस्य दशमगृहेण संबंधो वर्तते । केन प्रसंगेन स्थितिप्रसंगेन तथा तेजस्त्वप्रसंगेन तथा प्रतापप्रसंगेन तथा मातृपितृप्रसंगेन तथावस्थाप्रसंगेन तथा परिणामप्रसंगेन अत एव पंचमैकादशगृहौ स्वस्मिन् साक्षीभूतौ अत्रापि संबंधद्वयेन एकं तु पणफरेण । कस्मात् । पंचमगृहं पणफररूपं पातालस्य ध्रुवतारककेंद्रस्य तथा चैकादशगृहं पणफररूपमाकाशस्य ध्रुवतारकस्य। इति वचनात् । द्वितीयं त्विदं पंचमगृहस्यैकादशगृहेण संबंधो वर्तते । केन प्रसंगेन खानपानादिप्रसंगेन, तथाद्भुतप्रसंगेन तथा कल्याणप्रसंगेन,तथा शास्त्रसंगेन,तथा भाग्योदयप्रसंगेन, तथा दृष्टिलग्नमित्रप्रसंगेन । अत एव पंचमगृहैकादशगृहौ स्वस्मिन् साक्षीभूतौ वर्तते । एवं षष्ठद्वादशगृहौ स्वस्मिन् साक्षीभूतौ । परंतु संबंधद्वयेन । एकं तु चापोक्लिमेन । कस्मात् । षष्ठगृहमापोक्लिमं पातालस्थध्रुवतारककेंद्रस्य । तथा द्वादशगृहमापोक्लिमरूपमाकाशस्थ ध्रुवतारककेंद्रस्य इति वचनात् । अपरं द्वितीयं त्विदं षष्ठगृहस्य द्वादशगृहेण संबंधो वर्तते । केन प्रसंगेन रोगित्वप्रसंगेन, तथा कठोरप्रसंगेन, तथा परिश्रमप्रसंगेन,तथा नष्टवस्तुप्रसंगेन तथा वैराग्यप्रसंगेन तथा बंधपुरुषप्रसंगेन, तथा दासीदासादिप्रसंगेन चतुष्पदानां प्रसंगेन, संबंधो वर्तते । अत एव षष्ठद्वादशगृहौ स्वस्मिन्साक्षीभूतौ ।

अथ किंचिद्विशेष उच्यते ।

एवं केन्द्राणां चत्वारि गृहाणि स्वस्मिन्साक्षीभूतानि । यथा चतुर्षु केन्द्रेषु १, ४, ७, १०, एकस्मिन् गृहे प्रश्नो वर्त्तते तदा तस्य त्रीणि गृहाणि साक्षीभूतानि संति । एवं पणफरस्य चत्वारि गृहाणि२, ५, ८, ११,स्वस्मिन् साक्षीभूतानि संति। तथा-पोक्लिमस्य चत्वारि गृहाणि ३, ६, ९, १२, स्वस्मिन्न साक्षीभूतानि संति । अत्रापि रूपिणां शुभाशुभत्वेन तथा प्रवेशनिर्गमद्विस्वभावस्थिरत्वेन । तथा साक्षीभूतेन च मनोऽभिलषितस्य चाज्ञां कुर्यात् । तदाह । यदि प्रश्नरूपी तथा तस्य साक्षीभूता रूपिणः प्रवेशनिर्गमयोर्वा स्थिरेद्विस्वभावे वा यद्येकरूपाःस्युस्तदा मनोऽभिलषितकार्यसिद्धिःस्यादिति चाज्ञां कुर्यात् । यद्येकरूपा न स्युस्तदा निर्गमादिषु यो वहुतरो भवेत्तस्योपरि प्रश्नं ब्रूयात् । एतद्रूपिणां निर्गमादिसंज्ञा वक्ष्यमाणा ।

अथ किंचिद्विशेष उच्यते ।

इदमपि ज्ञातव्यम् । जनानां मनोऽभिलषितं त्रिसमयेभ्यो भूतभविष्यवर्त्तमानेभ्यो बाह्ये नास्ति तदाह । प्रश्नरमलस्य वचनजिह्वागृहं १६ रूपिणं पश्येत् तद्रूपरूपिणः प्रश्नरमलेषु कस्मिन् स्थले अन्वादेशो वर्त्तते । इति द्रष्टव्यं यदि स अन्वादेशआपोक्लिममध्ये भवेत्तदा प्रश्नमतीतकालस्य वर्त्तते यदि चान्वादेशः केंद्रमध्ये भवेत्तदा प्रश्नो वर्त्तमानकालस्य वर्त्तते । यदि सोऽन्वादेशः पणफरगृहे भवेत्तदा प्रश्नो भविष्यकालस्य वर्त्तते ॥

अथ प्रकारांतरेण भूतादिज्ञानमाह ।

केंद्रगृहेषु १, ४, ७, १०, सर्वरूपिणां वर्त्तमानकालो ज्ञेय इति यो रूपी केंद्रगृहस्य पृष्ठे चायाति तेन रूपिणा भूतकालस्याज्ञां कुर्यात् । एवं यो रूपी केंद्रगृहादग्रे भवेत्तेन रूपिणा भविष्यकालस्याज्ञां कुर्यात् । तद्यथा । प्रथमकेंद्रस्य १ द्वादशगृहं भूतकाले

तथा द्वितीयगृहं २ भविष्यकाले तिष्ठति। वर्त्तमानकालस्तु स्वयमेव १ एवं द्वितीयकेन्द्रस्य ४ तृतीयगृहं ३ भूतकाले तथा पंचमगृहं भविष्यकाले ज्ञेयम् । वर्त्तमानस्तु स्वयमेव एवं तृतीयकेंद्रस्य ७ षष्ठगृहं ६ भूतकाले ज्ञेयं तथाष्टमगृहं ८ भविष्यकाले ज्ञेयम् । वर्त्तमानस्तु स्वयमेव । एवं चतुर्थकेन्द्रस्य ९ नवमगृहं भूतकाले ज्ञेयं तथा चैकादशगृहं भविष्यकाले ज्ञेयं वर्त्तमानस्तु स्वयमेव १० । प्रश्नसमयेष्वत्रापि पूर्ववत्फलं ब्रूयात् ।वचनजिह्वारूपिणामन्वादेशमार्गेण भूतभविष्यवर्तमानरूपं प्रश्नं वक्तव्यमिति । इति प्राचीनपुस्तकसंमतमेतावदेव लिखितं मया ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये गृहाणां चिंतनं नामैकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ।

अस्मिन् द्वादशाध्याये रमलावृत्तिज्ञानमत्यावश्यकम् । अस्मिन् रमलमध्ये बहवो भेदाः संति । यः कोप्येतान् सम्यक् प्रकारेण जानीयात्तदा प्रष्टुः प्रत्युत्तरदाने व्याकुलो न भवेत् । रमलावृत्तिर्यदि द्वादशपर्य्यंतं गच्छेत्तदा पुनरपि प्रथमगृहाद्गणनीयं कस्मात् त्रयोदशादीनि चत्त्वारि गृहाणि १३, १४, १५, १६, रमलस्यावृत्तौ नायांतीति वचनात् । तदाह । यदि कोऽपि प्रष्टा मित्राणां मित्रप्रश्नं कारयेत् । तदा तनुस्थानात्पंचमगृहं मित्राणां तस्मात्पंचमस्थानात्पंचमं यन्नवम ९ गृहं तद्गृहं मित्राणां मित्रस्य ज्ञेयम् । यदि भार्या पितुः प्रश्नं भवेत्तदा सप्तमगृहं स्त्रिया वर्तते । तथा पितृगृहं चतुर्थकम् ४ । तदा सप्तमस्थानाच्चतुर्थगृहं तद्गृहं श्वशुरस्य ज्ञेयम् । यदि कोऽपि भार्यादृष्टिलग्नस्य प्रश्नं पृच्छेत् तदा सप्तमगृहं स्त्रिया वर्तते तथा पंचमगृहदृष्टिलग्नस्य तथा सप्तमस्थानात्पंचमं यदेकादशगृहं तद्गृहं स्त्रीणां दृष्टिलग्नस्य ज्ञेयम् । यदि प्रश्नः

स्पर्द्धिपुरुषाणां प्रवासस्य भवेत्तदा सप्तमगृहं स्पर्द्धिपुरुषाणां तथा नवमगृहं प्रवासस्य तदा सप्तमस्थानान्नवमं तृतीयं गृहं तद्गृहं स्पर्द्धिपुरुषाणां प्रवासस्य ज्ञेयम् । एवं यदि प्रश्नः पृथ्वीपतेर्दुःखस्य भवेत्तदा दशमगृहं पृथ्वीपतेर्वर्तते । तदा षष्ठं गृहं दुःखस्य । तदा दशमगृहात्षष्ठं तृतीयगृहम् । तद्गृहं पृथ्वीपतेर्दुःखस्य ज्ञेयम् । एवं यदि प्रश्नं पितृव्यसुतस्य कोऽपि पृच्छेत्तदा चतुर्थगृहं पितुस्तथा तृतीयगृहं भ्रातुस्तदा चतुर्थगृहात्तृतीयं यत्षष्ठगृहं तद्गृहं पितृव्यस्य वर्तते । अत्रापि पितृव्यसुतस्य गृहं किं वर्तते । अत आह । पंचमगृहं सुतस्य तदा पितृव्यगृहात्षष्ठस्थानात्पंचमं यद्दशमगृहं तद्गृहं पितृव्यसुतस्य ज्ञेयम् । एवं रमलावृत्तिकर्तव्यतया यदि व्युत्पन्नो यातस्तदा किमर्थं दशमगृहं मातुर्वर्तते इत्यत आह । चतुर्थगृहं पितुस्तथा सप्तमगृहं स्त्रियास्तदा सप्तमगृहाच्चतुर्थं यद्दशमगृहं तद्गृहं मातुर्ज्ञेयम् । अत एव गृहाणां विचारांशे दशमगृहं मातुः प्रोक्तं मया । एतद्यदुक्तं तत्संक्षेपमात्रम् एव सर्वेषां प्रश्नसमये गृहविचारांशे ज्ञेयमिति । तदा प्रष्टः प्रत्युत्तरं दापयेत् । अत्र पश्चिमदेशीयाचार्या विशेषं वदंति ।

ते च रमलवृत्तेः षोडशगृहपर्य्यंतं विश्वासं कुर्वंति । अपरं प्रसिद्धः प्रमाणतरः प्रथमप्रकारो वर्तते । पश्चिमदेशीयानां सामान्यवचनम् ॥ अथाधुना यदा गृहाणां व्याख्याज्ञानं तदा तत्समये तत्समागतं रूपिणां व्याख्यानस्य । यदीश्वरेच्छा वर्तते तथाधुना रूपिणां व्याख्यानं क्रियते मया ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये रमलावृत्तिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः ।

अस्मिन् त्रयोदशाध्याये रूपिणां नाम्नां व्याख्यानं वर्त्तते तत्र ज्ञातव्यं रूपिणां कति नामानि सन्ति । प्रत्येकरूपिणां नामानि

त्रिदेशीयभाषायां कथितानि वर्त्तन्ते । कास्तास्त्रिदेशीयभाषाः तत्राह एका म ; गरवी । कोऽर्थः । पश्चिमदेशीया भाषा । द्वितीया युनानी कोऽर्थः । युनानदेशीया भाषा । तृतीया बर्बरी कोऽर्थः । बर्बरदेशीया भाषा । मयात्र किल त्रिदेशीया भाषा प्रोच्यते । अत्र त्रिदेशेभ्योऽन्यभाषायामपि यत्र यत्र यानि यानि नामानि सन्ति तत्रैवमित्यपीति पदं धृतं वर्तते । तद्यथा ज्ञातव्यमेनं रूपिणं ⁝ अरबीवचने "लहिआन" इति । तथा यूनानवचने "कैताम" इति । तद्वद्बर्बरवचने " ; ज्वाहक " इति कथयन्ति । अपरत एनं रूपिणं ⁝ अरबीवचने "कब्जुलदाखिल" इति । तथा युनानवचने "अकीमस" इति । तद्वद्बर्बरीवचने "लाँग" इति कथयन्ति । एवमज्ञातदेशभाषासु "कमरूह" इति । तथा "अकरूह" इत्यपि ॥ एवमेनं रूपिणं ⁝ अरबीवचने "कब्जुलखारिज" इति । तथा यूनानीवचने "अमालाः ग" इति तद्वद्बर्बरीवचने तला- ; फ इति कथयन्ति । अज्ञातदेशवचने तु "शीलाग" इति तथा शालूक इति । पुनस्तथा "असवद" एवमित्यपि । एवमेनं रूपिणं ⁝ अरबीवचने "जमात" इति । तथा यूनानीवचने "आ ; जाद" इति । तद्वद्बर्बरीवचने "मेहक" इति कथयन्ति । एवमेनं "सलामत" इत्यपि । अपरे चैनं रूपिणं ⁝ अरबी बचने "फरह" इति । तथा यूनानीवचने "कौसलस" इति । तद्वद्बर्बरीबचने "अदहा" इति कथयन्ति । एवमज्ञातदेशभाषायां तु "कोसज" इति । "जौदला" इत्यपि कथयंति धीराः अपरेचैनं रूपिणं ⁝ अरबीवचने "उकला" इति तथा यूनानीवचने "मामककत" इति तद्वद्बर्बरीवचने "स ; का ; फ" इति कथयंति । एवमज्ञातदेशभाषायां तु "समकल्ह" इति तथा "मनकल्ह" इत्यपि कथयंति । अपरे चैनं रूपिणं ⁝ अरबीवचने "अनकीस" इति । तथा यूनानीबचने "अफकास" इति ।

तद्वद्बर्बरीवचने " मनकूस " इति कथयंति धीराः । एवमज्ञातदेशभाषायां तु " जवाबर " इत्यपि । अपरे चैनं रूपिणं ⁝ अरबीवचने "हुमरा" इति तथा यूनानीवचने "म ॅ काह" इति । तद्वद्बर्बरीवचने । "अमतरूस" इति कथयंति । एवमज्ञातदेशभाषायां तु "हुमुरा" इति तथा "अस्तीकह" इत्यपि अपरं चैनं रूपिणं ⁝ अरबीवचने "बयाज" इति । तथा यूनानीवचने "आ ॅ अनकरान" इति । तद्वद्बर्बरीवचने "ता ॅ ईक" इति कथयंति । एवमज्ञातदेशभाषायां तु "अमीन" इति । तथा "लीन" इति । तद्वत् "अवरूज" इत्यपि अपरे चैनं रूपिणं ⁝ अरबीवचने "नुसुतुलखारिज" इति तथा यूनानीवचने " ईःकात" इति । तद्वद्बर्बरीवचने "अजलीद" इति कथयंति । एवमज्ञातदेशभाषायां तु "हीद" इति । तथा "अकह्लीद" इति । तद्वत् "तकीला" इत्यपि कथयंति अपरेचैनं रूपिणं ⁝ अरबीवचने " नुसुतुलदाखिल " इति । तथा यूनानीवचने "कशमीर" इति । तद्वद्बर्बरीवचने "अशकीलान" इति कथयंति । एवमज्ञातदेशभाषायां तु "अबुल-आजिय" इत्यपि । अपरे चैनं रूपिणं ⁝ अरबीवचने "अतवैतुल-खारिज" इति । तथा यूनानीवचने "ज ॅ कीरैखारीज" इति । तद्वद्बर्बरीवचने "सावितै" इति कथयंति धीराः । अपरे चैनं रूपिणं ⁝ अरबीवचने "नकियुलखद" इति । तथा यूनानीवचने "जकीरै" इति । तद्वद्बर्बरीवचने "औःजाग" इति कथयंति । एवमज्ञातदेशभाषायां तु"अशक"इति । तथा" अ ॅ फलसुररमल" इत्यपि । अपरे चैनं रूपिणं ⁝ अरबीवचने"अतवे तुल दाखिल"इति तथा यूनानीवचने"जकीरेदाखिल"इति तद्वद्बर्बरीवचने"कायमय" इति कथयन्ति एवमज्ञातदेशभाषायां तु कीर इति " कायमय " इत्यपि । अपरे चैनं रूपिणं ⁝ अरबीवचने इज्जत्तमा इति तथा यूनानीवचने अवतान इति " औक ॅ जा " इति तद्वद्बर्बरीवचने

"करान" इति कथयंति एवमज्ञातदेशभाषायां तु"अतलीन"इति। तथा "अमतदूलान" अमतदलान इत्यपि कथयंति । अपरे चैनं रूपिणं ⁝ अरबीमते "तरीक" इति । तथा यूनानीवचने "अलवरीद" इति । तद्वद्बर्ब्बरीवचने"अवरीद"इति कथयंति ।" अवरीद" इति कोर्थः । सर्ववस्तूनां वृत्तांतदाता केचित्तं " तीःनेकर" इत्यपि कथयंति ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये रूपिणां नामकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः ।

अस्मिन् चतुर्दशाध्याये षोडशरूपिणां चिह्नानां व्याख्यानमस्ति तज्ज्ञातव्यम् प्रत्येकरूपिणां नामभ्यः क्रमोत्क्रमेण द्वौ द्वौ वर्णौ निष्कास्य लिखेत् ।तद्यथा । फरहा ⁝ स्थाने फर इति । तथा लहियान ⁝ स्थाने लहि इति । अतवतुल ⁝ दाखलस्थाने'अह'इति । वयाज ⁝ स्थाने'वीज'इति एवं नकीबुलखद ⁝ स्थाने 'नक'इति।तथा 'वतवतुल' खारिज ⁝ स्थाने'अत'इति एवं हुमरा ⁝ स्थाने 'हुम' इति।तथा मनकीस⁝स्थाने 'मन' इति तथा कबजुलदाखिलस्थाने ⁝ 'कद' इति । एवं तरीक ⁝ स्थाने 'तर' इति तथा कबजुलखारिज स्थाने 'कज्ज' इति । तथा जमात ⁝ स्थाने 'जम' इति । एवं नुसुतुलदाखिलस्थाने ⁝ 'नद' इति । तथा नुसुतुलखारिजस्थाने ⁝ 'नज्ज' इति । एवमिज्जतमा ⁝ स्थाने 'इज' इति । तथा उक्कास्थाने ⁝ 'उक' इति कथयंति धीराः । एवं रूपिणां नामभ्यो द्वौ द्वौ वर्णौ निष्कास्य लिखेत् । संज्ञामात्रस्फुटं कुत्रापि रूपिणां चिह्नं पूर्वोक्तप्रत्येकवर्णोपरि लिखितं वर्तते । यत्पूर्वोक्तो मया वर्णक्रमसंज्ञको रूपिणां वर्णसमूहः स यथा । तत्र लहियास्थाने 'अ' इति । अनकीस्थाने वकारः।हुमरास्थाने जकारः वयाजस्थाने दकारः नुसुतुलदाखिलस्थाने हकारः।नुसुतुलखारिजस्थाने वकारः। अतवैदाखिल-

स्थानेजकारः।अतवैखारिजस्थाने हकारः।फरहास्थाने त्वकारः।नकियुलषदस्थानेहकारः।परहास्थानेः त्वकारः।नकियुलषदस्थाने यकारः। कब्जुल दाखिल स्थाने ककारः कब्जुलखारिजस्थाने लकारः।जमातस्थाने मकारः । बुक्का स्थाने नकारः । इजत्तमास्थाने सकारः।तरीकस्थाने अकारः । एवं संज्ञारूपान्वर्णांल्लिखेत् ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये रूपिणां चिह्नकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पंचदशोध्यायः ।

अस्मिन्पंचदशाऽध्याये रूपिणां प्रकृतेर्व्याख्यानमस्ति । तद्यथा । प्रकृतिमाह । तत्र रूपिणां पूर्वादिदिग्ज्ञानमाह । तथा पुंस्त्रीत्वं पुनस्तथा प्रवेशिनिर्गमस्थिरद्विस्वभावकथनम् । एवं दिनरात्रिविभागज्ञानम् । एतत्सर्वमाह । ज्ञातव्य एव रूपिषु वह्निबिंदुः केवलः स्यात् । तथा भूमिबिंदुर्युग्मः स अग्निमुखो ज्ञेयः । अग्नेर्विचारांशस्तु उच्चताभूतोपरि । तथा उड्डीयमानोपरि कोऽर्थः गृहीत्वा गच्छेत् । अत एवाग्निमुखरूपिणो [figures] निर्गमरूपाः स्युः । अपरमेषु रूपिषु वह्निबिंदुयुग्मं स्यात्तथा भूमिबिंदुः केवलः स भूमिमुखो ज्ञेयः । भूम्या विचारांशस्तु । उत्तरितोपरि तथा स्थिरभूतोपरि कोर्थं आनीयते । एत एव भूमुखरूपिणां [figures] प्रवेशिनः स्युः । अपरं येषु रूपिषु वह्निभूमिबिंदू द्वौ केवलौ भवतस्तदा तमुच्चभवनं तथोत्तरितमपि वर्त्तते कोऽर्थस्तस्मिन् गमनागमनौ द्वावपि । अत एवाग्निमुखभूमुखाभ्यां मिश्रितरूपिणो [figures] द्विस्वभावाः स्युः । अपरं येषु रूपिषु वह्निभूमिबिंदू द्वौ यदि युग्मरूपौ भवतस्तदा तदुच्चतापि तथोत्तरितमपि नास्ति तदा न गमनागमनं वर्त्तते । अत एव यथास्थितिरूपिणः [figures] स्थिराः स्युः ।

अथ रूपिणां पूर्वादिदिग्ज्ञानमाह । तत्र वह्निमुखाः पूर्वदिशो ज्ञेयाः सर्वेषां संमतेन । तथा वायुमुखाः प्रमाणवाक्येनोत्तरदिशो ज्ञेयाः। तथैव जलमुखाः प्रमाणतरवाक्येन पश्चिमदिशो ज्ञेयाः । एवं भूमुखाः सर्वेषां संमतेन दक्षिणदिशो ज्ञेयाः ।

अथ रूपिणां पुंस्त्र्यादिज्ञानमाह ।

तत्र निर्गमा नरा ज्ञेयाः । तथा प्रवेशिनः स्त्रीरूपा ज्ञातव्याः। अपरं स्थिरेषु लोहितः पुरुषो ज्ञेयः । तथा विधुरूपी स्त्रीरूपो ज्ञेयः अपरं सौम्य बोधनौ द्वावपि स्त्रीपुरुषरूपौ भवतः। एवं द्विस्वभावेष्वपि दैत्यार्चितः पुरुषरूपो ज्ञेयः । अपरमार मंदग शीतांशवः एतान्केचित्पुरुषरूपान् । केचिच्च स्त्रीरूपान्वदन्ति कस्मात् । केचिदेतेषु वह्निबिंदुं दृष्ट्वा तान् पुरुषरूपान्वदंति । केचिच्च राशिष्वेतेषां संबंधविश्वासं कृत्वा तान् स्त्रीरूपान् वदंति । राशिषु रूपिसंबन्धविश्वासो वक्ष्यमाणो वर्त्तते । अनेनैव प्रकारेण प्राचीनाचार्या अपि वदंति तदाह । रूपिणां पुंस्त्रीविवरणमेवं वर्त्तते । किंच येषां रूपिणां वह्निस्थाने केवलाः स्युस्ते च पुरुषरूपा ज्ञेयाः । तथा येषां रूपिणां वह्निस्थाने युग्मकाः स्युस्ते च स्त्रीरूपा ज्ञेयाः परंतु लोहितं विना कस्मात् लोहितो वायोर्बिंदौ स्थापितः । वायुस्तु मुद्रितो नास्ति । अत एव लोहितरूपी पुरुषरूपो ज्ञेयः। अथवा ग्रहेषु भौमेन सह सम्बन्धो वर्त्तते । तथा राशिषु मेषेण सह तदा त्रयोऽपि पुरुषा याताः। अत एव लोहितः पुरुषो ज्ञेयः । एवं रूपिणां पुंस्त्रीत्वं च ज्ञेयमिति ।

अथ रूपिणां दिनरात्रिविभागमाह ।

तत्र निर्गमप्रावेशि चक्रम् ।

ये पुरुषरूपिणो वर्त्तंते ते च दिनस्य

ज्ञेयाः ये च स्त्रीरूपिणः संति |||o |o|o |ooo ||oo ||o| |||| |oo| ते सर्वे रात्रेर्ज्ञातव्याः । एतत्सर्वं व्यक्तरूपं चक्रे द्रष्टव्यम् ।

इति प्राचीनग्रन्थसंमतं समाप्तम् ।

## अथ निर्गमप्रवेशिचक्रम् ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| निर्गम. | o\|\|\| | o\|o\| | ooo\| | oo\|\| | o | o | o | o | o | o |
| प्रवेशि. | \|\|\|o | \|o\|o | \|ooo | \|\|oo | × | × | × | × | × | × |
| स्थिर. | \|\|o | \|o\|\| | \|oo\| | \|\|\|\| | o | o | o | o | o | o |
| द्विस्वभा. | o\|\|o | oo\|o | o\|oo | oooo | × | [illegible] | × | × | × | × |
| पूर्व. | o\|\|\| | o\|o\| | oo\|\| | ooo\| | o | o | o | o | o | o |
| उत्तर. | \|oo\| | \|o\|\| | \|ooo | oo\|o | × | × | | × | × | × |
| पश्चिम. | oooo | \|\|o\| | o\|oo | \|\|oo | o | o | o | o | o | o |
| दक्षिण. | \|\|\|o | \|o\|o | o\|\|o | \|\|\|\| | × | × | × | × | × | × |
| पुरुष. | o\|\|\| | o\|o\| | ooo\| | oo\|\| | oo\|o | o\|oo | o\|\|o | oooo | \|o\|\| | o |
| स्त्रिय. | \|\|\|\| | \|o\|o | \|ooo | \|oo\| | \|\|oo | \|\|o\| | \|oo\| | × | × | × |
| दिनस्य. | o\|\|\| | o\|o\| | ooo\| | oo\|\| | oo\|o | o\|oo | o\|\|o | oooo | \|o\|\| | o |
| रात्रे. | \|\|\|o | \|o\|o | \|ooo | \|\|oo | \|\|o\| | \|oo\| | \|\|\|\| | × | × | × |

अथ ग्रन्थान्तरोक्तं मतमाह ।

परंतु यत्किंचिदस्मिन्रूपिणां निर्गमादिज्ञानं ग्रन्थातरेषूक्तम् । तद्वाक्यं प्रसिद्धतरं ज्ञातव्यम् । अपरं सर्वेषां संमतेभ्योऽपि भिन्नम् कोऽर्थः । पूर्वोक्तप्रकारेण किंचिद्विपर्य्ययरूपेण व्याख्यानं कृतं वर्त्तते। तदाह। तत्र ग्रंथांतरेषु रूपिणां निर्गमत्वं प्रवेशत्वं तथा तेषां रात्रिदिन-विभागःपुनस्तेषां पुंस्त्रीत्वसंभवं ज्ञानं वर्तते । तत्र तावज्ज्ञातव्यं येषां रूपिणां वह्निस्थाने केवलो भवेत्ते रूपिणां निर्गमाः स्युः यथा येषां रूपिणां वह्निस्थाने युग्मत्वं भवेत्ते रूपिणः प्रवेशिनः स्युः ते च प्रवेशिनो रात्रेर्ज्ञेयास्तथा स्त्रीरूपाः स्युः । एवं निर्गमाः दिवसे ज्ञातव्यास्तथा पुरुषरूपाः स्युः । तद्यथा पुं स्त्री पुं स्त्री पु स्त्री पु स्त्री पुं स्त्री पुं स्त्री पुं स्त्री पुं स्त्री एवं प्रकारेणाष्टौ पुरुषाः सन्ति । तथाष्टौ स्त्रियः एवमेषु क्रमेषु दिवारात्रिभागो ज्ञातव्य इति । तथैतद्ग्रंथस्य तृतीयाध्याये रूपिणां शुभाशुभ कथनांते किंचिद्विशेषः कथितो वर्त्तते । तमेवाह इमे रूपिणः स्थिराः कस्मात् । यदि तान्विपर्य्ययरूपान्कारये-त्तथापि तदेव रूपं भवेदिति वचनात् । अपरं शेषा द्वादशरू-पिणः द्विस्वभावरूपाः स्युः । कस्मात्। यदि तान् विपर्य्ययरूपान्कारयेत् । तदा निर्गमः प्रवेशी भवेत्तथा प्रवेशी निर्गमः स्यादिति वचनात। अपरं रमलेषु पुंरुयादिभि-र्मिश्रितरूपिणः केऽपि न संति ॥ इति ग्रन्थांतरसंमतं समाप्तम् । एतद्ग्रंथोक्तप्रकारो मूर्खाणां ज्ञानार्थं कथितः यत इतस्ततो वचनं श्रुत्वा द्विविधं चिंतयाना भवेयुः । पूर्वोक्तप्रकारेभ्यः एत-द्ग्रंथोक्तप्रकारे कुत्र चिद्विपर्य्ययो वर्तते।अत एव एतद्ग्रंथोक्तप्रकारेभ्यः पूर्वोक्तप्रकारो बलिष्ठो ज्ञेयः । तस्मात्पूर्वोक्तप्रकारोपरि विचारो वर्त्तते। न त्वेतद्ग्रंथोक्तप्रकारोपरि ।

इति श्रीभयभञ्जनशर्मकृतौ रमलरहस्ये रूपिणां प्रकृतिसंज्ञको नाम पंचदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः ।

अस्मिन् षोडशाध्याये चौरादीनां स्वरूपज्ञानार्थं रूपिणां स्वरूपस्य व्याख्यानं वर्त्तते । तत्रादौ वाग्मी ≡ अयं लंबायमानदेहः तथा गोधूमवर्णः परन्तु किंचित्पीतत्ववर्णलक्षितरूपः । वृत्तमुखमंडलः बृहत्कूर्चवान् लघुशिरा बृहन्नेत्रः तथा बृहत्कर्णः विस्तृतनासिकःतथा विस्तृतवक्षस्थलः दर्शनीयः नातिस्थूलो नातिकृशः। अपरं ललितवचनवक्ता तथा कोमलप्रियवाक् । बृहदास्यरंध्रः स्थविरः नियतेन्द्रियः शुभप्रकृतिकः तथा बृहत्संप्रदायी सत्पात्रं कातरनेत्रः ईषत्कांचनाक्षः बुद्धिमान् कफप्रकृतिः किंचित्कपिलकेशः नीतिकर्त्ता चतुष्पदप्रियः मधुरप्रियः चरमे वयसि वित्तवान् उदारः एवं स्वरूपो वाग्मी भवति ।

### अथ तीक्ष्णांशुः ।

⁝ अयं नातिह्रस्वो नात्युच्चः गोधूमवर्णःवृत्तमुखमंडलः बृहंच्छिराः कुंचितकेशः वृत्तकूर्चवान् सम्मिलितभ्रुकुटिः वृत्ताशिराः ह्रस्वगलः किंचित् कृष्णवर्णाक्षः नास्तिस्थूलो नातिकृशः संकीर्णकंधरः मुखमंडलोपरि वा स्कंधोपरि तिलचिह्नः। केचिद्वदंति विरलकेशः पित्तप्रकृतिः दृढाक्षः केचिद्वदंति मधुपिंगाक्षः तथा रक्तश्यामः चतुष्पदप्रियः स्त्रीप्रियः कामी राजसः ।

### अथ पातः ।

⁝ अयं नातिह्रस्वो नात्युच्चः ह्रस्वकेशः ह्रस्वाशिराः ह्रस्वमुखः पीतवर्णः परन्तु किंचित्कृष्णवर्णआननोपरि किंचिच्चिह्नं भवेत् विडालाक्षः। केचिद्वदंति मृत्तिकावर्णः विस्तृतकंधरः कुंचितकेशः विस्तृतमुखरंध्रः ह्रस्वदंतः दर्शनीयमुखो न स्यात् । तिक्तवचनवक्ता कुरूपः कुसंप्रदायी अकुलः आननोपरि वा नेत्रोपरि किंचिच्चिह्नं भवेत् अनृतवक्ता कुकर्मकर्ता महाधूर्तः अतिकदर्यः

चरित्रकर्ता दुर्बलः पिशुनः अलसक्रियः वायुप्रकृतिः स्थूलदं-
तनखरोमा रूक्षरोमकचः क्रूरः दीर्घस्वनः एवं स्वरूपः पातो भवति।

अथ सौम्यः।

☰ अयं दीर्घाकारः विस्तृतनासिकः दीर्घदंतः स्थूल च्छविःबलिष्ठः
विस्तृतकंधरः वृत्तकूर्चः बृहच्छिराःबृहन्नेत्रःपुष्टगलःसंम्मिलितभ्रुकुटिः
ललितपदवचनवक्ता पुष्टशरीरः सम्यग्विचारांशकर्त्ता सर्वेषां मंत्री
बृहन्मुखमंडलः गोधूमवर्णः परंतु रक्तवर्णसहितकुंचितकेशः सर्व-
विद्यानामधिपतिः गुणी आननोपरि तिलो वान्यत्किंचिच्चिह्नम्
अथवास्य शरीरे कुत्रापि व्रणो भवेत् नासावान् निपुणः सूक्ष्मगतिः
कोमलप्रियवाक् वातपित्तश्लेष्मप्रकृतिः नित्यहसितः एवंस्वरूपः
सौम्यो भवति।

अथ दैत्यार्चितः।

⁘ चतुरस्रविस्तीर्णशरीरः केचिद्वदंति दीर्घाकारः ह्रस्वशिराः
क्षीणाधरः श्रेष्ठः असंमिलितभ्रुकुटिः कपिलवर्णः श्वेतवर्णः
परंत्वारक्तवर्णः कृष्णाक्षः आननोपरितिलान्यतमचिह्नः स्वल्प-
कूर्चवान् अथवा चिबुककूर्चः दर्शनीयः सम्यग्रूपवान् सम्य-
क्सुहृद् आनंदकर्मप्रीतिनिपुणः क्षुद्रप्राणः लघुजिह्वः विरलशरी-
रसंधिः किंचित्कृष्णकेशः सुखी भोगवान् वातश्लेष्मप्रकृतिः
निषिद्धदंतः कोमलप्रियवाक् शुक्राधिकः शुभनेत्रः स्थविरः
एवंस्वरूपो दैत्यार्चितो भवति।

अथ मंदगः।

⁘ अयं ह्रस्वाकारः कृष्णवर्णः परंतु पीतवर्णः केचि-
द्वदंति श्यामवर्णः वृत्तमुखमंडलः विडालाक्षः स्थूलोष्ठः विस्तृत-
कंधरः बृहत्स्तनः यदि चेत्स्त्री स्यात्। नतु पुरुषः। ह्रस्व-
शिराः विस्तृतवक्षस्थलः बृहद्दंतः नीचजातिः स्वल्पकूर्चः
अथवा चिबुककूर्चः क्षीणजंघः तथा क्षीणोरुः धूर्तः उपहास-

कर्मणि निपुणः विचित्रकर्ता अस्य नेत्रयोर्मध्ये तथा दक्षिण-पादे किंचिल्लक्षणं भवेत् । पाखंडकर्ता पिशुनः अलसक्रियः वायुप्रकृतिः स्थूलदंतनखरोमा नासाधिकः रूक्षरोमकचः क्रूरः अनुचरः वृद्धः दीर्घस्वनः एवं स्वरूपो मंदगो भवति ।

अथ सौरिः ।

अयं दीर्घाकारः वृद्धः श्यामवर्णः बृहन्नासिकः बृहच्छिरा-बलिष्ठगलः पुष्टगलः दीर्घस्वनः कंठग्रहेण वचनं वदति तिक्तवचनः वक्ता बृहद्दंतः क्षीणतरजंघः खंजो मूको वा अंधःबधिरः वृद्धः आन-नोपरि किंचिच्चिह्नं भवेत् । अथवाक्षिमध्ये वा दंतानां मध्ये किंचिच्चिह्नं भवेत् । निषिद्धस्वभावः कुप्रकृतिः अकुलः कुसंप्रदायी दुर्बलः कांचननेत्रः पिशुनः अलसक्रियो वायुप्रकृतिः स्थूल-दंतनखरोमा नासाधिकः रूक्षरोमकचः दीर्घस्वनः एवंस्वरूपः सौरिर्भवति ।

अथ लोहितः ।

अयं नातिह्रस्वो नात्युच्चः आरक्तवर्णः विडालाक्षः केचि-द्वदंति एकाक्ष इति । कुस्वरूपमुखमण्डलः स्थूलः स्वल्पबुद्धिः बृहदुदरः स्थूलौष्ठः क्रोधाधिकः स्वल्पदायः केचिद्वदंति बर्बर-स्वनः बहुवचनवक्ता बर्बरमुखः जनानां दुःखदाता अस्याननो-परि वा शिरसि किंचित्क्षतं भवेत् । मारणात्मको दुष्टः हास्यमुखः लिप्तवाक् स्वल्पकायः सदैव तरुणाकारः कांचननेत्रः पित्तप्रकृतिः दुराचारी चपलः अनेकमतिः पद्मपत्राग्रवर्णः गौरः मज्जोधिकः रण-प्रियः तामसः युवा वक्र एवं स्वरूपो लोहितो भवति ।

अथ विधुः ।

अयं दीर्घाकारः, केचिद्वदंति नातिह्रस्वः नात्युच्चः एवं मध्यमाकारः श्वेतप्रियः श्वेतवर्णः सम्मिलितभृकुटिः ललित-पदवक्ता कोमलप्रियवाक् सदा पवित्रतया तिष्ठेत् । स्थूलच्छविः

बृहन्नेत्रः ह्रस्वमुखरंध्रः। विस्तृतमुखमण्डलः सम्यक्सुहृद् भवेत्। सुशीलः अपरेभ्यः स्वात्मानं बृहत्तरं मन्यते । केचिद्वदंति अस्याननोपरि किंचिच्चिह्नं भवेत् । अथवा वक्षःस्थलस्याभ्यंतरे कफश्लेष्मभ्यां कश्चिद्रोगो भवेत् । दर्शनीयः शुभनेत्रः मेधावी गौरः चपलः अनवस्थितः कफवातप्रकृतिः रुधिराधिकः कोमलवाक् दर्पवान् मित्रप्रियः एवंस्वरूपो विधुर्भवति ।

अथोष्णगुः ।

⁝ अयं दीर्घाकारः केचिद्वदंति नातिह्रस्वो नात्युच्चः पीतवर्णः परेभ्यः आत्मानं बृहत्तरं जानीयात् । अस्याक्षिणी किंचिद्रक्तवर्णसहिते अत एव पद्माक्षः । केचिद्वदंति गोधूमवर्णः परंतु पीतवर्णत्वेन सत्पात्रः बृहत्संप्रदायी वचने व्यंग्यता उच्चसाहसः क्षीणरोमा क्षीणनासिकः स्थूलांगुलिः पीतदन्तः केषां चिद्दूतो नो भवेत् । विरलकेशो विस्तीर्णशरीरः पित्तप्रकृतिः दृढास्थिः संग्रामप्रियः मधुपिंगाक्षः एवंस्वरूप उष्णगुर्भवति ।

अथ सूरिः ।

⁝ अयं नातिह्रस्वो नात्युच्चो बृहच्छिराः रक्तश्वेतवर्णः केचिद्वदन्ति श्वेतवर्णः परन्तु किंचिन्नीलवर्णो विस्तृतकन्धरः सम्यङ्मुखमण्डलो विस्तृतनेत्रः तुंगनासिकः ह्रस्वगलो ललितपदवचनवक्ता तार्किकः असंम्मिलितभ्रकुटिः नातिस्थूलो नातिकृशः सर्वांगदर्शनीयः सत्कुलः बृहत्संप्रदायी केचिद्वदंति स्वल्पकूर्चः सम्यक् सुहृदः सुशीलः कातरनेत्रः ईषत्कांचनाक्षः बुद्धिमान् केचिद्वदंति स्थूलदेहः कफप्रकृतिः गौरो दर्शनीयः किंचित्कपिलकेशः मेदोधिकः स्थविरः एवंस्वरूपः सूरिर्भवति ।

अथ वक्रः ⁝ अयं दीर्घाकारः कृशः कुरूपः स्वल्पकूर्चः चिबुककूर्चः विडालाक्षः दीर्घमुखमंडलः ह्रस्वशिरा तिक्तवचनवक्ता कठोरवक्ता कुसंप्रदायी अकुलः बृहद्दंतः ह्रस्वमुखरंध्रः श्यामवर्णः

अस्याननोपरि किंचित्तिलादिचिह्नं वा शीतलाचिह्नं भवेत्, अथवा दंतेषु किंचिच्चिह्नं भवेत् अथवा भग्नदंतः स्यात् कुकर्म्मकर्ता महाधूर्तः पिशुनः चौरः अलसक्रियः पटुः क्रूरः वायुप्रकृतिः स्थूलनखदंतरोमा नासाधिकः दुर्बलो रूक्षरोमकचो वृद्ध एवंस्वरूपो वक्रोरूपी भवति ।

अथाररूपी ः अयं नातिह्रस्वो नात्युच्चो ह्रस्वगलो विस्तृतकंधरो विडालाक्षःश्यामवर्णो ह्रस्वमुखरंध्रो बृहन्नासिको वृत्तमुखबिंबः ह्रस्वाक्षो ह्रस्वकूर्चः अथवा कूर्चरहितः कुमारः क्षीणौष्ठः क्षीणाधरो बृहद्दंतो ह्रस्वमुखबिम्बः केचिद्वदंति बृहन्मुखबिंबः तस्याननोपरि क्षतस्य चिह्नं भवेत् अथवा शीतलाचिह्नं भवेत् अथवा वामभ्रूकुटिमध्ये क्षतस्य चिह्नं भवेत् अथवा वह्निदग्धचिह्नं भवेत् अस्य शरीरे ऊर्द्धार्द्धांगादधःस्थार्द्धांगं दीर्घं भवेत् केचिद्वदंति स पुरुषः बाल्यावस्थायां स्वगुदमैथुनं कारयेत् हास्यमुखः केचिद्वदंति लिप्तवाक् सदैव तरुणः पित्तप्रकृतिः दुराचारी चपलः अनेकमतिः केचिद्वदंति पद्मपत्राग्रवर्णो मज्जोधिकः युवा एवंस्वरूप आररूपी भवति ।

अथ कविरूपी ः दीर्घाकारो वृत्तकूर्चवान् बृहच्छिराः स्वल्पकेशः स्वल्पकूर्चवान् अथवा कूर्चरहितःकुमारो दर्शनीयः सुंदरः स्वल्पकेशः श्वेतवर्णः परंतु किंचिद्रक्तवर्णःविस्तृतमुखरंध्रःसंम्मिलितभ्रूकुटिः शुभप्रकृतिःसानंदः मंगलप्रियःकृष्णनेत्रः केचिद्वदंति हरितवर्णः केचिद्वदंति नातिकृष्णो नातिगौरः कृशांगःस्त्रीविरलशरीरसंधिः कुंचितकृष्णकेशः सुखी भोगवान् वातश्लेष्मप्रकृतिः कोमलप्रियवाक् शुक्राधिकः शुभनेत्रः केचिद्वदंति स्थविरः स्निग्धरुचिः एवंस्वरूपः कविर्भवति ।

अथ बोधनः ।

ः अयं दीर्घाकारः गोधूमवर्णः परंतु आरक्तवर्णः केचिद्वदंति पीतवर्णः पृथग्भ्रूकुटिःललितपदवचनवक्ता कोमलप्रियवाक् तार्किकः बहुगणितज्ञः अंकशास्त्रकृताभ्यासः स्थविरः बृहन्नासिकः विस्तृत-

ललाटो दीर्घगलो विरलदंतो दीर्घमुखबिंबः । केचिद्वदंति विस्तृतमुखबिंबः सम्मिलितभृकुटिः, केचिद्वदंति लिप्तवाक्, केचिद्वदंति दूर्वाश्यामो नासावान् निपुणः सूक्ष्मगतिः स्थूलच्छविः वातपित्तश्लेष्मप्रकृतिः हास्यमुखः एवंस्वरूपो बोधनो भवति ।

अथ शीतांशुः ।

⁝ अयं दीर्घाकारः श्वेतवर्णो रूक्षशरीरो ह्रस्वशिरा बृहन्नेत्रः क्षीणगलः क्षीणस्वनो विरलकूर्चवान् शुद्धवक्ता बहुप्रवासकर्त्ता पृथग्भृकुटिः अस्याननोपरि श्यामतिलो भवेत् अथवा क्षतं भवेत् अथवा किंचिच्चिह्नं भवेत् दर्शनीयः शुभनेत्रः मेधावी गौरः चपलोऽनवस्थितः कफवातप्रकृतिः रुधिराधिकः कोमलवाक् दयावान् मित्रप्रियः कृशवर्तुलांगो युवा एवं स्वरूपः शीतांशुर्भवति ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये रूपिणां स्वरूपनिरूपणन्नाम षोडशोऽध्यायः ॥ १६ ॥

---

## अथ सप्तदशोध्यायः ।

अस्मिन्सप्तदशाध्याये वस्तुनो रूपस्य ज्ञानार्थं रूपिणां स्वरूपस्य व्याख्या वर्त्तते । तत्रादौ रूपिणां वर्णज्ञानमाह । तत्र वाग्मी ⁝ पीतरक्तवर्णो यथा सुवर्णं । लोहितः ⁝ आरक्तवर्णो यथा ताम्रं तथायं दीर्घायमाणः । एवमुष्णगः ⁝ केवलपीतवर्णः यथा कश्चित्पीतपाषाणः । एवं विधुः ⁝ केवलश्वेतवर्णः यथा कर्पूरवस्त्रादिकं तथा तूलिकावत् । एवं पातः ⁝ श्वेतकृष्णवर्णो यथा लघुभस्मांगारो यथा शीसवत् । एवं बोधनो ⁝ हरितवर्णो यथा हरितपत्त्ररसः । एवं वक्रः ⁝ पीतवर्णःपरन्तु किंचिच्छ्यामवर्णो यथा मसीमिश्रितहरितालः तथायं लंबमानो वर्त्तते । एवं सौरिः ⁝ कृष्णवर्णो यथा विस्तृतरूपो लौहः । अथवा लंबायामानो लौहः । एवं मंदगः ⁝ श्यामवर्णो यथायसो वर्णः एवं तीक्ष्णांशुः ⁝ श्वेतवर्णः परन्तु किंचिच्छ्यामवर्णः । यथासीससरौप्यादिकम् । तथायं चतुरस्रः परन्तु दीर्घः । एवं दैत्यार्चितः ⁝ पीतश्वेतश्यामवर्णै—

मिश्रितवर्णो यथा मुक्ता कदापि पीतवर्णा । कदापि श्वेतवर्णा कदापि कृष्णवर्णा स्यात् । एवं सूरिरूपी ⁝ श्यामवर्णो यथा शुक्तिरथवाऽपक्वरौप्यरूपः । एवमाररूपी ⁝ पीतहरितश्यामवर्णैर्मिश्रितवर्णः । यथा विरोजापाषाणस्तथा दहने फिरंगपाषाणवत् । एवं कविरूपी ⁝ श्वेतहरितश्यामवर्णैर्मितवर्णो यथा त्रपुः । एवं शीतांशुः ⁝ हरितश्वेतश्यामवर्णैर्मिश्रितवर्णः यथा बिल्लौरपाषाणः कदापि हरितवर्णः कदापि पीतवर्णः स्यात् कदापि श्यामवर्णः स्यात् । एवं सौम्यः ⁝ श्वेतवर्णो यस्मिञ्छ्वेतवर्णे नाना वर्णाःसंति । अपरं तस्मिन्मध्ये किंचिच्चिह्नं वर्त्तते यथांगुलीयभूषणम् । एवमपरमपि ज्ञेयम् । इदं समुचितमेव । किंच रमलज्ञो रूपिणां प्रकृतिस्वरूपसंमेलनादिकं सम्यक्प्रकारेण जानीयात् । तदास्मिन्वर्णादिकथने दुःखितो नो भवेत् ।

अथ रूपिणां वर्णादिकं प्रकारांतरेणाह ।

तत्र वाग्मिनो ⁝ बृहस्पतिःस्वामी राशौ धनुषा सह संबंधः । तथायं बृहस्पतिः सम्यक्पुरुषः सर्वेषां प्रीतियुतः । जगति त्रिविधानि सर्ववस्तूनि संति । एकमाकराद्भुत्पन्नं कर्कशपाषाणादिकं द्वितीयमंकुराद्भुत्पन्नं सस्यवृक्षादिकमेवं तृतीयं जीवसहितं कीटपतंगादिकमेवं धातुर्मूलं जीव इति ज्ञेयं तत्राकरजं धातुरूपमकुरजं मूलं जीवजं जीवरूपं तत्र सुवर्णादिमृत्तिकांतं धातुद्रव्यं पुरुषादिसरीसृपातं जीवरूपं वृक्षादितृणांतं मूलम् । एवं प्रकारे ज्ञाते साति तत्र वाग्मी धातुः पीतारक्तवर्णः तथा स्निग्धः मधुररसः ।

अथ तीक्ष्णांशुरूपिणः ।

⁝ सूर्यःस्वामी राशौ सिंहेन संबंधः तथा शुभः स्त्री सर्वेषां प्रीतियुतो धातुः पांडुरवर्णः पीतश्वेतस्तु पांडुरः क्षाराम्लरसः ।

अथ पातरूपिणः ।

राहुःस्वामी केचिद्वदन्ति केतुः स्वामी राशौ कुंभेन सह संबंधः अत्यन्त निषिद्धतरः क्रूरः पुरुषो धातुः श्यामवर्णः तिक्तरसो दुर्गंधः ।

अथ सौम्यस्य ।

बुधः स्वामी राशौ कन्यया सह संबंधः । शुभाऽशुभाभ्यां मिश्रितरूपः तथा पुंस्त्रीरूपो धातुः गोधूमवर्णः अम्लरसः ।

अथ दैत्यार्चितस्य ।

शुक्रः स्वामी राशौ तुलया सह संबंधः शुभः पुरुषः सर्वेषां प्रीतियुतः परंतु मध्यमस्थानातिश्रेष्ठः प्रीतियुतो नातिनिषिद्ध-प्रीतियुतो जीवो हरितवर्णो मधुररसः ।

अथ मन्दगस्य ।

शनिः स्वामी राशौ कुंभेन सह संबंधः अशुभः पुरुषः केचिद्वदन्ति स्त्रीति केषां चित्प्रीतियुतो नाति क्रूरो धातुः श्यामवर्णः तिक्ताम्लरसः ।

अथ सौरिरूपिणः ।

शनिः स्वामी राशौ मकरेण सह संबंधः। अशुभः स्त्री आदर-युतो नास्ति । धातुः श्यामवर्णः । अम्लरसः ।

अथ लोहितस्य ।

भौमः स्वामी राशौ मेषेन सह संबंधः । अशुभः पुरुषः सर्वे-षां प्रीतौ मध्यमो वर्त्तते मध्यमादरः आरक्तवर्णो जीवः अम्लरसः तथा मधुररसोऽपि दुर्गंधः ।

अथ विधोः ।

चन्द्रः स्वामी राशौ कर्केण सह संबंधः । शुभः स्त्री मध्यमादरयुतः सर्वेषां प्रीतौ मध्यमो मूलं श्वेतवर्णो मधुररसः ।

अथोष्णगुरूपिणः ।

सूर्यः स्वामी राशौ सिंहेन सह संबंधः शुभः पुरुषः सर्वेषा-मत्यन्तप्रीतियुतः सर्वेष्वत्यादरः धातुः श्वेतरक्तवर्णः कटुतिक्तरसः ।

अथ सूरिरूपिणः ।

गुरुः स्वामी राशौ मीनेन १२ सह संबंधः । शुभः स्त्री सर्वेषां प्रीत्यादरयुतः मूलम् पांडुवर्णो मधुरक्षाररसः ।

अथ वक्ररूपिणः ।

राहुः स्वामी केचिद्वदन्ति केतुः स्वामी राशौ मकरेण सह संबंधः । अत्यन्तमशुभः अतीव क्रूरतरः पुरुषः नीचः धातुः श्यामवर्णः क्षारतिक्तरसः ।

अथाररूपिणः ।

भौमः स्वामी राशौ वृश्चिकेन सह संबंधः । अशुभः स्त्री सर्वेषः मतेन मध्यमनीचः मूलम् श्यामवर्णः क्षारतिक्तरसः ।

अथ कविरूपिणः ।

शुक्रः स्वामी राशौ वृषेण सह संबंधः । शुभः स्त्री सर्वेषां प्रीत्यादरयुतः जीवः श्वेतवर्णो मधुररसः ।

अथ बोधनस्य ।

बुधः स्वामी राशौ मिथुनेन सह संबंधः । शुभाशुभरूपा तथा पुंस्त्रीरूपः जीवः श्वेतारक्तवर्णो मधुररसः ।

अथ शीतांशोः ।

चंद्रः स्वामी राशौ कर्केण सह संबंधः । शुभः स्त्री सर्वेषां प्रीत्यादरयुतो मूलं हरितवर्ण उष्णशीतश्लेष्मशुष्करूपैश्चतुःप्रकृतिकः एवं चत्वारो रसाः सांति शीतांशौ यथा तिक्तमधुरक्षाराम्लरूपाः ।

अथ पातः ।

वक्रश्च केचित्पातरूपिणो राहुं स्वामिनं वदंति । तथा वक्ररूपिणोऽपि केतुं स्वामिनं वदंति । केचिच्च व्यत्ययेन वदंति ।

पातस्य केतुः स्वामी तथा वक्रस्य राहुः स्वामीति । एवं बहुपुस्तकेषु कथितं वर्त्तते । अपरमस्यैवोपरि विचारांशः कृतो वर्त्तते । यथा गोष्टिकृता यास्यति । एतत्प्रकारः प्रमाण इति मयोच्यते । कस्मात् । ⁝ ⁝ एतौ द्वौ रूपिणावशुभतरौ ज्ञेयाविति । तथा केतुरप्यशुभो मत इति वचनात् । अपरे केचिद्वदंति ⁝ ⁝ रूपिणो राहुस्वामीति वाक्यं प्रमाणम् । कस्मात् । राहुः शुभो द्वावेतावशुभाविति वचनात् । परंतु केषांचिन्मते ⁝ ⁝ राहुः स्वामीति वाक्यं प्रमाणं वर्त्तते । कस्मात् । राहुः स्वजातीयः शुभो नास्ति परंतु शुभसांगत्ये शुभफलदः । अशुभसांगत्ये अशुभफलदो राहुर्भवतीति वचनात् । केतुस्त्वेवं नास्ति स्वजातीयः शुभफलदः । अत एव ⁝ ⁝ रूपिणोः केतुःस्वामीति वाक्यं बहु प्रमाणतरम् ।

अथ वस्तूनां स्थानज्ञानार्थं रूपिणां स्थानमाह ।

⁝ वाग्मिनः पूर्वदिशि स्थानमुच्चस्थलं तथा बृहद्गृहं, तथा देदीप्यमानमपरं यवनानां देवालयस्थानं तथा हिंदूनां देवालयस्थानमेवं पूजाकरणगृहस्थलं वा वर्त्तते । यस्मिन्स्थले नीतिकरणार्थं नीतिकर्त्ताद्युपस्थितिस्तत्स्थानम् । अपरं तत्स्थानं यस्योर्द्ध्वंक्षीणं तले च पुष्टं भवेत् । यथा गंजनम् । एतादृशस्थलं वा स्यात् । एतादृशस्य स्थानस्य नाम लोके मिनारा इत्युच्यते ।

अथ लोहितस्य ।

⁝ उत्तरदिशि स्थानं सूनालयस्थानं वा स्यात् । यत्र चतुष्पदानां जीवानां हननं भवेत् । तत्स्थानं वा रणांगणस्थानं युद्धकर्मकुशलानां शूराणां स्थानं वा यत्र स्थले जनानां हननं भवेत्तत्स्थानं वा तथा चौरादीनां हननस्थलं वा । अपरमेवं यद्यत्स्थानं भवेत् तत्सर्वं वक्तव्यमिति यथा गोघ्नानां हट्टस्थानं तथा नापितानां हट्टस्थानं यत्र नाडिकाभी रुधिरमोक्षणं भवेत् तत्स्थानं वा । जना वदंति कोटस्थानं यथा यवनानां सुखहेतुस्थानं वा ।

अथोष्णगुरूपिणः ।

ः पूर्वदिशि स्थानं अथवा ईशानकोणे स्थानं तथोच्चस्थानं तथा बृहत्स्थानमपरं तत्स्थानं यत्र जनसमूहः प्रचुरो भवेत् । यथा भूपतीनां सभास्थानमथवा कोटस्थानं भवेत् । अथवोच्चमंदिरम् ॥ अपरं भूपतीनां सिंहासनस्थानं वा अपरं देदीप्यमानं प्रकाशस्थानं वा स्यात् । अत्र गवाक्षरूपाणि रंध्राणि बहुतराणि संति ।

अथ विधोः ।

ः पश्चिमदिशि स्थानं परं तु शुभ्रस्थानमपरं हरितभूमिस्थानं तृणवृक्षादि वर्त्तते । अथवा यत्र जलंगमनरूपं भवेत्तत्स्थानम् । यथा नाडिकानद्यादिः । अपरं यद्गृहं जनसमूहवासस्थानं भवेत्तद्गृहं वा । केचिद्वदंति शुक्तिचूनकादिभिः श्वेतगृहं वर्त्तते । अपरं दीप्यमानं प्रकाशस्थलं वा स्यात्तत्र कार्पासवृक्षा रोपिताः संति । अथवा जले निमग्नस्थानं वर्त्तते । तथा यत्र बहुवाटिकाः संति तत्स्थानं वा स्यात् । अपरं तत्स्थानं यत्र गतस्य कौतुकदर्शनान्मनसि प्रसन्नता स्यात् ।

अथ पातरूपिणः ।

ः पूर्वदिशि स्थानं वा पश्चिमदिशि स्थानम् । अपर यस्मिन्स्थाने मनसः प्रसन्नता स्यात्तत्स्थान नष्टस्थानं वा भवेत् । शून्यस्थानं वा पाषाणस्थानं वा यथा पर्वतादिः । अपर यत्र विष्ठादीनां पातनं भवति बहुतरं तत्स्थानं वा पुरीषस्थानं वा । एवं यस्मिन्गृहेर्द्धवसतिरर्द्धशुद्धस्तं भवेत्तद्गृहम् । केचिद्वदंति यस्मिन्स्थले कर्कटशुक्तीनां चूर्णं तत्स्थानं वा महानसं स्थानं वा यत्र पर्वतो भवेत्तत्स्थानं वा शुष्कवनस्थानं बहुतरकंटकस्थानं वा प्राचीनहट्टसमूहस्थानम् । भग्नद्वारस्थानं वा कोटपरिखास्थानं वा भवेत् ।

---

१–स्नानकोशस्थानमिति पाठः ।

अथ बोधनस्य ।

⠿ उत्तरदिक्स्थानं वा वायव्यकोणस्थानं भवेत् ॥ अपरं तत्स्थानं यत्र गलगर्धनप्राचुर्य्यं भवेत् । यथा यवनदेवालयं वा यत्र यजनवेदाध्ययनं वा यत्र सामवेदाध्ययनं भवेत् । अथवा यस्मिन्स्थाने धर्मशास्त्राध्ययनं भवेत् । यज्ञस्थानं वा स्यात् । एवं छात्रशालापी ष्यते एवं प्राचुर्य्यं स्थानं वा वर्णैर्विचित्रस्थानं यत्रगतस्य मनसि प्रसन्नता स्यात् ।

अथ वक्ररूपिणः ।

⠿ पूर्वदिक्स्थानं वा ईशानकोणस्थानं वायव्यस्थानं वा स्यात् । अपरं तत्स्थानं यत्र गतस्य मनसि म्लानता स्यात् । अर्थाद्यत्रअजादिचतुष्पदानां जीवानां हननं तत्स्थानं वा स्यात् । तस्य समीपे स्थानं वा स्यात् । अपरं यवनसुखहेतुस्थानं वा स्यात् । परंतु भग्नमितस्ततो यदि स्यादथवा वासमंडलमुज्जटस्थानं भवेत् लोके ( उज्जठरोल) इत्युच्यते। अथवा बहुभयानकस्थान । केचिद्वदंति भित्त्याद्याच्छादनं विना । अपरं तत्स्थलं यत्र विष्ठादिनिषिद्धं वस्तु निपतति । अथवा तत्स्थलं यत्र वृक्षाः शुष्का भवंति । अथवा यवनपितृस्थानं भवेत् । अथवा कोटपरिखास्थान भवेत् । अथवा पारशीदेशकरपट्टिकाकरणस्थानम् अपि साधिकारस्थानं वा स्यात् ।

अथ सौरिरूपिणः ।

⠿ दक्षिणदिक्स्थानम् । उज्जटस्थलं स्यात् । बहुदिनस्थानं वक्तव्यम् । अथवा भूमितलस्थयवनशवस्थानं वाग्निहेतुस्थान भवेत् । अथवा पारसीवचने यत्र शीराकस्य स्थानं भवेत्तत्स्थलं क व्यम् । अथवा शुष्कस्थलं भवेत् अथवा यत्र श्यामवर्णभूमिः स्यात्तत्स्थानं वक्तव्यम् । अथवा तमःस्थानम् । अथवा पर्वतस्थानं तथा गहनवनस्थानं यत्र जलं नो भवेत्तत्स्थानं वक्तव्यम् । केचि

द्वदंति भयानकस्थानं वा उज्जटानियमनयवनदेवालयानि स्युः । यत्र केऽपि यवनाः संध्यावंदनं नो कुर्वंति ।

अथ मंदगस्य ।

ः पूर्वदिशि स्थानं कथितं वर्तते । अथवाग्निकोणस्थानम् । अपरं यवनशवस्थानं वा । तत्स्थानं यत्र जलं नो भवेत् । अथवा पर्वतमध्ये चाकरजं स्थानम् अथवा गर्तस्थानं वा भयानकस्थानं केचिद्वदंति दुर्गस्थानम् । अपरं तत्स्थानं यत्र बहूनि रंध्राणि संति । अथवा द्वारदेशस्थानं वा वाटिकायां गृह्य-स्थानं स्यात् । अथवा केशरज्जुहट्टसमूहस्थानम् । अथवा पलकर्तृ-हट्टासमूहस्थानं वा यवनकरपट्टिकाकरणचुल्हिकास्थानं स्यात् । महानसस्थानं वा बंधगृहस्थानं वा चक्रगृहस्थानं स्यात् । अपरं तत्स्थानं यत्र वस्तून्यभिषुणोति । अथवा नापितस्थानम् ।

अथ तीक्ष्णांशुरूपिणः ।

ः दक्षिणदिशि स्थानमुत्तरदिशि स्थानं वा । अपरं तत्स्थलं यत्र गतस्य मनसि प्रसन्नता स्यात् । अथवा तत्स्थानं यत्र सम्यग्वायुः प्रवहति । शुभस्थानं वा पृथिवीपतीनां स्थानं वा सभामंडलं प्राचु-र्य्यस्थानं वा स्यात् । लोके टोलिकेति । परन्तु यस्यां टोलि-कायां बहुजनाः संति । अथवा निर्भयगृहस्थानं परन्तु तस्मिन् गृहे त्रिशालकं गृहं भवेत् । उपर्य्युपरि त्रिच्छत्रकं तथा तथा तद्गृहं देदीप्यमानं स्यात् । अथवा केषांचित्स्थापितस्थानं स्यात् । लोके धरोहर इत्युच्यते । अथवा यत्र नूतनमुद्रिकादीनां घटनं वा तत्स्थानं यत्र मुद्रिकादीनां क्रयविक्रयकर्तारो वणिग्जना निवसंति अथवा तत्स्थानं यत्र पृथ्वीपतीनां द्रव्यादिकोषः स्यात् अथवा नूतनरम्याणि वस्तूनि स्युः । अथवा तत्स्थानं यत्र बहुवृक्षाः संति ।

अथ दैत्यार्चितस्य ।

⁘ पूर्वदिशि स्थानं वा ईशानकोणे स्थानमग्निकोणे स्थानं वा स्यात् । शुभस्थानं यत्र बहुजना वसंति । अपरं तत्स्थानं यत्र गतस्य मनसि प्रसन्नता स्यात् । केचिद्वदंति शुभवनस्थानं स्यात् अथवा तत्स्थानं यत्र चरंति चतुष्पदाः । अथवा तत्स्थानं यत्र बहुहरितवर्णा भूमिः स्यात्तृणादिभिः । अथवा नाना वर्णैर्विचित्रित स्थानं स्यात् । अथवा तत्स्थानं यत्र विवाहादि-मंगलं स्यात् ।

अथ सूरिरूपिणः ।

⁘ पश्चिमदिशि स्थानम् । अथवा नैर्ऋत्यकोणे स्थानं स्यात् । भयानकं स्थानं च वा स्यात् । अथवा तत्स्थानं यत्र गतस्य मनसि म्लानता स्यात् । अथवा तत्स्थानं यत्र उज्जटं भवेत् । अथवा तत्स्थानं यत्र भूमिगर्तें जलं स्थिररूपेण तिष्ठेत् । यथा पल्वलः । अथवा नदीतीरे स्थानं स्यात् । अथवा वने स्थानं स्यात् । अथवा यत्र शवं स्नापयंति तत्स्थानं केचिद्वदंति तद्गृहं यत्र बहुगृहाणि सान्ति। इतस्ततो बहुजना निवसंति । तथा बृहत्तराणि गृहाणि यत्र चत्वारि द्वाराणि उच्चानि संति । तथा देदीप्यमानं प्रकाशगृहम् । अथवा छात्रशालापीष्यते । अथवा यवनदेवालयं तथा तेषां संध्यावंद-नकरणस्थानं स्यात् । अथवा तत्स्थानं यत्र यज्ञादिषु जनान् भोजयेत् । अथवा पथिकविश्रामस्थानम् । तत्तु पृथ्वीपतीनां स्थलं प्रवक्तव्यम् । अथवा छायारामपुष्पवाटिकास्थानं स्यात् । अथवा बृहद्वाटिकास्थानं वक्तव्यम् । एवं यानि स्थानानि स्युस्ता-न्यत्र वक्तव्यानि ।

अथारररूपिणः ।

⁘ पश्चिमदिशि स्थानम् । अथवा नैर्ऋत्यकोणे स्थानम् । अथवा दक्षिणदिशि स्थानम् । अथवा पूर्वदिशि स्थानमुज्जटस्थानं

वा स्याद्यत्र गतस्य मनसि म्लानता स्यात् । अथवा यत्र स्वल्पा जना निवसंति तत्स्थानं प्रवक्तव्यम् । अथवा तत्स्थानं यत्र कलटापुंश्चलीवेश्यादिका निवसंति । अथवा तत्स्थानं यत्रोपद्रवादिकं बहुतरं भवेत् । अथवा तत्स्थानं यत्र जनाः सुरां पिबंति तथा द्यूतकर्म कुर्वंति । एवमन्यदपि ज्ञेयम् ।

अथ कविरूपिणः ।

⁞ उत्तरदिशिस्थानम् । अथवा वायव्यकोणे स्थानम् । अथवा दक्षिणदिशि शुभस्थानं यत्र वाससमंडले जनप्राचुर्य्यं स्यात् । लोके टोला इत्युच्यते । यत्र बहुजना निवसंति । अथवा तत्स्थानं यत्र जलं प्रत्यहमहोरात्रं प्रचलति। अथवा धर्मवेत्तुः स्थानं स्यात्। लोके काजीत्युच्यते अथवा धर्म्मकर्मशासितुः स्थानं स्यात् ।लोके निरखीत्युच्यते।अथवा सर्वेषामुपरि यःश्रेष्ठो भवति तस्यस्थानं स्यात्।लोके अमीन इत्युच्यते। केचिद्वदंति बहुवाटिका यत्र स्युस्तत्स्थानं वक्तव्यं तथोच्चवृक्षा यत्र तिष्ठंति तत्स्थानं वा स्यात्। अथवा यत्र दुर्गाणि संति तत्स्थानं स्यात्। तथोच्चगृहा यत्र संति तत्स्थानं वक्तव्यमथवा संध्यावंदनस्थानं वक्तव्यम् ।

अथ शीतांशोः ।

⁞ अनुक्तदिशि स्थानम्। अस्य कापि दिक्प्रमाणीकृता न वर्तते। अपरं तत्स्थानं यत्र नानावस्तुक्रयविक्रयकर्तारस्तिष्ठंति । लोके सौदागर इत्युच्यते। अथवा तद्धट्टसमूहो यद्बृहन्मार्गमध्ये स्यात्। लोके ‘बाजार’ ‘सरेराह’ इत्युच्यते। केचिद्वदंति दुर्गस्थानं स्यात्। अथवा गृंजनवत् यत्स्थानं स्यात्तत्स्थलं प्रवक्तव्यं लोके ‘मीनारा’ इत्युच्यते। तथोच्चस्थानं स्यात् । अथवा तत्स्थानं यत्र वृक्षा विफलास्तिष्ठंति ।

अथ नानावस्तूनामुपरि रूपिणां विचारांशमाह ।

तत्र सौरिमंदयोः ⁞⁞ विचारांशो वर्त्तते। आकरजेषु लोकभाषा-

यां मुरदाशंखोपरि तथा शीरोपरि विचारांशो वर्त्तते । तथा बीजेषु मरीचोपरि तथा मसूरिकान्नोपरि तथा लोकभाषायां मगरैलोपरि तथाऽम्लदाडिमबीजोपरि विचारांशो वर्त्तते । अथ वृक्षेषु हरीतकी-वृक्षोपरि तथा इसवंदवृक्षोपरि तथा जातीफलोपरि तथा बदामोपरि तथा येषां वृक्षाणां फलत्वचा कठोरतरा भवेत्ते वृक्षाःविचारांशे ग्राह्याः। अथ चतुष्पदेषु हस्त्युपरि तथोष्ट्रोपरि तथा महिष्युपरि तथा संजावो-परि येषां त्वचा अतीव सुगंधतरा भवति तदुपरि तथा समुद्रचरचतु-ष्पदोपरि यस्य त्वचातीवोष्णतरा भवति तदुपरि । तथा मार्जारो-परि तथा मूषकोपरि तथा श्यामवर्णबृहत्सर्पोपरि तथा वृश्चिकोपरि। तथा लोकभाषायां सूक्ष्मजीवोपरि तथा शलभोपरि विचारांशो वर्त्तते अथ पक्षिविशेषेषु जलचराः जीवाः सर्वे तदुपरि तथा काकोपरि तथा कोकिलोपरि विचारांशो वर्त्तते । अथानयों रूपिणोः [० — — — / — — ० ०] विचारांशः । आकरजेषु अंजनोपरि तथा गंधकोपरि तथा हरितालोपरि तथा त्रपूपरि तथा वस्रोपरि वङ्गोपरि तथा रजतोपरि तथा सुवर्णोपरि विचारांशो वर्त्तते । बीजेषु गोधूमोपरि तथा चणकोपरि तथा यवोपरि तथा तिलोपरि तथा-ऽमृतविशेषेषु सेवोपरि तथा दाडिमोपरि विचारांशो वर्त्तते । वृक्षेषु अंजीरोपरि तथा जरदालूपरि तथा सफतालूपरि एतौ वृक्षौ पश्चिमदेशीयौ । अपरं यस्य वृक्षस्य फलं मधुरं भवेत्तस्यापि विचारांशो वर्त्तते । चतुष्पदेषु घोटकोपरि तथा वृषभोपरि तथा यस्य चतुष्पदस्य मांसं शुभ्रं भवेत्तदुपरि । तथा व्याघ्रोपरि तथा पतंगोपरि तथा चित्रकोपरि विचारांशो वर्त्तते । पक्षिविशेषेषु कपोतकोपरि तथा मयूरोपरि तथा कुक्कुटोपरि तथा तित्तिरोपरि विचारांशो वर्त्तते । अथानयोः रूपिणोः [० — ० ० / — ० — —] विचारांशो आक-रजेषु चुम्बकपाषाणोपरि तथा लोहोपरि तथा ताम्रोपरि वृक्षेषु अमरूदोपरि परन्तु यस्य फलमम्लं भवेत्तस्य भक्षणे गलरोगो

गंडमाला भवति । चतुष्पदेषु वृकोपरि तथा शूकरोपरि तथा श्वानोपरि तथा यो विदार्य भक्षयति तस्योपरि विचारांशो वर्त्तते पक्षिविशेषेषु यो दन्तेन दशति ।

अथानयो रूपिणोः ।

विचारांशो आकरजेषु लाजवर्द्दवर्णोपरि तथा रक्तगंधकोपरि तथा सीसोपरि तथा सिंदूरोपरि तथा लालरत्नोपरि विचारांशः । बीजेषु तंडुलोपरि विचारांशः । वृक्षेषु खर्जूरोपरि तथा जरदालूपरि विचारांशः । चतुष्पदेषु डुंबरोपरि विचारांशः । पक्षिविशेषेषु श्येनोपरि तथा श्याहीनोपरि तथा मधुमक्षिकोपरि विचारांशः ।

अथानयो रूपिणोः ।

विचारांशः आकरजेषु रजतोपरि तथा त्रपूपरि तथा शुक्तोपरि तथा जवरजद्दोपरि विचारांशः।बीजेषु अंजीरोपरि तथांगूरोपरि विचारांशः । वृक्षेषु अशोकवृक्षोपरि विचारांशः । तथा शरो[3]वृक्षोपरि तथा सेववृक्षोपरि तथा विहीवृक्षोपरि विचारांशः । चतुष्पदेषु शशकोपरि तथा बृहन्मत्स्योपरि विचारांशः । पक्षिविशेषेषु पंडकोपरि विचारांशः । तथा बुलबुलोपरि विचारांशः ।

अथानयो रूपिणोः ।

विचारांशः।आकरजेषु शुक्तिकर्करादिचूर्णोपरि तथा बहुवर्णोपरि तथा कर्पूरोपरि तथा शुभबीजोपरि तथा वीरोजापाषाणोपरि विचारांशः । बीजेषुरतरो[1]परि तथा धारिको[2]परि विचारांशः । वृक्षेषु सौरोपरि लोके सरहरीत्युच्यते । चतुष्पदेषु आखेटकर्मकुशलश्वानोपरि विचारांशः । पक्षिविशेषेषु नानावर्णैर्विचित्रवर्णो यः पक्षी भवति तस्योपरि विचारांशः । यथा तित्तिरः ।

अथानयो रूपिणोः

विचारांशः । आकरजेषु बिल्लोरपाषाणोपरि तथा स्फटिकोपरि

---

१ खतरोपरीति पाठः । २ धानिकोपरीति पाठः । ३ शरोपरीति पा० ।

विचारांशः । बीजेषु कर्कटयां तथा खीरकोपरि विचारांशः । वृक्षेषु दाडिमोपरि तथा यरोपरि विचारांशः । चतुष्पदेषु उष्ट्रोपरि तथा धेनूपरि तथा दुंबरोपरि तथा ये चतुष्पदाः जनैर्मित्रत्वं कुर्वंति । पक्षिविशेषेषु बर्त्तकोपरि तथा वकोपरि तथा हंसोपरि तथा चटकोपरि विचारांशः ।

अथानयो रूपिणोः ।

⁝ ⁝ विचारांशः । आकरजेषु यस्य स्वल्पं मौल्यं भवेत् । अपरं स एव श्यामवर्णो भवेत् । मूलेषु यद्वस्तु तिक्तं भवेत् । अपरं गलं धरति तथा दुर्गंधोपरि पुनः एव रितं भवेत्तस्योपरि विचारांशः । जीवेषु ये जीवा वस्तु विदीर्णं कृत्वा भक्षयंति तथा विषधरा ये जीवास्तेषामुपरि तथा श्वा चित्रकः वृश्चिकः सर्प्पः ।

अथ प्रश्नावधौ मासकथनार्थं रूपिणां मुहर्म्मादिचांद्रमासानाह ।

तत्रादौ शालिवाहनीयशकोपरि मुहुर्मादिमासज्ञानम् । तथा हिजरीसनज्ञानमाह । उक्तं च फारसीप्रकाशे "शकः खाभ्रपंचेंदु-१५०० हीनोर्क १२ निघ्नो मधोर्मासयुक्तो ह्यधरूयश्वि २३ युक्तः ॥ द्विनिघ्नः स्वखव्योमनंदांश ९०० हीनः शरांगैः ६५ स आप्तोधिमासैर्युगूर्ध्वः ॥ पतंगा १२ प्तशेषे मुहुर्मादिमासो रसाष्टांक ९८६ युक्तेषु लब्धेषु सन्नः" ॥ १ ॥ मधोर्मासयुत इति चैत्रशुक्लपक्षाद्गतमासयुतः ।

अस्योदाहरणम् ।

शाके १६२३ अत्र खाभ्रपंचेंदु १५०० हीने शेषं १२३ अर्कनिघ्ने जातं १४७६ अत्र चैत्रादिर्वर्त्तमानमासः शुक्लादिः श्रावणः ५ तेन युक्ते जातं १४८१ एतं पृथक्स्थलद्वये स्थापयेत् । अधः स्थाप्यः एकस्मिन्स्थले त्र्यश्वि २३ युक्ते यातं १५०४ द्विनिघ्ने जातं ३००८ ततो यं स्वखव्योमनंदां ९०० श हीने

१ बुब्बरोपरीति पा० ।

यातं २००५ अत्र शरांगै ६५ भक्ते लब्धा अधिमासाः ४६ अधिमासैर्द्वितीयस्थले १४८१ युक्ते यातमूर्द्धं १५२७ अत्र द्वादश १२ भक्ते लब्धं १२७ शेषं ३ तेन मुहुर्मादिमासो वर्त्तमानो रविलौवलस्तृतीयः लब्धमध्ये १२७ रसाष्टांक ९८६ युक्ते यातो वर्त्तमानसन १११३ ।

अथ मुहुर्मादिचांद्रमासनामानि ।

मुहुर्रमसप्फरश्चान्योरबिलौवलस्तथा खिरः । जमादिलौवलस्तद्वज्जमाद्विलाखिरः स्मृतः ॥ रज्जबशावानरमजानाः शौवालोजिलकादि च ॥ जिलहिज्ज इमे मासाः क्षपेशोदयतः सदा ॥ व्याख्या-मुहर्रम १ सप्फर २ रविलौवल ३ रविलाखर ४ जमादिलौवल ५ जमादिलसानी ६ रज्जव ७ सावान ८ रमजान ९ शौवाल १० जिलकाद ११ जिलहिज्ज १२ रविलाखिरस्थाने रविस्सानि । तथा जमादिलाखिरस्थाने जमादिस्सानि इति केचिद्वदंति । इमे चांद्रमासाः । चंद्रोदयसमयतो ज्ञेयाः । उक्तं च । चंद्रदर्शनमारभ्य गणयेद्गतवासरान् । एकोनत्रिंशद्या संख्या सातु तारिखका स्मृता ।

अथ रूपिषु मासविभागमाह ।

तत्र तेषु मासेषु श्रेष्ठमासानां चतुर्णां द्वौ द्वौ रूपिणौ ज्ञेयौ । शेषाणामष्टानामेकैकरूपी ज्ञेयः तत्र श्रेष्ठमासाः ।मुहुर्रम १ रमजान २ जिलकाद ३ जिलहिज्ज ४ शेषाः सामान्याः। तत्र तीक्ष्णांशुबोधनौ ⁝ ⁝ द्वौ रूपिणौ मुहुर्रममासस्य ज्ञेयौ । तथा सौरिरूपी ⁝ सप्फरमासस्य । एवं लोहितः ⁝ रविलौवलमासस्य ज्ञेयः । तथारूपी ⁝ रविलावलमासस्य एवं कविरूपी ⁝ जमादिलौवलमासस्य ज्ञेयः । तथा वक्ररूपी ⁝ जमादिलावलमासस्य ज्ञेयः । ⁝ एवं सौम्यो रज्जबमासस्य ज्ञेयः । तथा शीतांशुः ⁝ शाबानमासस्य ज्ञेयः । तथा दैत्यार्चितवाग्मिनौ ⁝ ⁝ द्वौ रूपिणौ रमजानमासस्य ज्ञेयौ । एवं विधुः ⁝ शौवालमासस्य ज्ञेयः । तथा मंदगसूरी ⁝ ⁝ द्वौ रूपिणौ जिलकादजिलहिज्जमासयोर्ज्ञेयौ ।

अथैषां प्रयोजनमाह ।

ये रूपिणः प्रश्नरमलस्य दौहित्रीगृहेषु ९, १०, ११, १२, संति तेषां युग्मकेवलबिंदुसंख्यासमूहः कर्तव्यः । तस्मिन्मध्ये चतुर्भिर्भजेत् । ४ शेषेण विचारणीयं यद्येकः शेषः १ तदा नवमगृहे यो रूपी भवेत्त त्संबंधिमासे प्रष्टुः प्रश्नोदयो वक्तव्यः । द्विशेषे२ दशमगृहरूपिणा प्रश्नरमलस्य तत्संबंधिमासे प्रष्टुः प्रश्नोदयो वाच्यः । त्रिशेषे ३ चैकादशगृहरूपिणा प्रश्नरमलस्य तत्संबंधिमासेषु वक्तव्यम् । एवं चतुः ४ शेषे सति तदा प्रश्नरमलस्य द्वादशगृहरूपिणा प्रश्नावधिं वदेत् । परंतु प्रथमं पूर्वोक्तसंख्यानुमतेन दिनसंख्यामुक्त्वा पश्चान्मासोपरि कथयेत् । यदि दिनावधौ प्रश्नसिद्धिर्न तदा मासावधावावश्यकेन प्रश्नोदयः स्यादिति श्रीश्वरेच्छया ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे रूपिणां नानाविधिकथनं नामसप्तदशोऽध्यायः॥ १७॥

---

## अथाष्टादशोऽध्यायः ।

अस्मिन्नष्टादशाध्याये येषु येषु गृहेषु रूपिणां संबंधो वर्त्तते तेषां गृहाणां व्याख्यानमस्ति । ज्ञातव्यरूपिणां संबंधो गृहेषु वर्त्तते । यस्य रूपिणो येषु गृहेषु संबन्धोस्ति यदि स रूपी तेषु गृहेषु स्यात्तदा तं रूपिणं तस्मिन्गृहे सत्यरूपं वदंति धीराः । तथा यस्य रूपिणो येषु गृहेषु संबन्धो न स्यात् । तदा तं रूपिणं तस्मिन् गृहे मिथ्यारूपं वदंति अपरगृहेषु रूपिणां संबंधस्त्वेवं वर्त्तते । यथा चक्रे प्रवक्ष्यामि । तदाह । उच्चात्सप्तमकं नीचं निर्भयात्सप्तमं भयम् । प्रसन्नान्म्लानता तद्वदबलं सप्तमं बलात् ॥ १ ॥ तत्र प्रकृतिक्रमेण प्रथमादिषोडशपर्य्यंतेषु गृहेषु रूपिणां प्रत्येकं यथा क्रमेण निर्भयस्थानं ज्ञेयमिति। निर्भयात्सप्तमं भयं एवं रूपिषु- गृहसंबंधत्वाद्गृहोक्तोच्चं गृहाण्येव रूपिणामुच्चगृहाणि ज्ञेयानि । तस्मादुच्चात्सप्तमं नीचं एवं प्रसन्नात्सप्तमं म्लानतया स्थानं ज्ञेयम् ।

तथा गृहसंबन्धत्वाच्चक्रोक्तगृहाणि यानि संति तानि रूपिणां बल स्थानानि ज्ञेयानि । तस्माद्बलात्सप्तमं बलहीनस्थानम् ।

अथ शकुनपंक्तिप्रमाणचक्रम् ।

| रूपिणः | ०<br>—<br>—<br>— | —<br>०<br>—<br>० | ०<br>—<br>०<br>— | —<br>—<br>—<br>— | ०<br>०<br>—<br>० | ०<br>—<br>—<br>० | —<br>—<br>—<br>० | —<br>०<br>—<br>— | —<br>—<br>०<br>— | ०<br>०<br>—<br>— | —<br>—<br>०<br>० | ०<br>०<br>०<br>— | ०<br>—<br>०<br>० | —<br>०<br>०<br>० | —<br>०<br>०<br>— | ०<br>०<br>०<br>० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| निर्भयानि. | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| भयस्थानं. | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | २ | ४ | ५ | ६ |
| उच्चस्थानं. | ४ | १ | ३ | ६ | १२ | ७ | ७ | १० | २ | १ | ४ | ३ | १० | १२ | ६ | २ |
| नीचस्थानं. | १० | ७ | ९ | ११ | ६ | १ | १ | ४ | ८ | ७ | १० | ९ | ४ | ६ | १२ | ८ |
| प्रसन्नस्थानं. | ११ |  | ६ | १ | ९ | १० | १२ | ५ | ३ | ९ | १ | ६ | ६ | ५ | १ | ३ |
| म्लानतास्थानं | ५ | ३ | १२ | ७ | ३ | ४ | ६ | ९ | ११ | ३ | ७ | १२ | १२ | ११ | ७ | ९ |
| वक्रस्थानं. |  | ४ | १० | ६ | ७ | ११ | १० | १ | ४ | ५ | १२ | १० | ८ | २ | ३ | ४ |
| बलहीनस्थानं. | ३ | ११ | ४ | १२ | १ | ५ | ४ | ७ | १० | ११ | ६ | ४ | २ | ८ | ९ | १० |
| गृहाणि. | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| दीर्घत्वं. | ७ | ६ | ६ | ८ | ५ | ६ | ७ | ७ | ७ | ६ | ६ | ५ | ५ | ५ | ६ | ४ |
| विस्तार. | १ | ६ | ४ | ० | ७ | ५ | ४ | २ | ३ | ३ | ७ | ६ | ८ | ९ | ५ | १० |
| पुष्टत्व. | ७ | ३६ | २४ | ० | ३५ | ३० | २८ | १४ | २१ | १८ | ४२ | ३० | ४० | ४५ | ३० | ४० |

अथैषां प्रयोजनमाह ।

एभिः रूपिणां शुभत्वमशुभत्वं च ज्ञातव्यम् । यथा रूपिणां प्रोक्तानि यान्यष्ट गृहाणि तानि तेषां संबंधस्थानानि ज्ञेयानि एभ्यः शेषाणि यानि गृहाणि संति तानि संबंधरहितानि । यदि चक्रोक्तगृहेषु स्व-संबंधरूपेषु यो भवेद्रूपी प्रश्नरमलेषु तदा स रूपी शुभो ज्ञेयः । स अशुभत्वं न कारयेत् । यद्यपि स्वजातीयस्वभावत्वादशुभोऽपि तथापि शुभत्वमेव फलं ददाति । अपरं यदि चक्रोक्तगृहेभ्योऽष्टाभ्यः शेषगृहेषु प्रश्नसमये रूपी पतितः स्यात्तदा स रूपी अशुभो ज्ञेयः । स अशुभत्वमेवकारयेत् । यद्यपि स्वजातीयस्वभावत्वात्स रूपी शुभोपि स्ते तथापि निषिद्धतरं फलं दद्यात् ।

अथ रूपिणां दीर्घत्वादिप्रयोजनमाह ।

रूपिणां दीर्घत्वं विस्तारत्वं तथा पुष्टत्वं च गजादीनां परि-

माणकरणकार्य्यें आयाति। तदग्रे कथयिष्यामि। अत्र कमपि विशेषं यवनाचार्या वदंति। दैत्यार्चितः ⁝ शुभो वर्त्तते। तथा द्विस्वभावरूपः। अस्य शुक्रोऽधिपतिः। तथा कर्दनोपरि विचारांशः। तथात्र प्रसन्नतोपरि विचारांशः। तथा विवाहादिमंगलोपरि विचारांशः। तथा वर्धमानोपरि तथा संतानोपरि विचारांशः। अपरमस्य दैत्यार्चितस्य प्रथमगृहमुच्चस्थानम्। तथा प्रकृतिक्रमेण तस्य पंचम ५ गृहं स्थानं तथास्य नवमगृहं ९ हद्दास्थानं वर्त्तते। एवं प्रथमगृहं विजदहस्थानं वर्त्तते। तथा सप्तमं नवमं७। ९ च गृहं तस्य रूपिणो मुसल्लसस्थानं वर्त्तते। अथ वाग्मी ⁝ शुभोऽस्ति तथा निर्गमरूपोयम्। अस्य गुरुरधिपतिः। तथा विद्योपरि विचारांशः तथा स्वधर्मोपरि विचारांशः तथा बृहल्लोकोपरि बृहज्जनोपरि विचारांशः तथा नीतिकर्तुरुपरि विचारांशः। अपरमस्य रूपिणो द्वितीय २ गृहमुच्चस्थानं पारसीवचने 'शरफ' इति। तथा प्रकृतिक्रमे तस्य प्रथमं १ गृहं स्थानं तथास्य दशमं १० गृहं हद्दास्थानम् एवं षष्ठ ६ गृहं विजदहस्थानं तथास्य प्रथमं १ चाष्टमं ८ मुसल्लसस्थानम्। अथ कविरूपी ⁝ शुभोऽस्ति तथा प्रवेशरूपो यमस्य शुक्राधिपतिः। तथा कूर्दनखेलनोपरि विचारांशः तथा प्रसन्नतोपरि विवाहादिमंगलोपरि विचारांशः तथा वर्धमानोपरि तथा संतानोपरि विचारांशः। अपरमस्य तृतीयगृहमुच्चस्थानं वर्त्तते। प्रकृतिक्रमेऽस्य चतुर्दशं गृह १४ मेवं द्वितीयं गृहं हद्दास्थानम्। तथा सप्तमं ७ गृहं विजदहस्थानं तथा पंचमं ५ सप्तमं ७ गृहमुसल्लसस्थानम्। अथ विधुरूपी ⁝ शुभोऽस्ति तथा स्थिररूपोयमस्य चंद्रोधिपतिः। तथा प्रचलनोपरि विचारांशः तथा स्थानांतरगमनोपरि विचारांशः तथा प्रवासोपरि विचारांशः तथा प्रेष्यपुरुषोपरि विचारांशः। तथा इतरजनोपरि विचारांशः। अपरमस्य रूपिणां चतुर्थं गृहं शरफस्थानं तथा हद्दास्थानं विजदहस्थानं वर्त्तते। तथा प्रकृतिक्रमेस्य नवमं गृहं

स्थानम् । एवं द्वितीयं २ गृहं चतुर्थं ४ गृहं च मुसल्लसस्थानम् । अथाररूपी ⁝ अशुभो ज्ञेयः परंतु द्विस्वभावरूपोयम् । अस्य भौमोधिपतिः । तथा शूरवीरोपरि विचारांशोऽस्ति । एवं सर्वशस्त्रोपरि विचारांशः । अपरमस्य पंचमं ५ गृहमुच्चस्थानं तथा प्रकृतिक्रमेस्य त्रयोदशं १३ गृहं दशमं १० गृहं हद्दास्थानं सप्तमं गृहं विजदहस्थानम् । एवं प्रथमं १ गृहमष्ट ८ मं गृहं च मुसल्लसस्थानं ज्ञेयम् ।

अथ वक्ररूपी ।

⁝ अशुभफलदः तथा निर्गमरूपोयम् । अस्य केतुरधिपतिः।तथा नीचजनोपरि विचारांशः । तथा नीचजातिजनोपरि विचारांशः तथा वक्रजनोपरि विचारांशः।अथास्य रूपिणः षष्ठं गृहमुच्चस्थानं ज्ञेयं तथा प्रकृतिक्रमेस्य द्वादशं १२ गृहमष्टमं गृहं ८ च हद्दास्थानं तथा विजदहस्थानं ज्ञेयमेवं षष्ठाष्टम ६।८ गृहे मुसल्लसस्थानं वर्त्तते।अथ लोहितः ⁝ अशुभदः स्थिररूपोयम् । अस्य भौमोधिपतिः । अपरं सैन्यवासिनो ये जनास्तेषामुपरि विचारांशः तथा सर्वशस्त्रोपरि विचारांशः । तथा युद्धोपरि कलहोपरि तथोपद्रवोपरि विचारांशः तथा रुधिरप्रक्षरणोपरि विचारांशः । अपरमस्य सप्तमं ७ गृहमुच्चस्थानं तथा विजदहस्थानमपि ज्ञेयम् । तथा प्रकृतिक्रमेस्याष्टमं गृहं वर्त्तते। प्रथमं १ गृहं तृतीयं ३ गृहं हद्दास्थानं ज्ञेयं तथा प्रथमं १ गृहं तृतीयं ३ गृहं मुसल्लसस्थानम् ।

अथ सौरिरूपी ।

⁝ अशुभफलदस्तथा प्रवेशिरूपोयम् । अस्य शनिरधिपतिः । तथा मंदिरोपरि विचारांशः एवं क्षेत्रोपरि विचारांशः तथा ग्रामीण जनोपरि तथा कृषिकर्त्तुरुपरि विचारांशो वर्तते तथा नीचज्ञाति जनोपरि । अपरमस्या ८ ष्टमगृहमुच्चस्थानं तथा प्रकृतिक्रमेस्य सप्त ७ मं गृहं द्वितीयं १ गृहं २ हद्दास्थानं तथा पंचमगृहं ५ विजदहस्थानं ज्ञेयम् । एवं द्वितीयगृहं २ नवमगृहं९च मुसल्लसस्थानं ज्ञेयम् ।

अथोष्णगुरूपी ।

⁞ शुभफलदः तथा निर्गमरूपोयम् । अस्य सूर्योऽधिपतिः तथा पृथ्वीपत्युपरि विचारांशः । एवं प्रतिष्ठोपरि तथोत्कृष्टपदव्युपरि तथा महत्त्वोपरि विचारांशः । तथा नायकत्वोपरि विचारांशः । अपरमस्य नवमगृहमुच्चस्थानं प्रकृतिक्रमेऽस्य दशम १० गृहमस्ति । षष्ठगृहं ६ हद्दास्थानं ज्ञेयं एवं प्रथमगृहं १ विजदहस्थानं ज्ञेयं तथा तृतीयं ३ गृहं पंचमं ५ गृहं च मुसल्लसस्थानं वर्त्तते ।

अथ मंदगः ।

⁞ अशुभफलदः तथा द्विस्वभावरूपोयम् । अस्य शनिरधिपतिः । अपरं यद्ग्रंथिबंधनं भवेत्तस्योपरि विचारांशः । तथा मोक्षोपरि विचारांशस्तथा योगयुक्तोपरि विचारांशः । लोके टोना इत्युच्यते । अपरं यद्वस्तुनः शिरोबंधनं भवेत्तस्योपरि विचारांशः।तथा यद्वस्तुनः अभ्यतरं हृदयरहितं भवेत्तस्योपरि विचारांशः । यथा भेरीवंशादि । अपरमस्य दशमं १० गृहमुच्चस्थानं ज्ञेयं तथा प्रकृतिक्रमेस्य षष्ठं गृहं ६ चतुर्दशं गृहं १४ हद्दास्थानम् । एवं पंचमं गृहं विजदहस्थानं तथा मुसल्लसस्थान मपिज्ञेयम् ।

अथ बोधनः ।

⁞ शुभो ज्ञेयः तथा स्थिररूपोऽयम् । अस्य बुधोऽधिपतिः । तथा ज्योतिर्विदुपरि विचारांशः । अभिचारकर्तुरुपरि विचारांशः । तथा गणितज्ञोपरि विचारांशः । लेखनकर्मकुशलोपरि विचारांशः । अपरं तद्वस्तूपरि यस्मिन्वस्तुनि विचित्रकर्म्म कृतं स्यात् । लोके नक्स इत्युच्यते । अपरं चैकादशगृहं ११ शरफस्थानम् । एवं प्रकृति क्रमेऽस्य पंचदश १५ गृहं तथा हद्दास्थानमपि ज्ञेयम् । तृतीयं ३ गृहं विजदहस्थानं ज्ञेयम् । तथा षष्ठं ६गृहं मुसल्लसस्थानं ज्ञेयम् ।

अथ सूरी ।

⁞ शुभो ज्ञेयः तथा प्रवेशरूपोऽयं करातं प्रवेशिनं विद्यात् निर्गमं

करान्निर्गतम् । अस्य गुरुरधिपतिः तथाचार्योपरि विचारांशः । तथा धर्मशास्त्रज्ञपंडितोपरि विचारांशः । एवं जापकजनोपरि विचारांशः। तथा सन्ध्यावन्दनकर्तुरुपरि तथा सत्पात्रजनोपरि विचारांशः । अपरं द्वादशगृहं १२ शरफस्थानं ज्ञेयं शरफेत्युच्चगृहं स्यात् । तथा प्रकृतिक्रमे चैकादशगृहं ११ पंचमगृहं५हद्दास्थानं ज्ञेयं तथा षष्ठं गृहं ६ विजदहस्थानम् । एवं चतुर्थगृहं ४ तथा षष्ठगृहं ६ मुसल्लसस्थानं ज्ञातव्यमिति ।

अथ शीतांशुः ।

शुभो ज्ञेयः तथा द्विस्वभावरूपोऽयम्।अस्य चंद्रोऽधिपतिः।तथा जलोपरि विचारांशः तथा वर्षोपरि विचारांशः तथा जलग्रंथिपाषाणोपरि जलधारोपरि च विचारांशः । अपरमस्य त्रयोदश १३ गृहं शरफस्थान तथा प्रकृतिक्रमे शोडशं १६ गृहं तथा तस्मिन्गृहे हद्दास्थानमपि वर्त्तते । एवं चतुर्थगृहं ४ दशमगृहं १० च विजदहस्थानं ज्ञेयं तथा सप्तमगृहं मुसल्लसस्थानं ज्ञातव्यम् ।

अथ पातरूपी ।

⁝ अशुभफलदः तथा निर्गमरूपोऽयम् अस्य राहुरधिपतिः । तथा नीचजात्युपरि विचारांशः । तथा धूर्तजनोपरि विचारांशः । तथा वक्रजनोपरि विचारांशः ।·अपरमस्य चतुर्दशगृहं १४ शरफस्थानं वर्त्तते । तथा प्रकृतिक्रमेऽस्य तृतीय ३ गृहं द्वादशगृहं १२ हद्दास्थानं ज्ञेयम् । तथाष्टमगृहं विजदहस्थानं ज्ञेयम् । एवं प्रथमगृहं १ तृतीय ३ गृहं च मुसल्लसस्थानं अपरं केषु चित्पुस्तकेषु कथितं वर्त्तते । त्रयोदश १३ गृहं मुसल्लसस्थानं ज्ञेयमिति ।

अत्राचार्यमते किंचिद्विशेषो वर्त्तते । वक्ररूपिणो ⁝ राहुः स्वामी तथा पातरूपिणः ⁝ केतुः स्वामी यत्स्पर्द्धं रूपं पूर्वोक्तं मया तत्कस्मादित्यत आह । वह्निर्बिंदू द्वौ साभिप्रायरूपौ एकः सर्वा-

भिप्रायः द्वितीयः स्वल्पाभिप्रायः । सर्वाभिप्रायस्य जलं वर्त्तते स्वल्पाभिप्रायस्य वायुरस्ति । अथ वक्ररूपिणां ⠅ वह्निवायुजलानां त्रयाणामपि बिंदवस्तिष्ठंति । तत्र वायुर्बिंदुर्जलात् गुणं संगृह्य वह्नौ प्रापयति । तथा वह्नेः गुणं संगृह्य जले प्रापयति । एवं साहचार्याद्गुणमिश्रितो भवति । तथा राहुः शुभगृहसंयोगा च्छुभफलप्रदः क्रूरगृहसंयोगादशुभफलप्रदः । तथावक्ररूपिणि वह्निबिंदूभयाभिप्रायौ वायुजलरूपौ वर्त्तते । अत एव वक्ररूपिणो राहुः स्वामीति कथितं मया पूर्वस्पर्द्धारूपम् । एवं पातरूपिणः ⠅ नास्ति वह्नेरेक एवाभिप्रायसत्वात् । अत एव पातरूपिणः केतुः स्वामी कथितः । यतः केतुः स्वजातीयक्रूरफलदः साहचार्याद्गुणविर्य्ययो न भवति । यथा पातरूपिमध्ये रेखासंभवात्स्वजातीयपृथक् फलदः । इति यवनाचार्य्यसंमतम् । पुनरपि यवनाचार्य्यस्य संमतं प्रारभ्यते । अथ सौम्यः ☰ शुभफलदः । तथायं निर्गमप्रवेशी स्थिरद्विस्वभावेषु सर्वेषु मिश्रितरूपः । अस्य बुधोऽधिपतिः । तथा बहुवृंदोपरि विचारांशः । तथा बहुतर भारोपरि तथा अशक्ततोपरि विचारांशो वर्त्तते । अपरमस्य पंचदश १५ हे शरफस्थानमन्तस्थानम् । तथा प्रकृतिक्रमेऽस्य चतुर्थगृहम् । त्रयोदशगृहे हद्दास्थानं ज्ञेयमस्य तृतीयगृहे विजदहस्थानमेवं षष्ठगृहे मुसल्लसस्थानम् ।

अथ तीक्ष्णांशुरूपी ।

⠅ शुभफलदः तथा प्रवेशिरूपोऽयम् । अस्य सूर्योऽधिपतिः । तथा पृथ्वीपतीनामुपरि विचारांशः । तथा बृहन्मनुष्योपरि विचारांशः । तथोच्चजात्युपरि विचारांशः । १ अपरमस्य षोडश १६ गृहे शरफस्थानं ज्ञेयम् । प्रथमगृहं विजहदस्थानम् ज्ञेयम् । तथा प्रकृतिक्रमेऽस्य द्वितीयगृहं । पंचदश १५ गृहं हद्दास्थानम् । ज्ञेयम् । एवं द्वितीय २ गृहं नवम ९ गृहं मुसल्लसस्थानं वर्त्तते ।

अथ किंचिद्विशेष उच्यते । शरफेत्युच्चस्थानं तस्मात्सम्मुखे सप्तमं नीचं ज्ञेयम् । प्रकृतिर्निर्भयस्थानं तत्सम्मुखे भयस्थानम् । एवं हद्दागृहं तथा विजदहगृहं तथा मुशल्लसगृहं त्रयमेतत् बलस्थानं तत्तस्माद्बलस्थानात्सम्मुखे बलहीनस्थानं ज्ञेयमिति।पारशीवचने उच्चस्य संज्ञा शरफ, तथा नीचस्थानस्य संज्ञा उकत[1] इति। तथा भयस्थानस्य संज्ञा वलाबाल इति। तथा बलहीनस्य संज्ञा जोफ[2] इति कथयंति धीराः । एवं भयस्थानंबलहीनस्थाने ज्ञेयम् । अपरं सर्वं कथितं वर्त्तते। किं च षोडशरूपिणां परमसंबंधस्थानं पंचपरिमितं वर्त्तते। तेष्वेकं १ प्रकृतिस्थानं द्वितीयं २ संख्याक्रमस्थानं तृतीय ३ खेटक्रमस्थानं चतुर्थक ४ वर्णक्रमस्थानं पंचमं५ तत्क्रमस्थानम्।एवं रूपिणां परमसंबंधस्थानं ज्ञातव्यमिति।

इति श्रीभयभंजनशर्म्मकृतौ रमलरहस्यसारसंग्रहे रूपिणां परमसम्बन्धस्थानस्य व्याख्यानं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## अथैकोनविंशतितमोऽध्यायः ।

अस्मिन्नेकोनविंशतितमेऽध्याये रूपिणां दृष्टिज्ञानस्य व्याख्यानं वर्त्तते। सर्वे रूपिणः स्वस्मिन्दृष्टियुताः संति यथा ग्रहाः स्वस्मिन् पश्यन्ति। परंतु ग्रहाश्चरणाभिवृद्ध्या चतुःस्थानतः पश्यंति । ते च रूपिणः पचमस्थानतः सव्यापसव्यमार्गेण पश्यन्ति। तेषां पंचस्थानानां नामान्याह। तसल्लीस, तरबीय तसदीस, मुकाविला, मुकरना, एतानि पच स्थानानि । तत्र तनुस्थानाद्दक्षिणांगे वामांगे च पंचमस्थानस्य तसल्लीस इति संज्ञा ज्ञेया । तथा दक्षिणांगे वामांगे च चतुर्थस्थानस्य तरबीय इति संज्ञा कथिता वर्त्तते

---

१ हलूतइति पाठः। २ जाफरइति पाठः।

१२ १ २ ११ ३ १० द्वा.वृ. चार ४ ९ ५ ८ ७ ६

तथा दक्षिणे वामांगे तृतीयस्थानस्य तसदीस इति संज्ञा ज्ञेया स्वस्थानात्सप्तमस्थानस्य मुकाबिला इति संज्ञा ज्ञातव्या। तथा तनुस्थानपार्श्वयोर्द्वितीयद्वादशगृहयोर्मुकरना इति संज्ञा स्यात्। एभ्यः पंचस्थानेभ्यो रूपिणः प्रश्नरूपिणं पश्यंति। एतद्विचारं द्वादशराशिचक्रे सम्यक्प्रकारेण जानीयात्। अस्यावृत्तिर्द्वादशपर्य्यन्तेष्वेव नतु षोडशपर्य्यन्तेषु सा दृष्टिर्द्विविधा। एका प्रकटरूपा। द्वितीया च गुप्तरूपा। तत्रादौ प्रकटरूपामाह। प्रष्टुर्मनोऽभिलषितस्य यो रूपी स्यात्स रूपी तनुस्थानस्य ज्ञेयः तत्तनुस्थानं पंचमं ५ नवम ९ स्थानाद्यो रूपी पश्यति स तसल्लीस स्थानात्पश्यतीत्यर्थः। तत्रानयोर्मध्ये ५, ९, एकः ५ तसल्लीस अपसर इति वामांगात्पश्यतीत्यर्थः। द्वितीयः ९ तसल्लीस अयमन' इति। दक्षिणांगात्पश्यतीत्यर्थः। एवं तनुस्थं चतुर्थ ४, १०, दशमस्थानाद्यो रूपी पश्यति स तरवीयस्थानात्पश्यतीत्यर्थः। तयोर्मध्ये चैकस्य ४ 'तर वीयअपसर' इति नाम। द्वितीयस्य १० 'तरवीयअयमन' इति नाम कथयंति धीराः। एवं तनुस्थं रूपिणं तृतीये ३, ११ कादशस्थानाद्यो रूपी पश्यति स तसदीसस्थानात्पश्यतीत्यर्थः। तयोर्मध्ये चैकस्य ३ नाम 'तसदीस अपसर' इति। द्वितीयस्य ११ नाम 'तसदीसअयमन' इति। एवं तनुस्थं रूपिणं सप्तम ७ स्थानाद्यो रूपी पश्यति स मुकाबिलास्थानात्पश्यतीत्यर्थः। एवं तनुस्थं रूपिणं द्विर्द्वादश २, १२, स्थानाद्यो रूपी पश्यति स मुकरनास्थानात्पश्यतीत्यर्थः। केचिद्वदंति मकारना इति द्वितीय २स्थानादेव पश्यतीत्यर्थः। इति वाक्यं प्रमाणतरम्। एवं प्रश्नरूपिण उपरि रूपिणो

दृष्टिज्ञानं ज्ञातव्यमिति । एवं सर्वत्रैव विचारणीयम् । अस्मिन्दृष्टिविचारे कर्त्तव्ये रूपिणां शुभाशुभत्वं त्वावश्यकत्वेन स्मरणं कृत्वा तादृशं फलं वक्तव्यमिति। दृष्टिस्थानानां च फलमाह । तसल्लीसस्थानं संपूर्णं मित्रत्वफलं ददाति । तथा तसदीसस्थान ३ ११-मर्द्धमित्रत्वफलं ददाति । एवं मुकाविला ७ स्थानं संपूर्णं दुष्टत्वफलं ददाति तथा तरवीय ४, १०, स्थानमर्द्धदुष्टत्वफलं ददाति । एवं मुकरना २, १२, स्थानं शुभरूपियोगे शुभफलमशुभरूपिसंयोगे शुभफलं ददाति ।

अथैषां प्रयोजनमाह ।

यथा कश्चिदेकः शुभरूपी तरवीयस्थाने ४, १०, चोपविश्य प्रश्नरूपिणं पश्यति वा मुकाविलास्थाने ७ चोपविश्य प्रश्नरूपिणं पश्यति । तदा विचारांशो वर्त्तते केनापि सह मनसि म्लानता स्यात्[1] । अशुभरूपिणां संयोगेऽशुभमेव फलं ब्रूयात् । एवमशुभरूपी अपि तसल्लीस ९, ९, स्थाने चोपविश्य प्रश्नरूपिणं पश्यति । वा तसदीस ३, ११ स्थाने चोपविश्य प्रश्नरूपिणं तनुरूपं पश्यति । तथा विचारांशो वर्त्तते । किंच यद्यपि प्रत्यक्षे निषिद्धावस्था वर्तते तथापि निषिद्धफलं न भविष्यति । अत एव स्थानसदृशं फलं वाच्यम् । रूपिणां स्थानसंयोगान्न तु रूपिणः स्वजातिफलदाः स्युः । शुभरूपिसंयोगे शुभमेव फलं ब्रूयात् । रूपिणः स्थानसदृशं फलं दद्युः ।

अथ दृष्टिविभागमाह ।

त्री ३ श ११ त्रिकोणं ९, ९ दश १० वेद ४ मस्तं ७ पश्यंति रूपाश्चरणाभिवृद्ध्या ॥ रूपं१तथा मिश्रितदृष्टियुक्तं ज्ञेयं सदा तत्सदृशं फलं हि ॥ १ ॥ रूपा रूपिण इत्यर्थः ।

---

१ म्लानता न स्यादिति पाठः ।

अथ गुप्तरूपां दृष्टिमाह ।

प्रश्नरमलेषु येन रूपिणा प्रश्नो भवेत्तं प्रश्नरूपिणं षोडशगृहरूपिणा १६ लिशानुल अमरनाम्ना गुणयेत् । ताभ्यां यो रूपी भवति तं रूपिणं प्रश्नरमलेषु पश्येत् । यदि स रूपी प्रश्नरूपिणं दुष्टत्वदृष्ट्या पश्यति तदा दुष्टत्वं फलं वाच्यम् । यदि च प्रश्नरूपिणं मित्रत्वदृष्ट्या पश्यति तदा मित्रत्वं फलं वक्तव्यम् । एवं प्रश्नरूपिणं प्रश्नरमलस्य प्रथम १ गृहरूपिणा गुणयेत् । ताभ्यां यो रूपी भवति तं रूपिणं प्रश्नरमलेषु पश्येत् । यदि स रूपी प्रश्नरूपिणं दुष्टत्वदृष्ट्या पश्यति तदा दुष्टत्वं फलं वाच्यम् । यदि च प्रश्नरूपिणं मित्रत्वदृष्ट्या पश्यति तदा मित्रत्वं फलं वाच्यम् । एवं प्रश्नरूपिणं प्रश्नरमलस्य प्रथमगृहरूपिणा गुणयेत् । ताभ्यां यो रूपी चोत्पन्नो भवेत्तमपि पूर्वरूपिवत् पश्येत् । यदि स रूपी दुष्टत्वदृष्ट्या प्रश्नरूपिणं पश्यति तदा दुष्टत्वं फलं मित्रत्वदृष्ट्या मित्रत्वं फलं वाच्यम् । खलु द्वौ रूपिणौ चोत्पन्नौ । एतौ द्वौ रूपिणौ स्वस्मिन्गुणितौ कर्तव्यौ । आभ्यां यो रूपी चोत्पन्नो भवति तं चापि शुभाशुभरूपं प्रश्नरमलेषु पश्येत् । स रूपी शुभोऽपि दुष्टत्वदृष्ट्या प्रश्नरूपिणं पश्यति तदा दुष्टमेव फलं दद्यात् । एवमशुभोऽपि मित्रत्वदृष्ट्या प्रश्नरूपिणं पश्यति तदा मित्रत्वफलं दद्यात् । एवं रूपिणां गुप्तदृष्ट्या फलं वक्तव्यम् ।

अथ किंचिद्विशेष उच्यते । तरबीय ४, १०, स्थानात्तथा मुकाबिला ७ स्थानाद्यो रूपी पश्यति स दुष्टत्वदृष्ट्या पश्यतीत्यर्थः । एवं तसलीस ५, ९ स्थानात्तथा तसदीस ३, ११, स्थानाद्यो रूपी पश्यति स मित्रत्वदृष्ट्या पश्यतीत्यर्थः । मुकरना तु २ सुरूपिणां प्रकृत्या फलं ददाति । शुभरूपिसंयोगाच्छुभं फलमशुभरूपिसंयोगादशुभं फलं वाच्यम् । एवं यो रूपी अष्टमस्थाना८त्पश्यति समयनिषिद्धत्वदृष्ट्या पश्यतीत्यर्थः । एवं यो रूपी षष्ठ ६-

स्थानात्पश्यति स रोगित्ववदासत्ववद्दृष्ट्या पश्यतीत्यर्थः । एवं यो रूपी द्वादशस्था १२ नात्पश्यति संबंधगतपुरुषदृष्ट्या तथा चतुष्पदद्दृष्ट्या पश्यतीत्यर्थः । एवं रूपिणां प्रकटरूपा गुप्तरूपा च द्विविधा दृष्टिर्ज्ञातव्या तादृशं फलं वाच्यम् ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे रूपिणां दृष्टिज्ञानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशतितमोऽध्यायः ।

अस्मिन्विंशतितमेऽध्याये मूकप्रश्नकथनव्याख्यानं वर्त्तते। भो मित्र रमलज्ञपुरुष एवं समुचितं वर्त्तते । किं च । मूकप्रश्नोपरि प्रतिज्ञां नैव कारयेत् । तथैवं नो वदेत् । अस्माभिर्मूकप्रश्ना मनोऽभिप्रायाः कथ्यंत इति । कस्मात् । मूकप्रश्नमनोऽभिप्रायस्य ज्ञाता कोऽपि नास्तीश्वरं विनेति वचनात् । दैवीवार्तायाः श्रीपरमेश्वर एव ज्ञातेति । चेद्यदि कोऽपि वदेन्मया मूकप्रश्नमनोऽभिप्रायाःकथ्यंते तदा स धर्म रहितो भवेत् । अथ यदि कोऽपि समागत्य रमलज्ञस्याग्रे वदेत् । भो रमलज्ञ मम मूकप्रश्नमनोऽभिप्राया वक्तव्याः।तदैवं समुचितं वर्त्तते तदर्थं रमलं नो पातयेत् । यावत्सस्वाभिप्रायं नो वदेत् । उक्तं च पश्चिमदेशीययवनाचार्यैः । तावद्रमलं नो पातयेद्यावत्प्रष्टा स्वाभिप्रायं नो वदेदिति । अपरं समीचीनमेवं वर्त्तते । प्रष्टा रमलज्ञस्याग्रे स्वाभिप्रायं वदेत् । तदा प्रष्टुर्मनोऽभिप्रायं ज्ञात्वा रमलज्ञो रमलं पातयेत् । तदा जानीयान्मया रमलमेतदर्थं पात्यते । अथ सामान्यपक्षे पुरा रमलविद्याचार्या लोकपरीक्षार्थं मूकप्रश्नमनोऽभिप्रायकथनप्रकरणे कतिपयान्यत्नान्बहुप्रकारं ज्ञात्वा कथितवंतः । यत्ना बहुप्रकाराः संति । तेषां मध्येऽयमेको यत्नो वर्त्तते । तमाह प्रश्नसमये रमलज्ञः पंचदश १५ गृहे रूपिणं पश्येत् । किं च पंचदशगृहरूपिणि वह्निबिन्दुं स्थापयेत् । अथवा ⁝ ⁝ ⁝ ⁝ भूमिबिंदुं स्थापयेत् । ⁝ ⁝ ⁝ ⁝ अथवा मध्ये बिंदुं स्थापयेत्

⁝ ⁝ ⁝ ⁝ अथवा ऊर्द्धाधो बिंदुं स्थापयेत् ⁝ ⁝ ⁝ ⁝ यदि पंचदश १५ गृहरूपिणि वह्निबिन्दुश्चेत्तदाऽवधिपर्यंतं सर्वत्रैवाग्निबिंदुना प्रचालनं कर्तव्यम् । एवं वायुश्चेद्वायुबिंदुना जलं चेज्जलबिंदुना भूमिश्चेद्भूमिबिंदुना सर्वत्रैव बिंदुप्रचालनं कर्तव्यम् । एवं द्व्यादिबिन्दुना मिश्रितरूपी चेत्तदा तद्रूपेण मिश्रितेन सर्वत्रैव बिंदुप्रचालनं कर्त्तव्यम् । यथा रूपी बिंदुं पश्येदयं बिंदुर्दक्षिणांगे गमिष्याति वा वामांगे यास्याति । यदि दक्षिणांगे यायात्तदा त्रयोदश १३ गृहं यास्यति । तदनंतरं ततस्त्रयोदशगृहान्पश्येत्स बिंदुर्नवम ९ गृहे गमिष्यति वा दशमे १० यदि नवमगृहं गच्छेत्तदा पश्येत्स बिंदुः प्रथमगृहे १ गमिष्यति वा द्वितीये २ एवं यदि त्रयोदशगृहाद्दशमगृहे १० बिंदुर्यायात्तदा पश्येत्स बिंदुस्तृतीयगृहे ३ यास्याति वा चतुर्थगृहे ४ तथा पंचदश १५ गृहाद्यदि वामांगे बिंदुर्यास्यति तदा चतुर्दश १४ गृहे यास्यति । ततश्चतुर्दशगृहात्पश्येत्स बिंदुरेकादश ११ गृहे गमिष्यति वा द्वादश १२ गृहे यदि चैकादश ११ गृहे यायात्तदा पश्येत्स बिंदुः पंचम ५ गृहे गमिष्यति वा षष्ठ ६ गृहे एवं यदि चतुर्दशगृहाद्द्वादश १२ गृहे यायात्तदा पश्येत्स बिंदुः सप्तमगृहे गमिष्यति वाष्टमगृहे ८ एवं बिंदोरवसानं यत्र स्यात्तत्रैव प्रष्टुर्मनोऽभिप्रायो ज्ञातव्य इति । स मनोऽभिप्रायस्तस्मिन्रूपिणि स्याद्वा गृहे । पर्य्यायशब्देन मनोऽभिप्रायोत्पत्तिः स्यात् । यदि प्रष्टा पर्यायशब्देनावबुद्ध्यते । तदा तेन रमलज्ञस्याभिप्रायो न ज्ञातः स तु मूर्खतरः । एष प्रकारो मनोऽभिप्रायनिष्कासने बहुसमीचीनो वर्त्तते । अत्र किंचिद्विशेष उच्यते । यदि पंचदशगृहात् १५ दक्षिणांगे वामांगे चोभयमार्गे बिंदुर्यायात्तदोभयरूपिणोरूपर्य्येवावसानं भवेत्तत्पश्येत् । कस्य साक्षीभूता बलिष्ठा बहुतराः संति तयोर्मध्ये यः साक्षीभूतो बलिष्टो भवेत्तस्मि-

न्नेव रूपिणो गृहे च प्रष्टुर्मनोऽभिप्रायो वक्तव्यः । यदिसाक्षी-भूतैरपि दक्षिणांगवामांगस्थावुभौ बिंदू समानरूपौ स्यातां तदा द्वाभ्यामेव रूपिभ्यां गृहसाहिताभ्यां प्रष्टुर्मनोऽभिप्रायं वदेत् अथवा द्वावेतौ रूपिणौ स्वस्मिन् गुणितौ ताभ्यां य उत्पन्नो भवेत्स प्रश्नरमलेषु द्रष्टव्यः । यत्र रूपी स्यात्तेन रूपिणा गृहेण वा प्रष्टुर्मनोऽभिप्रायो वक्तव्यः ।

अथ साक्षीभूतस्य बलमाह ।

तस्य बिंदुना प्राप्तरूपिणस्तस्मिन्नेव गृहे वसुस्थलव्यवहारेण बलं भवेत्तथा शकुन[1]पंक्तिमार्गेण संख्याक्रममार्गेण तथा वर्णक्रममार्गेण तथा खेटक्रममार्गेण ८ तस्य रूपिणो बलं विचारणीयमेवं सर्वत्रैव बलं विचारणीयम् । तथा केंद्रादिस्थानमार्गेणापि तस्य बलं विचारणीयम् । एवमपरस्थलरूपबलेभ्यो बलं विचारणीयम् । तदा प्रष्टुर्मनोऽभिप्रायकथनक्षमो भवेत् । उक्तं च प्राचीनग्रंथेषु तुलारमलगृहस्य १६ वह्निबिंदुं प्रचालयेत् । स बिंदुर्य-स्मिन्स्थले प्राप्नुयात्तदा तस्मिन् गृहे रूपिणं पश्येत् । यदि तस्य गृहस्य रूपी प्रकृति १ क्रमेण स्वामी वर्त्तते वा संख्या २ क्रमेण तस्य गृहस्य स्वामी स्यादथवा वर्ण ३ क्रमेण तस्य गृहस्य स्वामी स्यात् । खेटग्रहक्रमेण ४ स्वामी स्यात्तदा स रूपी स्वयमेव प्रष्टुर्मनोऽभिलषितमनोऽभिप्रायरूपो ज्ञेयः । तेन रूपिणा प्रष्टुर्मनोऽभिप्रायं वदेत् । अथ यदि केनापि संबंधेन प्रकृतिप्रभृतीनां स रूपी स्वगृहे नो भवेत्तदा किं कर्तव्यमित्यत-आह । पश्येत्तस्मिन्रूपिणि कति बिंदवः संति युग्मकेवलमिश्रि-तत्त्वेन यावंतो बिंदवःस्युस्तावंत एव तस्माद्गृहादग्रतःप्रत्येकगृहे यथा क्रमेणैकैकं बिंदुं दापयेत् । एवं यस्मिन् रूपिणि उपरि निरवशेषो बिंदुर्भवेत्तस्मिन्नेव रूपिणि गृहे वा प्रष्टुर्मनोऽभिप्रायो ज्ञेयः

---

[1] प्रकृतिक्रममार्गेणेति पाठः ।

अत्र यथाक्रममेकादिषोडशपर्य्यंतं युक्तं षोडशगृहादेकगृहपर्य्यंतेषु गणना ज्ञातव्या निर्वलरूपिणो विंदुप्रचालनार्थम्। इति पूर्वोक्तग्रंथस्य संमतं समाप्तम्।

अथ यदि पंचदशगृहाद्बिंदुर्न दक्षिणांगे व्रजेत्। तथा नो वामांगे व्रजेत्। यथा पंचदशगृहे सौम्यरूपी ☰ तदा सौम्यरूपिणि एव तथा पंचदश १५ गृहे च प्रष्टुर्मनोऽभिप्रायो वक्तव्यः। अथवा त्रयोदशगृहे १३ मनोऽभिप्रायः स्यात्। अथवा यत्र द्वितीयस्थले सौम्यस्यान्वादेशः स्यात्तत्र गृहे रूपिणि च प्रष्टुर्मनोऽभिप्रायो ज्ञातव्य इति। यद्यादिस्थले बहुस्थाने सौम्यस्यान्वादेशः स्यात्तदा तेषां मध्ये यः प्रकृतिप्रभृतिसाक्षीभूतैर्बलिष्ठो भवेत्तस्मिन्नेव सौम्यरूपिणि गृहे च प्रष्टुर्मनोऽभिप्रायो ज्ञेयः। यस्य साक्षीभूता बलिष्ठाः स्युस्तस्मिन्नेव रूपिणि गृहे च मनोऽभिप्रायो ज्ञेयः।अत्र केऽपि रमलाचार्या विशेषं वदंति। यदि तुलारमलगृहे १५ सौम्यरूपी पतितः स्यात्तदा तद्रमलं संपूर्णफलैर्वैध्यरूपं ज्ञेयम्। तदा स्वल्पाज्ञां कारयेत्। एकार्द्धवार्ता मनोऽभिप्रायस्य वक्तव्या। अथ केचिद्वदंति यदि तुलागृहे १५ शीतांशुः ⁝ पतितः स्यात्तदास्यापि सौम्यरूपिवत्फलं वक्तव्यम्। कस्मात्। अस्य बिंदवः प्रसृतरूपाः संतीति वचनात्। अत्र किंचिद्विशेष उच्यते। यदि शीतांशुः ⁝ सौम्यो ☰ वा रमलतुलागृहे १५पतितः स्यात्तदा समीचीनं त्वेवम्। किंच तत्प्रश्नरमलं इनकलावं कर्तव्यम्। एतदिनकिलावकरणं वक्ष्यमाणं वर्त्तते।यथाग्रेऽस्य वृत्तांतं कथयिष्यामि एकविंशतितमाध्याये। अथ केचिद्वदंति पंचदशगृहे १५ पतितशीतांशोर्वह्निवाय्वोरेतौ द्विबिंदू प्रचालनीयौ। केचिद्वदंति शीतांशोर्वह्निभूम्योरेतौ द्विबिंदू ऊर्ध्वाधः प्रचालनीयौ। यत्रावसानं भवेत्तेन रूपिणा प्रष्टुर्मनोऽभिप्रायं वदेत्।

अथ प्रकारांतरेण मनोभिप्रायनिष्कासनार्थं प्रमाणं ग्रंथेषु कथितं वर्त्तते। मनोऽभिप्रायनिष्कासने प्राचीनग्रंथसंमतं त्वेवं वर्त्तते। किंच

यो रूपी रमलस्य तुलागृहे १५ पतितो वर्त्तते । तस्मिन्रूपिणि वर्त्तमानो यो बिंदुर्भवेत्तं विंदुं प्रचालयेत । यथाह। यो बिंदुस्तुलागृहे १५ पतितो वर्त्तते स यदि त्रयोदशगृहे १२ यास्यत्यथवा चतुर्दश १४ गृहे यायात् । यदि त्रयोदशगृहे स बिंदुर्गतः स्यात्तदा ततो नवमगृहे गमिष्यति वा दशमगृहे । यदि नवमगृहे प्राप्नुयात्तदा प्रथमगृहे १ वा द्वितीय २ गृहे गमिष्यति । एवं यदि दशमगृहे स बिंदुर्गतः स्यात्तदा तृतीय ३ गृहं वा चतुर्थ ४ गृहं गमिष्यति । एवं द्विबिंदुप्रचालनं प्रथमगृहाद्विस्तरेऽपि मृत्युभवनपर्य्यंतं कर्तव्यम् । यत्रावधिपर्य्यंतं बिंदुप्रचालनं भवेत्तावदेव पंचदशगृहा १५ द्विबिंदु-प्रचालने सति यदि चतुर्दश १४ गृहे प्राप्नुयात्तदा द्वादशगृहं १२ वा चैकादश ११ गृहं गमिष्यति । यदि चैकादशे प्राप्नुयात्तदा पंचम ५ गृहं वा षष्ठगृहं ६ गमिष्यति । एवं यदि द्वादश १२ गृहे बिंदुर्गतः स्यात्तदा सप्तमगृहं ७ वाष्टम ८ गृहं गमिष्यति । तत्र भूत्वा पुनरपि तस्मादष्टमगृहाद्दीर्घत्वेऽपि बिंदुप्रचालनं कर्तव्यम् । यत्रावधिपर्य्यंतं बिंदुप्रचालनं भवेत्तावदेव । एवं विस्तारिते बिंदु-प्रचालने सति तदा प्रथमगृहात्प्रभृति अष्टम ८ गृहपर्य्यंतं बिंदु-प्रचालनं कर्तव्यम् । तथाष्टमगृहात्प्रभृति दीर्घत्वेन बिन्दौ प्रचालिते सति प्रथमगृहपर्यंतं बिन्दुप्रचालनं कर्तव्यम् । एवं कर्तव्यतया पंचदश १५ गृहाद्बिन्दुद्वये प्रचालिते सति प्रथमगृहादिषूपरि बिंदुः संपूर्णतां याति । तस्मात्संपूर्णस्थानाद्दीर्घत्वे विस्तारे च यत्र बिंदुः संपूर्णतां याति । एवमेतौ द्वौ रूपिणौ ग्राह्यौ तौ च स्वस्मिन् गुणितौ कृत्वा ताभ्यां यो रूपी चोत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत् । यस्मिन्स्थले स्यात्तस्मिन्नेव स्थले सकलं प्रष्टुर्मनोऽभिप्रायं वदेत् । भोऽरमलज्ञ वक्तव्यो मनोऽभिप्रायः अपरं यदि स रूपी प्रश्नरमले कुत्रापि नो भवेत्तदा तस्य रूपिणः प्रकृतिक्रमेण गृहं द्रष्टव्यम् । तस्मिन् गृहे यो रूपी भवेत्स ग्राह्यः । एवं पुनरपि तस्य रूपिणः

संख्यानुक्रमेण गृहं द्रष्टव्यम् । तस्मिन्गृहे यो रूपी स्यात्सोपि ग्राह्यः । एतौ द्वौ रूपिणौ स्वस्मिन्गुणितौ कृत्वाऽऽभ्यां यो रूपी चोत्पन्नो भवेत्तेन रूपिणा प्रष्टुर्मनोऽभिप्रायो वक्तव्यः ।

अथ प्रकारांतरमाह ।

प्रश्नरमलेषु यत्र यस्मिन्रूपिणि द्वौ बिंदू भवतो यथा इमे तदा तस्मिन्रूपिणि अथवा तस्मिन्गृहे प्रष्टुर्मनोऽभिप्रायः स्यात् । नात्र संशयः । अयं रमलस्यैको भेदो वर्त्तते । इति द्विबिन्दुरूपिण्युपरि मनोऽभिप्रायकथनम् ।

अथ किंचिद्विशेष उच्यते ।

केचिद्वदंति रमलस्य तुला १५ गृहे रूपी यश्च पतितस्तस्य रूपिणो वह्निविंदुः प्रष्टुर्ज्ञेयः । तथाऽधस्तो भूमिबिंदुर्मनोऽभिप्रायस्य ज्ञेयः[1] । वह्निबिंदोः प्रष्टाधिपतिः । एवं भूबिंदोर्मनोऽभिप्रायोऽधिपतिः । यदि बिंदुप्रचलनसमये प्रष्टुर्बिंदुर्वामांगे त्रयोदशादिके व्रजेत् तदा प्रष्टा मनोऽभिप्रायस्याज्ञाकारी भवेत् । अत्र मनोऽभिप्रायो बलाधिकः । एवं यदि मनोऽभिप्रायस्य बिंदुप्रचलनसमये दक्षिणांगे वामांगे चतुर्दशादिके व्रजेत् । तदा मनोऽभिप्रायः प्रष्टुराज्ञाकारी भवेत् । बलाधिक्यं भवेत्तत्र प्रष्टुः । अपरमेवमुपरिस्थः प्रष्टुर्बिन्दुः पंचदश १५ गृहाद्यदि दक्षिणांगे व्रजेत्तदा प्रष्टारं बलाधिक्यं दद्यात् । एवमधस्थमनोऽभिप्रायबिंदुः पंचदश १५ गृहाद्यदि वामांगे व्रजेत्तदा मनोऽभिप्राये बलं दद्यात् । एवं प्रष्टुर्मनोभिप्राययोर्मध्ये स्वाधीनं पराधीनं च बलाबलं च ज्ञातव्यमिति । श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ।

अथ प्रकारांतरमाह ।

बिंदुप्रचलनसमये पंचदशगृहा १५ द्विंदौ प्रचालिते यत्र बिंदुः संपूर्णतां याति तं रूपिणं पश्येत् । तस्मिन्रूपिणि वह्निप्रभृतीनां

१ उक्तपंक्तिबलं विचारयेत् ।

मध्ये केषां बिंदवो वर्त्तंते अग्निबिंदुर्वा वायुर्बिंदुर्वा जलबिंदुर्वा भूमिबिंदुः तेषां केवलरूपाणां बिंदूनां वह्न्यादिपरमपदवीष्वष्टासु सोपानांका ग्राह्याः। तांश्च पश्चाद्द्वादशभिर्भजेत् । ताँनेकीकृत्य द्वाभ्यां २ न्यूनाः कर्तव्याः । शेषांकानां प्रथमगृहादिषु विभागः कर्तव्यः यत्र संख्या पूर्णतां याति तस्मिन्नेव रूपिणि गृहे वा प्रष्टुर्मनोऽभिप्रायो ज्ञेयः । यथा प्रकृतिक्रमस्य व्याख्यानं मया पूर्वं कथितं तथैवात्र कर्तव्यम् ।

अथ प्रकारांतरमाह ।

प्रश्नरमलेषु ९ नवम १० दशैकादश ११ द्वादश १२ गृहस्थानां रूपिणां वह्निस्थानाद्युग्मकेवलौ गृहीत्वा रूपिणमेकमुत्पादयेत् । तथा नवमगृहरूपिणो वह्निरूपं वह्निस्थाने स्थापयेत् । दशमगृहरूपिणो वह्निरूपं युग्मं केवलं वा वायुस्थाने स्थापयेत्, एवमेकादशगृहरूपिणो वह्निरूपं जलस्थाने योजयेत् । तथा द्वादशगृहरूपिणो वह्निरूपं भूमिस्थाने स्थापयेत् । एवं नवमादिचतुर्भ्यो रूपिभ्यः एकं रूपिणमुत्पादयेत् । तदनंतरं रूपिणं पश्येत् । अवदहक्रमेण कस्मिन् गृहे तस्य स्थितिरस्ति । प्रश्नरमलस्य तस्माद्गृहादेव प्रष्टुर्मनोऽभिप्रायो वक्तव्यः । अत्र प्राचीनरमलाचार्या वदंति । स रूपी प्रश्नरमलेषु स्यान्न स्यात् उभयथा कार्यसिद्धिः नात्र संदेहः । गृहादेव प्रयोजनं न तु रूपिणः । गृहज्ञानार्थं रूपिणामुत्पादनं कृतं मया । तद्यथोदाहरणम् यथा नवमादिरूपिभ्यस्तीक्ष्णांशुरुत्पन्नः ⁘ अवदहक्रमे अस्य स्थितिर्दशम १० गृहेऽस्ति । तदा मनोऽभिप्रायो मूकप्रश्नः प्रश्नरमलस्य दशमगृहे वर्त्तते। अपरमयं ⁘ रूपी प्रश्नरमलस्य दशमगृहे स्यान्न स्यात् । दशमगृहादेव मनोऽभिप्रायं वदेत् । न तु रूपिणः प्रयोजनम् । अवदहक्रमेण गृहज्ञानार्थं रूपिणामुत्पादनं कृतं मया ।

अथ प्रकारांतरमाह ।

प्रश्नरमलेषु प्रथमगृह १ रूपिणो युग्मकेवलमिश्रिताबिंदुभ्यः प्रष्टुर्मनोऽभिप्रायो वक्तव्यः । यथोदाहरणे प्रश्नरमलस्य प्रथमगृहे १ दत्याचिंतः ⁘ स्थितो वर्त्तते अस्मिन्दैत्याचिंतरूपिणि पंच ५ बिंदवस्तिष्ठंति । तदा प्रश्नरमलस्य पंचमगृहरूपिभ्यां मनोऽभिप्रायो वक्तव्यः । यदि प्रष्टा नो मन्येत तदा प्रश्नरमलस्य पंचमगृहरूपिणं ५ प्रथमगृह १ रूपिणा गुणयेत् । ताभ्यां यो रूपी चोत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत् । स रूपी यस्मिन् गृहे स्यात्तेनैव गृहेण प्रष्टुर्मनोऽभिप्रायो वक्तव्यो रूपिणा गृहेण वा ।

अथ प्रकारांतरमाह ।

अस्य नाम "जमीर, अनासिर" इति कथयंति रमलज्ञास्तदाह प्रश्नरमलस्य प्रथमगृहात्प्रभति पंचदश १५ गृहपर्यंतेषु युग्मकं विहाय केवलबिंदूनां समूहः कार्यः । यावंत्यस्संख्यास्तावंत एव विंशोत्तरशते १२० पातयेत् । शेषोपरि विचारांशः कर्त्तव्यः तदाह । यदि प्रश्नरमलस्य प्रथमगृहरूपी पंचदशगृहरूपिवद् १५ युग्मकेवलरूपैः समबिंदूनां भवति तदा शेषांके द्वादश १२-भिर्भजेत् एवं यदि प्रश्नरमलस्य प्रथमगृहरूपी विषमबिंदूनां भवेत् तदा शेषांकैर्नव ९ भिर्भजेत् । एवं द्वादशभिर्नवभि १२, ९ र्वा भक्ते यच्छेषं तिष्ठेत्तेषामंकानां प्रश्नरमलस्य प्रथमगृहादिषु विभागः कर्तव्यः । यत्र यस्मिन्रूपिणि संख्या पूर्णतां याति तैनेव रूपिणा गृहेण वा प्रष्टुर्मनोऽभिप्रायमूकप्रश्नो वक्तव्य इति नात्र संदेहः । प्रश्नसमये कदापि विषमबिंदूनां रूपी पंचदशे १५ रमलस्य तुलागृहे नो पतिष्यति ।

अथैकं शुभकौतुकमुच्यते ।

यदि प्रश्नरमलस्य प्रथम १ गृहप्रभृति पंचदश १५ गृहपर्यंतेषु युग्मं विहाय केवलबिंदूनां समूहं कृत्वा विंशोत्तरशते १२०

पातयित्वा शेषे यावंत्यः संख्याः स्युस्तावन्त्य एव प्रश्नरमलस्य प्रथमगृहप्रभृति पंचदश १५ गृहपर्य्यंतेषु युग्मकेवलमिश्रितानां बिंदूनां संख्याः स्युर्नात्र संदेहः । तद्यथोक्तोदाहरणे द्रष्टव्यम् । अत्र प्रथमगृहात्पंचदशगृहपर्य्यंतेषु केवलबिंदुसंख्या अष्टाविंशति-२८ परिमिता अष्टाविंशतिके २८ विंशोत्तरशतात् १२० न्यूने कृते शेषं द्विनवति ९२ परिमितं भवेत् । अत्र प्रथमरूपिणो विषम-बिंदुमयत्वान्नवभि ९ र्भक्ते शेषम् २ । एवं द्वितीय २ गृहे प्रष्टुर्म-नोऽभिप्रायो ज्ञातव्य इति । अपरं शुभकौतुके तु केवलबिंद्वष्टावि-शतिसंख्याया २८ विंशोत्तरशतात् १२० न्यूनीकृते शेषांकाः ९२ द्विनवतिपरिमिताः । अत्रोदाहरणे प्रथमगृहात्प्रभृति पंचदश १५ गृह-पर्य्यंतेषु युग्मकेवलमिश्रितबिंदूनां संख्या द्विनवति ९२ परिमिता एवं तिष्ठतीति द्रष्टव्यम् । एवं सर्वत्रैव प्रश्नसमये केवलबिंदूपरि-संपूर्णरमलस्य बिंदुसंख्या ज्ञातव्या परंतु षोडशगृहरूपिणा विना ।

अथ प्रकारांतरमाह ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| १२ | | ११ | | १० | | ९ | |
| १४ | | | | | | १३ | |
| | | १६ | | १५ | | | |

प्रश्नरमलस्य प्रथमगृहरूपिणो व-ह्निर्ग्राह्यः । तथा द्वितीयगृहरूपिणो वायुर्ग्राह्यः । एवं तृतीयगृहरूपिणो जलरूपो ग्राह्यः । तथा चतुर्थगृहरू-पिणो भूमिरूपो ग्राह्यः । युग्मकेवलो वा भवेत् । एवं प्रथमादिचतुर्भ्यो रूपिभ्यो वह्नयादिचतुर उत्थाप्य एकं रूपिणं कारयेत् । अयं रूपी प्रश्नरमलेषु यत्र कुत्रापि स्यात्तदा तेन रूपिणा गृहेण च प्रष्टुर्मनोऽ-भिप्रायो वक्तव्य इति । यद्वेनं रूपिणं प्रश्नरमलस्य पंचमगृहरूपिणा गुणयेत् ताभ्यां यो रूपी चोत्पन्नो भवेत्तेन रूपिणा प्रष्टुर्मनोऽभि-प्रायस्य सिद्धत्वमसिद्धत्वं च वक्तव्यम् । रूपिणां शुभाशुभत्वं

निर्गमप्रवेशिस्थिरद्विस्वभावरूपैः सिद्धत्वमसिद्धत्वं च ज्ञातव्यमिति। एवं प्रश्नरमलस्य पंचमगृहरूपिणो भूमिरूपो ग्राह्यः। तथा षष्ठगृहरूपिणो जलरूपो ग्राह्यः। तथा सप्तमगृहरूपिणो वायुरूपो ग्राह्यः। तथाष्टमगृहरूपिणोऽग्निरूपो ग्राह्यः । एतान् गृहीत्वा रूपिणं कारयेत् तेनापि रूपिणा मनोऽभिप्रायो वक्तव्यः। तं रूपिणं प्रश्नरमलस्य प्रथमगृहरूपिणा गुणयेत् । आभ्यां यो रूपी चोत्पन्नो भवेत्तेन रूपिणापि मनोऽभिप्रायस्य सिद्धत्वमासिद्धत्वं च ज्ञातव्यं रूपिणां शुभत्वाशुभत्वनिर्गमादिरूपैः । अथास्य प्रकारस्य नाम "सलीब" इति। तथा सुलभ इति कथयंति रमलज्ञाः ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य प्रथमगृहरूपी यत्रान्वादेशरूपः स्यात्तेनैव गृहेण रूपिणा च प्रष्टुर्मनोभिप्रायो वक्तव्यः। अपरं प्राचीनग्रंथेप्युक्तम्। अस्मिन्नेव प्रकारोपरि सर्वे रमलज्ञाः प्रमाणं कुर्वंति यद्यन्वादेशा बहवःसन्ति तदा तेषां मध्ये योतिबलवान् तेन रूपिणा ग्रहेण च प्रष्टुर्मनोभिप्रायं मूकप्रश्नं च वदेत्। अपरं केचिद्रमलज्ञा वदंति। बहुष्वन्वादेशेषु वान्तस्थेनान्वादेशेन मनोऽभिप्रायं वदेत्। पारशीवचने चान्वादेशस्य "तकरार" इति संज्ञा । अथात्र रमलाचार्या वदंति। प्रश्नरमलेषु स्वगृहस्थो यो रूपी तेन रूपिणा गृहेण च प्रष्टुर्मनोऽभिप्रायं वदेत् । परन्तु यावत्प्रथमगृहरूपिणां प्रथमान्वादेशो यत्र भवेन्न तदा तेन मनोऽभिप्रायं वदेत् । यदि प्रथमगृहरूपिणो यत्र कुत्राप्यन्वादेशः स्यात्तदा तेन चान्वादेशेनावश्यकेन मनोभिप्रायं वदेत्। संतु यथा क्षीराभावे जलं पिबेत्। एतद्विचारं प्रकृतिक्रमोपर्य्यावश्यकत्वेन विचारयेत् ।

अथ प्रकारांतरमाह ।

अस्य प्रकारस्य नाम "जमीर, औताद" इति कथयंति रमलज्ञाः तदाह। प्रश्नरमलस्य प्रथमगृह १ रूपिणां चतुर्थगृह ४

रूपिणं गुणयेत् । एवं सप्तमगृहरूपिणा दशमगृहरूपिणं गुणयेत् । एवं प्रथमचतुर्थाभ्यां तथा सप्तमदशमाभ्यां एकं च निष्कासयेत् । एतौ द्वौ रूपिणौ स्वस्मिन् गुणितौ कृत्वा ताभ्यां यो रूपी चोत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत् । यत्र कुत्रापि स्यात्तेन गृहेण रूपिणा च प्रष्टुर्मनोऽभिप्रायं वदेत् । यदि प्रश्नरमलेषु नो पतितः स्यात्तदा रूपिणैव वक्तव्यमिति ।

अथात्र रमलाचार्या वदंति ।

प्रश्नरमलस्य प्रथमगृहसप्तमगृहरूपिभ्यामेकं रूपिणं कारयेत् तथा चतुर्थगृह ४ दशम १० गृहरूपिभ्यामेकं रूपिणं कारयेत् । एवं चतुर्भ्यो रूपिभ्यो द्वौ रूपिणावुत्पाद्य चैतौ द्वौ स्वस्मिन् गुणितौ कृत्वा आभ्यां यो रूपी चोत्पन्नो भवेत्तं प्रश्नरमलेषु पश्येत् । यत्र कुत्रापि पतितः स्यात्तेनैव गृहेण रूपिणा च प्रष्टुर्मनोऽभिप्रायं वदेत् ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य प्रथमगृहात्प्रभृति पंचदश १५ गृहपर्यंतेषु युग्मकेवलैर्मिश्रिताः संपूर्णबिंदवो गणनीयाः । सर्वबिन्दूनां समूहं कृत्वा द्वादशभि १२ र्भजेत् । शेषांकानां प्रथमगृहादिषु विभागं कारयेत् । यत्र यस्मिन् रूपिणि संख्या पूर्णतां याति.तेनैव रूपिणा गृहेण च प्रष्टुर्मनोऽभिप्रायं वदेत् ।

अथ प्रकारांतरेणाह ।

प्रश्नरमलस्य प्रथमगृहे यो रूपी पतितः स्यात्तदाअवजदहक्रमे तस्मात् रूपिणा सप्तमरूपिणा मनोऽभिप्रायं वदेत् । अथवा संख्याक्रमे तस्माद्रूपिणः सप्तमरूपिणा प्रष्टुर्मनोऽभिप्रायं वदेत् । एवं प्राचीनग्रंथेऽपि कथितं वर्त्तते ।

अथ प्रकारांतरमाह ।

अस्य प्रकारस्य नाम "जमीरतसीर" इति कथयांति रमलज्ञाः ।

उदाहरणम्। प्रश्नरमलेषु प्रथमं गृहरूपिणं पश्येत्। प्रकृतिक्रमे तस्य रूपिणः कस्मिन् गृहे स्थानं वर्त्तते। तदा तस्मिन्गृहे रूपिणं पश्येत्। तथात्रापि तस्यापि रूपिणः प्रकृतिक्रमे गृहं दृष्ट्वा प्रश्नरमलस्य तस्मिन्नेव गृहे रूपिणं पश्येत्। एवं तावत्कर्तव्यं यावद्रूपिणं स्वगृहस्थं प्रापयेत् प्रकृतिक्रमेण यत्रैव स्वगृहस्य रूपिणं प्राप्नुयात्तत्रैव रूपिणि गृहे च प्रष्टुर्मनोऽभिप्रायो ज्ञेयः। एवं कर्त्तव्यतया मनोऽभिप्रायसिद्धिः। अस्या अवधिकथनार्थं संख्याक्रमेण संख्यां वदेत्। तथा वर्णक्रमेण मनोऽभिप्रायस्य वर्णं वदेत्। पुनस्तथा खेटक्रमेण दिनरात्रिविभागेन मनोऽभिप्रायसिद्धौ संख्यां वदेत्। एवं कर्त्तव्यतया प्रश्नस्य सांगोपांगं वक्तव्यम्। यद्यत्सांगोपांगं पूर्वोक्तं मया रूपिणां गृहाणां च शून्यं चालने कथितम्। अथ केचिद्रमलज्ञा वदंति। प्रश्नरमलेषु प्रथमगृहरूपिणः प्रकृत्यैव प्रष्टुर्मनोऽभिप्रायो वक्तव्यः स यथा। यदि प्रथमगृहरूपिनिर्गमो भवेत्तदा कुत्रापि गमनस्याभिप्रायो वर्त्तते। अपरं यदि प्रवेशी भवेत्तदा कस्यचिद्वस्तुनः सिद्धकरणस्याभिप्रायो वर्त्तते।यद्वस्तु प्रष्टुर्दूरे तिष्ठति। अथवा केनापि सार्द्धं संमेलनस्याभिप्रायो वर्त्तते। एवं यदि स्थिरो भवेत्तदा चित्तोद्विग्नतारूपो मनोऽभिप्रायो वर्त्तते भोः प्रष्टस्तव मनसि म्लानता वर्त्तते केनापि वस्तुना यदि द्विस्वभावो भवेत्तदा घटिकांघटिकां प्रति प्रष्टावस्थान्तरं व्रजेत्। अपरं प्रष्टुः सुखदुःखादिकं प्रथमगृहरूपिणोऽन्वादेशरूपेण वदेत्। उक्तस्य पुनरुक्तिरन्वादेशः।

अथ प्रकारांतरमाह।

प्रश्नरमलस्य प्रथमगृहात्प्रभृति षोडशगृहपर्यंतेषु रूपिणः पश्येत्प्राज्ञः तेषु कति कतिरूपिणस्तुलागुरुवरहिताः संति। कोऽर्थः विपर्य्ययेण स्थापिता अपि ये रूपांतरं नो व्रजेयुः पुनर्यथा इमे [figures] क्रमे व्युत्क्रमे च सदैकरूपा एव। इमे रूपिणः प्रश्नरमलेषु षोडशगृहपर्य्यन्तेषु प्रकर्षान्वादेशैर्यावंतः पतंति सर्वेषां

तेषां युग्मकेवलान्वह्निबिंदून् गृह्णीयात् । एवं तुलागुरुवर्हितानां रूपिणां युग्मकेवलमिश्रितं वह्निबिंदूनां समूहं कृत्वा द्वादशभिर्भजेत् १२ शेषांकान् प्रश्नरमलस्य प्रथमगृहादिषु दापयेत्। यत्र यस्मिन् रूपिणि संख्या पूर्णतां याति तस्मिन्नेव रूपिणि गृहे च प्रष्टुर्मनोऽभिप्रायो ज्ञेयो नात्र संदेहः ।

अथ प्रष्टा स्वार्थे पृच्छति वापरार्थमिति तज्ज्ञानमाह ।

प्रश्नरमलस्य प्रथमगृहरूपिणं त्रयोश १३ गहरूपिणा गुणयेत्। आभ्यां य उत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत्। यदि स रूपी प्रश्नरमलेषु यत्र कुत्रापि प्रत्यक्षो भवेत् तदा प्रष्टा स्वार्थं पृच्छति। यदि प्रश्नरमलेषु कुत्रापि न स्यात्तदा प्रष्टा परार्थं पृच्छति । अत्र केचिद्रमलज्ञा वदंति गुप्तत्वं रूपिणि याते सति प्रष्टा प्रेषितार्थं पृच्छति। अपरं तेनैव रूपिणा प्रष्टुर्मनोऽभिप्रायं कथयेत्।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य प्रथमादिचतुर्णां मातृरूपिणां युग्मकेवलमिश्रितानां बिंदूनां तत्त्वगणनया पृथक्पृथक् संख्यासमूहः कर्त्तव्यः तद्यथा । तत्त्वगणनया वह्नेरेकः १ वायो द्वौं २ जलस्य त्रयः ३ पृथिव्याश्चत्वारः ४ एवं मातृरूपिणां युग्मकेवलमिश्रितानां वह्निबिंदूनां संख्यासमूहं कृत्वा पृथक् स्थापयेत् । एवं चतुर्णां युग्मकेवलमिश्रितानां वायुबिंदूनां संख्यासमूहं कृत्त्वा पृथक् स्थापयेत्। तथा युग्मकेवलमिश्रितानां जलबिंदूनां संख्यासमूहं कृत्वा पृथक् स्थापयेत् तद्वत् पृथ्वीबिंदूनां युग्मकेवलमिश्रितानां संख्यासमूहं कृत्वा पृथक् स्थापयेत् । एवं वह्न्यादिचतुर्णां पृथक् पृथक् संख्यासमूहं कृत्वा ऽग्निसंख्यासमूहे द्वाभ्यां भजेत् २ शेषं ग्राह्यम् ॥ तथा वायुसंख्यासमूहैः सप्तभिर्भजेत् ७ शेषांको ग्राह्यः । एवं जलसंख्यासमूहे चतुर्भिर्भजेदत्रापि शेषांको ग्राह्यः ।

तथा पृथ्वीसंख्यासमूहेऽष्टभिर्भजेत् । शेषांकं भिन्नं स्थापयेत् सर्वशेषांकानां योगः कर्त्तव्यः । तस्मिन् शेषाकसंख्यासमूहे द्वि २ न्यूनं कर्तव्यम् । शेषांकान् प्रथमगृहादिषु दद्यात् यत्र यस्मिन्रूपिणि संख्या पूर्णतां याति । तस्मिन्नेव रूपिणि गृहे च प्रष्टुर्मनोऽभिप्रायोऽस्ति । परन्तु प्रथमगृहरूपिणोऽन्वादेशसहितैः फलं वाच्यम् । यद्येवं प्रष्टुर्मनोऽभिप्रायो नो भवेत् ॥ तदा यत्र संख्या पूर्णतां याति तं रूपिणं चतुर्थ-४ गृहरूपिणा गुणयेत् ॥ आभ्यां य उत्पन्नो भवेत्तदा तं रूपिणं प्रश्नरमलेषु पश्येत् । स यत्र स्यात्तेन गृहेण रूपिणां च ध्रुवं प्रष्टुर्मनोऽभिप्रायो वक्तव्य इति । तद्यथोदाहरणे द्रष्टव्य इति रमलपाततनं कृतं मया तस्य मातृरूपिण इमे ⁝ ⁝ ⁝ ⁝ स्थिताः । अत्र तत्त्वगणनया वह्निबिंदूनां संख्यासमूहे ९ द्वाभ्यां २ भक्ते शेषः १ तथा वायुबिंदूनां संख्यासमूहः १० दशपरामितः । अत्र सप्तभिर्भक्ते ७ शेषं ३ एवं जलबिंदूनां संख्यासमूहः १७ अत्र चतुर्भिः ४ भक्ते शेषमेकः १ तथा भूमिबिंदूनां संख्यासमूहं २४ अत्राष्टाभिर्भक्ते ८ शेषं ८ सर्वशेषाणां न्यासः । १, ३, १, ८योगे कृते जातास्त्रयोदशमिताः १३ अत्र द्विन्यूने शेषं ११ एवं चैकादशगृहे रूपिणि च मनोऽभिप्रायो ज्ञेयः । परन्तु प्रथमगृहरूपिणोऽन्वादेशसहितैः फलं वाच्यमित्यत आह । तत्र प्रथमगृहे लोहितः ⁝ तिष्ठति तस्यान्वादेशः सप्तम ७ गृहे षोडश १६ गृहेऽपि वर्त्तते तदैवं वक्तव्यम् । मनोऽभिप्राये काचित्स्त्री वर्त्ततेऽथवा केनापि सार्द्धं संमेलनाभिप्रायोऽपरस्त्रियाः परिणामस्याभिप्रायः । एकादशगृहे ११ तूष्णगुरूपी ⁝ सोऽपि स्त्रीरूपः गृहं तु मनोऽभिप्रायस्य ।

अथ प्रकारांतरमाह ।

एष प्रकारः प्राचीनरमलाचार्यग्रंथात् कथ्यते । यथा । प्रश्नरमलस्य प्रथमादिपंचदशगृहपर्य्यंतानां रूपिणां तत्त्वगणनया पूर्वो-

क्रयुक्त्या केवलमिश्रितानां वह्न्यादिबिंदूनां संख्यासमूहः पृथक् पृथक् कर्तव्यः । तत्राग्निसंख्यासमूहे नवभि ९ र्भक्ते शेषं ग्राह्यम् । तथा वायुसंख्यासमूहे दशभि १० र्भक्ते शेषं ग्राह्यम् तथा जलसंख्यासमूहे चैकादशभि ११ र्भक्ते शेषं ग्राह्यम् तथा भूमिसंख्यासमूहे द्वादशभि १२ र्भक्ते शेषं ग्राह्यम् । एवमेकैक-शेषांके पृथक् २ प्रथमगृहादिषु दत्ते सति यत्र यत्र संख्यासमूहः संपूर्णतां याति तस्यतस्य गृहस्य रूपी ग्राह्यः । केवलवह्निबिंदुना प्राप्तरूपिणैव प्रष्टुर्मनोऽभिप्रायो वक्तव्यः । एवं वायुना च जलेन वा पृथिव्या प्राप्तरूपिणा मनोऽभिप्रायो वक्तव्य इति । तर्ह्येवं प्रष्टुर्मनोऽभिप्रायोऽनुत्पन्नः स्यात्तदा किं कर्त्तव्यमित्यत आह । नवभागशेषांक ९ समं रूपिणं १० दशभाग शेषांकप्राप्तरूपिणा गुणयेत् । आभ्यां यो रूपी चोत्पन्नो भवेत्तं भिन्नं स्थापयेत् । एवं चैकादश-भागे ११ शेषांकसमं रूपिणं द्वादश १२ भागशेषांकप्राप्तरूपिणा गुणयेत् । आभ्यां यो रूपी चोत्पन्नो भवेत्तं भिन्नं स्थापयेत् । एवं चतुर्भ्यो रूपिभ्यो द्वौ रूपिणावुत्पाद्य तौ च स्वस्मिन्गुणितौ कृत्वा ताभ्यां य उत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत् । यत्र कुत्रापि स्यात्तेन गृहेण रूपिणा च मनोऽभिप्रायो ध्रुवं वक्तव्यो नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तस्य प्रकारस्य नाम 'जमीर वतुदलवताद' इति रमलज्ञाः कथ-यंति तदाह । प्रश्नरमलस्य प्रथमगृहरूपिणं त्रयोदशगृहरूपिणा गुणयेत् । तथा चतुर्थगृहरूपिणं चतुर्दश १४ ग्रहरूपिणा गुणयेत् । तथा सप्तम ७ गृहरूपिणं पंचदश १५ गृहरूपिणा गुणयेत् । तथा दशमगृहरूपिणं १० षोडश १६ गृहरूपिणा गुणयेत् । एवं चत्वारो रूपिण उत्पद्यंते । पुनः प्रथमचतुर्थत्रयोदशचतुर्दशभ्यो यौ रूपि-णावुत्पन्नौ जातौ तौ च स्वस्मिन्गुणितौ कृत्वा ताभ्यां चोत्पन्नो भवेत्तं

रूपिणं भिन्नं स्थापयेत्। एवं सप्त ७ दश १० पंचदश १५ षोडश १६ गृहेभ्यो यौ रूपिणावुत्पन्नौ तौ च स्वस्मिन्गुणितौ कृत्वा ताभ्यां य उत्पन्नो भवेत्तं चापि रूपिणं भिन्नं स्थापयेत्। पुनस्तथा भिन्नस्थौ द्वौ रूपिणौ स्वस्मिन्गुणितौ कर्तव्यौताभ्यां य उत्पन्नो भवेत्तं रूपिणं प्रश्न-रमलेषु पश्येत्।यत्र कुत्रापि स्थले पतितः स्यात्तदा तेन रूपिणा गृहे च प्रष्टुर्मनोभिप्रायो वक्तव्यः। यदि स रूपी प्रश्नरमलेषु कुत्रापि न पतितः स्यात्तदाप्रोषितस्य प्रश्नो वर्त्तत इति वक्तव्यः। नात्र संदेहः।

अथ प्रकारांतरमाह।

प्रश्नरमलस्य प्रथमगृहादिचतुर्णां मातृरूपिणः केवलबिंदोरब-जदमतेन संख्यांको ग्राह्यः। अबजदगणनासु वह्नेरेकः १ वायो द्वौ २ जलस्य त्रयः ३ पृथिव्याश्चत्वारः ४ एवं मातृरूपिणां बिंदुसंख्यांकसमूहं कृत्वा द्वादशभि १२ र्भजेत्। शेषां-कान् प्रथमगृहेषु दापयेत्। यत्र यस्मिन् गृहे रूपिणि च संख्या पूर्णतां यायात्तेनैव रूपिणा गृहेण च

| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|
| १२ | | ११ | | १० | | ९ | |
| १४ | | | | | | १३ | |
| | | १६ | | १५ | | | |

प्रष्टुर्मनोऽभिप्रायो वक्तव्यः। परंतु यस्मिन्गृहे संख्या पूर्णतां याति तस्य गृहस्य स्वामी प्रकृतिक्रमेण प्रश्नरमलेषु यस्मिन्गृहे पतितः स्यात्तस्यापि गृहस्य स्वामी यत्र पतितः एतैः सार्द्धं फलं वक्तव्यम्। तद्यथोदाहरणं द्रष्टव्यम्। रमलपातनं कृतं मया तस्य मातृरूपिणि इमे स्थिताः ⁝ ⁝ ⁝ ⁝ तत्राबजदगणनया वाग्मिन एकं १ तथा शीतांशोर्दश १० एवं दैत्यार्चितस्य सप्त ७ आररूपिणोऽष्टौ ८ सर्वेषां न्यासः १, १०, ७, ८, योगे कृते यातं षड्विंशतिपरिमितम्। अत्र द्वादशभि १२ र्भक्ते शेषं द्वयं २ एवं द्वितीयगृहे शीतांशोर्मनोऽ-भिप्रायो वर्त्तते। परंतु प्रकृतिक्रमेण द्वितीयगृहस्य स्वामी तीक्ष्णां-

शुरूपी ⁝ स तु सप्तम ७ गृहे तिष्ठति तस्य तीक्ष्णांशोर्ग्राहकः सप्तम-गृहाधिपतिः सौरिरूपी ⁝ स तु त्रयोदशगृहे तिष्ठति। अत एवोच्यते। भोः प्रष्टस्तव प्रश्नो द्रव्यादीनां वर्त्तते । परंतु प्रवासिनो द्रव्यस्य । तस्य द्रव्यस्य प्राप्तिं कर्तुमिच्छसि त्वं नात्र संदेहः ।

अथ प्रकारांतरमाह ।

अयमपि प्रकारः प्राचीनग्रन्थात्कथितो वर्त्तते । तद्यथा । प्रश्न-रमलस्य प्रथमगृहात्प्रभृति पंचदशगृहपर्यंतेषु सर्वरूपिणां केवल बिंदवो गणनीया एवं केवलबिंदूनां समूहं कृत्वा तं समूहं विंशोत्तरशते १२० पातयेत् । पातितशेषं पृथक्स्थम् । एकस्मिन्स्थले द्वादशभि १२ र्भजेत् । शेषं भिन्नं स्थापयेत् । एवं द्वितीयस्थले नवभि ९ र्भजेत् । शेषांकं भिन्नं स्थापयेत् । उभौ शेषांकौ प्रश्नरमलस्य प्रथमगृहादिषु दापयेत यत्र यत्र संख्या पूर्णतां याति तस्य तस्य गृहस्य रूपिणं गृह्णीयात्। एवं द्विभागशेषांकेन रूपिद्वयं प्राप्तं । तौ च स्वस्मिन्गुणितौ कृत्वा ताभ्यां यो रूपी चोत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत् । यत्र कुत्रापि पतितः स्यात्तेन गृहेण रूपिणा च मनोऽभिप्रायो ध्रुवं वक्तव्यः । तेन रूपिणा अन्वादेशः कृतस्तेन रूपिणो ग्राह्यं गुणाकारं भवति इति सिद्धो मनोऽभिप्रायः यदि प्रश्नरमलेषु कुत्रापि नो पतितस्तदा प्रवासिनां प्रश्नं पृच्छति प्रष्टा । तेन रूपिणैव मनोऽ-भिप्रायो वक्तव्य इति । एष प्रकारो बहुरमलाचार्य्यैः परीक्षितो वर्त्तते । अपरस्मिन्प्रकारोपरि सर्वेषां विश्वासो वर्त्तते । अनेन प्रकारेण सद्यः प्रश्नस्तथ्यतां याति । एतद्रहस्यतरं कस्मै चिन्न-दातव्यं सर्वे रमलज्ञा अस्मिन्नेव प्रकारोपरि मानोऽभिप्रायमूकप्रश्नं कुर्वन्ति नात्र संदेहः । श्रीपरमेश्वरः सम्यक्प्रकारेण जानातीति ।

इति श्रीभयभञ्जनशर्मकृतौ रमलरहस्ये सारसंग्रहे प्रष्टुर्मनोभिप्रायमूकप्रश्नकथनं नाम विंश-तितमोऽध्यायः ॥ २० ॥

## अथैकविंशतितमोऽध्यायः ।

अस्मिन्नेकविंशतितमाध्याये प्रत्येकदेशीयानां रमलाचार्याणां संमतेन प्रश्नकथनोपायस्य व्याख्यानं वर्त्तते । तत्र लौकिक जनानां प्रश्नो द्विविधः । एकः संधिरूपो द्वितीयो भिन्नः । तद्यथा । संधेरुदाहरणम् । यानि वस्तूनि स्वहस्ते समायांति । तथा मित्रादीनां संमेलनम् । अथ प्रवासिन आगमन वांछाकरणं तत्रापि संमेलनार्थो वर्त्तते ।

### अथ भिन्नत्वमाह ।

यथा प्रवासस्थानाद्भिन्नो भवेत्सप्रवासी । तथा रोगिणो रोग-शांतित्वं तत्रापि भिन्नार्थो वर्त्तते रोगान्मुच्यते रोगी एवं बन्धगतपुरुषस्य बंधमोक्षोऽपि भिन्नार्थस्तथा । गुर्विणी प्रसवेपि भिन्नार्थः । यत उदरस्थानाच्छिशुर्भिन्नो भवेत् । एवं वाक्चातु-र्याल्लोकेषु द्विविधः प्रश्नः संधिरूपो भिन्नरूपश्च वक्तव्य इति । अथ प्रत्येकदेशीयरमलाचार्याणां संमतेन द्विविधप्रश्नस्य चाज्ञाकरणोपायमाह । तत्रादौ बर्बरदेशीयानां प्रकारमाह । बर्बर-देशीया रमलाचार्या रूपिणां स्वभावोपरि प्रश्नं कुर्वंति । तत्र रू-पिणां स्वभावा निर्गमप्रवेशिस्थिरद्विमूर्तिपर्य्यंताः । यदि केनापि प्रश्नः कृतः संमेलनस्य तदा रमलज्ञः प्रथमादिषोडशपर्य्यंतं प्रश्नरमलं संपूर्णं पश्येत् । यदि प्रश्नरमलेषु बहुरूपिणः प्रवेशिनः पतिताः स्युस्तथा लिशानुल अमररूपी चापि प्रवेशी स्यात्तदा वक्तव्यं प्रष्टारं प्रति भोः प्रष्टस्तव संधिसंबंधरूपी प्रश्नः सिद्धिं प्रया-स्यति । शुभैः प्रवेशिभिः सुगममार्गेण सिद्धिं प्रयास्यति । अशुभैः काठिन्येन प्रश्नः सिद्धिं प्रयास्यति । एवं यदि प्रश्नरमलेषु बहुनि-र्गमा रूपिणः पतिताः स्युस्तथा लिशानुल अमररूपी चापि नि-र्गमः स्यात्तदा पूर्वोक्तस्य प्रतीपं फलं वाच्यम् । यथा भोः प्रष्ट स्तव संधिरूपः प्रश्नः सिद्धिं न प्रयास्यति । अपरं कथितं

वर्त्तते । किंच । यदि प्रश्नरमलेषु प्रवेशिनो बहुरूपिणः पतितास्तथा लिशानुलअमररूपी यदि निर्गमः स्यात्तदापि प्रतीपमेव फलं वाच्यम् संधिसंबंधिरूपः प्रश्नः सिद्धिं नो प्रयाति । अथ यदि भिन्नतायाः प्रश्नः केनापि कृतस्तदा रमलज्ञः संपूर्णप्रश्नरमलं पश्येत् । यदि प्रश्नरमलेषु निर्गमः बहुरूपिणः पतितास्तथा लिशानुलअमररूपी निर्गमस्तदा वक्तव्यं प्रष्टारं प्रति ॥ भोः प्रष्टस्तव भिन्नत्वसंबंधिरूपः प्रश्नः सिद्धिं प्रयास्यति । शुभैर्निर्गमैः शुभमार्गेण । अशुभैः काठिन्येन सिद्धिं प्रयास्यति । एवं यदि प्रश्नरमलेषु प्रवेशिनो बहुरूपिणः पतिताः स्युस्तथा लिशानुल अमररूपी चापि प्रवेशी स्यात्तदा पूर्वोक्तस्य प्रतीपं फलं वाच्यम्। यथा भोः प्रष्टस्तव भिन्नत्वरूपः प्रश्नः सिद्धिं नो प्रयास्यति । अपरं यदि प्रश्नरमलेषु निर्गमा बहुरूपिणः पतितास्तथा लिशानुलअमररूपी तु प्रवेशी स्यात् तदापि प्रतीपमेव फलं वाच्यम् यथा भोः प्रष्टस्तव भिन्नत्वरूपः प्रश्नः सिद्धिं नो प्रयास्यति ॥ अथ यदि प्रश्नरमलेषु स्थिरा बहुरूपिणः पतिताः स्युस्तथा लिशानुलअमररूपी चापि यदि स्थिरः स्यात्तदा द्विस्वभावप्रश्ने संधिरूपे भिन्नरूपे च स्थिरत्वं फलं वक्तव्यम् । शुभैः स्थिरैः रूपिभिः परिणामे कार्यसिद्धिः स्यात् । अशुभैस्तु नो कार्यसिद्धिः स्यात् । अत्र स्थिरेषु रूपिषु द्विविधप्रश्नयोः संधिरूपभिन्नरूपयोराज्ञाकरणोपायो वर्त्तते एवं यदि प्रश्नरमलेषु द्विस्वभावरूपिणो बहवः पतिताः स्युस्तथा लिशानुलअमररूपी चापि द्विस्वभावः स्यात् तदा कार्यं सिद्धं स्यात्तथा पुनरपि हस्ताद्व्रजेत । यदि शुभरूपिणः स्युस्तथा स्वामित्वेन हस्तात्कार्य्यं व्रजेत्।यद्यशुभाः स्युस्तदाऽस्वामित्वेन कार्यं हस्ताद्व्रजेत् अथ द्विविधप्रश्नयोरुपरि विचारो वर्त्तते । अत एवात्र द्विविधप्रश्नस्यापि विचारः कर्तव्यः उभयविधप्रश्ने एकमेवफलं वाच्यम् । अथ बर्बरदेशीयानां मतेन लिशानुलअ-

मररूपिण उत्पत्तिमाह । प्रश्नरमलस्य चतुर्दशगृह १४ रूपि-णं मनोऽभिप्रायरूपिणा गुणयेत् । ताभ्यामुत्पन्नो यो भवेत्तस्य रूपि-णो नाम 'लिशानुलअमर' इति कथयंति बर्बरदेशीयाः ।

अथापरग्रंथसंमतेन लिशानुलअमर रूपिण उत्पत्तिमाह ।

स द्विविध एको 'लिशानुलअमररूपी' द्वितीयश्च 'लिशानुल अमरसानि, तत्रादौ प्रथमं लिशानुलअमरमाह । प्रश्नरमलस्य प्रथमगृहरूपिणा मनोऽभिप्रायरूपिणं गुणयेत । ताभ्यामुत्पन्नो यो भवेत्तस्य नाम 'प्रथमलिशानुलअमर' इति कथयंति रमलज्ञाः। अथ प्रश्नरमलस्य षोडशगृहस्थ १६ रूपिणो नाम 'लिशानुल-अमरसानि' इति कथयंति । यः प्रथमपंचदशाभ्यां १५ चोत्पद्यते। अपरं बर्बरदेशीया रमलाचार्यास्तावत्पर्यंतं किंचित् प्रश्नं नो वदंति यावत्प्रथमलिशानुलअमररूपी तथा द्वितीयो लिशानुलअमरसानि रूपी बाह्ये नायाति । अत एव रूपिणा शुभाशुभत्वेन तथा निर्गम-प्रवेशिस्थिरद्विस्वभावैश्च सर्वप्रश्नस्य सिद्धासिद्धत्वं प्रथमलिशानुल-अमररूपिणा वक्तव्यमिति । यादृशो रूपी तादृशं फलं वक्तव्यं प्राग्वत् ।

अपरं षोडशग्रहस्थेन लिशानुलअमरसानि नाम्ना सर्वप्रश्नानां परिणामस्य वृत्तांतो वक्तव्यः॥श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति।

अथ पश्चिमदेशीयानां प्रकारमाह ।

रूपिणां शुभाशुभत्वेन तथा प्रवेशिनिर्गमस्थिरद्विस्वभावैश्च सर्वप्रश्नकरणं समीचीनं परंत्विमे प्रकारांतरेण वदंति । एतेषां प्रश्न-करणं मूलप्रश्नरमलस्य प्रथमगृहप्रभृतिद्वादशगृहपर्य्यंतमेव । तदाह । प्रत्येकगृहे शुभरूपी यद्यागतः स्यात्तदा भाग्योदयस्याज्ञां कारयेत्। एवं यदि वा अशुभरूपी पतितः स्यात्तदा भाग्यहीनस्य निषिद्ध-फलस्याज्ञां कारयेत् । एवं यदि प्रवेशिरूपी पतितः स्यात्तदा संधि-रूपं कार्यसिद्धेराज्ञां कारयेत्। अस्मिन्स्वरूपे चागमनरूपां कार्यसि-

द्धिं प्राप्नोति । एवं यदि निर्गमरूपी पतितः स्यात्तदा तादृशीं कार्य-सिद्धिं प्रयाति भिन्नत्वसंबंधप्रश्नः । एवं यदि स्थिररूपी पतितः स्यात्तदा द्विविधप्रश्ने संधिरूपे भिन्नत्वरूपे च स्थिरत्वं वक्तव्यम् । एवं यदि द्विस्वभावरूपी पतितः स्यात्तदा द्विविधप्रश्नेऽपि फलं वक्त-व्यम् । किंच । आदौ मनोऽभिलषितकार्य्यं सिद्धिं प्रयाति पश्चाद्ध-स्ताद्गमनं भवेत् । शुभरूपिणि सुगममार्गेण स्वामित्वेनैव कार्य्य-सिद्धिः । अशुभे तु काठिन्येनास्वामित्वेनैव कार्य्यसिद्धिः स्यात् । एवं द्विविधप्रश्ने संधिरूपे भिन्नरूपे च प्रश्नसदृशं फलं वाच्यम् ।

अथैषां व्याख्यानं व्यक्तोदाहरणेन क्रियते ।

केनापि पुरुषेण प्रश्नः कृतः संधिरूपः । यथा । कश्चित्पुरुषो आशां स्थापयति । अथवा संमिलितुमिच्छति । अथवा द्रव्यादिकं स्वहस्तगतं कर्तुमिच्छति यथा । तथा आगमनरूपाणि यानि वस्तू-नि संति इत्यादिषु स्थानेषु संधिरूपः प्रश्नो ज्ञेयः । तदा रमलज्ञः प्रश्नरमलं पश्येत् । तत्प्रष्टुः प्रश्नः कस्माद्गृहाद्वर्त्तते । अपरं तस्मिन् गृहे को रूपी पतितोऽस्ति तं रूपिणं पश्येत् । यदि प्रवेशी स्यात्तदा तत्संधिरूपः प्रश्नः सिद्धिं प्रयाति । यदि निर्गमः पतितः स्यात्तदा तत्संधिरूपः प्रश्नः सिद्धिं नो प्रयाति । यदि स्थिरः पतितः स्यात्त-दा संधिरूपः प्रश्नः स्थिरत्वेन पतेत् । यदि द्विस्वभावरूपी पतितः स्यात्तदा तत्संधिरूपः प्रश्नः प्रयाति पुनरपि हस्ताद्व्रजेत् । सर्वत्रैव यदि शुभरूपी भवेत्तदा स्वामित्वेन स्वेच्छया कार्य्यसिद्धिः । एव-मशुभेऽस्वामित्वेन अनिच्छया च कार्य्यसिद्धिः स्यात् । अथ यदि केनापि प्रश्नः कृतो भिन्नत्वरूपः । यथा प्रवासकरणस्याथवा रोगिणो रोगशांतिकस्य प्रश्नः । अथवा बंधगतपुरुषस्य मोक्षप्रश्नो वा । यानि वस्तूनि गमनरूपाणि भवंति । इत्यादिषु स्थानेषु भिन्न-त्वप्रश्नो ज्ञेयः । भिन्नत्वसंबंध इत्यर्थः । तदा तद्गृहं द्रष्टव्यं यस्मा-द्गृहात्प्रश्नो वर्त्तते । यदि तस्मिन्गृहे निर्गमरूपी पतितः स्यात्तदा

वक्तव्यं प्रवासो भवेत्। तथा रोगी रोगान्मुच्येत । तथा बंधगत-पुरुषो बंधान्मुच्येत। अपरं यानि वस्तूनि गमनरूपाणि स्युस्तानि सिद्धिं प्रयान्ति। यदि तस्मिन् गृहे प्रवेशरूपी पतितः स्यात्तदा भिन्नरूपाः सर्वे प्रश्नाः सिद्धिं न प्रयान्ति ।यदि च तस्मिन्गृहे स्थिररूपी पतितः स्यात्तदा भिन्नत्वरूपः प्रश्नः स्थिरत्वे पतेत्। यदि तस्मिन्गृहे द्विस्वभावरूपी पतितः स्यात्तदाभिन्नत्वरूपः प्रश्नश्चादौ सिद्धिं प्रयाति पश्चाद्धस्ताद्व्रजेत् । अपरं सर्वरूपिषु शुभेषु सुगम-मार्गेण कार्यसिद्धिः। अशुभेषु काठिन्येन कार्य्यसिद्धिः स्यात्।

अथ किंचिद्विशेष उच्यते।

परं तु प्रश्नकथनस्य संपूर्णविचारं साक्षीभूतगृहोपरि १३, १४, १५, १६, कुर्वंति। एष्विमौ त्रयोदशचतुर्दशौ १३, १४, साक्षी-भूतौ कथितौ। अपरं तेषु पंचदशगृहं १५ धर्मवेत्तुस्तथा तेषु षोड-शगृहं १६ लिशानुलअमरसानीति कथयंति धीराः । अथ यदि प्रश्नः संधिरूपो भवेत्। तदा द्रष्टव्यं यदिमे रूपिणः १३,१४, १५, १६, प्रवेशिनः स्युस्तदा संधिरूपः प्रश्नः सिद्धिं प्रयाति । शुभे रूपिणि सुगममार्गेण कार्य्यसिद्धिः। अशुभे काठिन्येन कार्यसिद्धिः स्यात्। यदि प्रश्नो भिन्नरूपो भवेत्तदा द्रष्टव्यं यदिमे रूपिणः १३, १४, १५, १६, निर्गमाः स्युस्तदा भिन्नरूपः प्रश्नः सिद्धिं प्रयाति। शुभे रूपिणि सुगममार्गेण कार्यसिद्धिः अशुभे काठिन्येन कार्य-सिद्धिः यदिमे रूपिणः १३, १४, १५, १६, स्थिराः स्युस्तदोभय-स्मिन्नपि प्रश्ने स्थिरत्वं वक्तव्यम्। शुभे रूपिणि परिणामे कार्य-सिद्धिः॥ अशुभे कदापि कार्य्यं सिद्धिं नो प्रयाति। पुनर्यदिमे रूपिणः १३, १४, १५, १६, द्विस्वभावाः स्युस्तदा द्विवि-धोऽपि प्रश्नः आदौ सिद्धिं प्रयाति पश्चाद्धस्ताद्व्रजेत्। शुभे रूपिणि स्वामित्वेन कार्यसिद्धिस्तथा हस्ताद्व्रजेत् । अशुभे अस्वा-मित्वेन कार्य्यसिद्धिस्तथा व्रजनं कार्यस्य। यदिमे रूपिणः १३,

१४, १५, १६, केचित्प्रवेशिनः केचिन्निर्गमाः स्युः। एवं प्रवेशिप्रभृतिमिश्रिता यदिमे १३, १४, १५, १६, रूपिणः स्युस्तदा चतुर्दशपंचदशावेतौ द्वौ रूपिणौ पश्येत् । यदिमौ । १४, १५, द्वौ रूपिणौ प्रवेशिनौ भवतस्तदा संधिसंबंधरूपः प्रश्नः सिद्धिं प्रयाति । शुभे रूपिणि सुगममार्गेण कार्य्यसिद्धिः । अशुभे काठिन्येन स्थिरद्विस्वभावयोः पूर्ववत्फलं वक्तव्यम् । अथ यदिमौ १३, १४, प्रवेशिनौ वा निर्गमौ भवतः । तथा १५, १६, प्रवेशिनौ वा निर्गमौ यदि भवतः एवं द्वौ प्रवेशिनौ द्वौ च निर्गमौ यदि भवतस्तदा किंकर्तव्यमित्यत आह तदैषां चतुर्णां १३, १४, १५, १६, केवलबिन्दवो गणनीयाः । एवं वह्निवाय्वोर्बिंदुसमूहेन भिन्नत्वसंबंधप्रश्नो वक्तव्यः । तथा जलपृथिव्योर्बिंदुसमूहेन संधिसंबन्धप्रश्नो वक्तव्यः । यस्य समूहो बहुतरो भवेत्तस्यैवाज्ञां कारयेत् । यथा संधिरूपे प्रश्ने बहुतरेण वह्निवाय्वोर्बिन्दुसमूहेन संधिरूपः प्रश्नः सिद्धिं प्रयाति । एवं बहुतरेण जलपृथिव्योर्बिंदुसमूहेन भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । एवं य अधिकः स एव बलिष्ठः । विपर्य्यये विपर्य्ययः फले वाच्यः । अथ केचिद्वदंति त्रयोदशरूपिणं १३ पंचदशरूपिणा गुणयेत् १५ आभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत् । एवं चतुर्दश १४ रूपिणं षोडश १६ रूपिणां गुणयेत् । आभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत् । एतौ द्वौ रूपिणौ पश्येत् । प्रवेशिभ्यां संधिरूपः प्रश्नः सिद्धिं प्रयाति । एवं निर्गमाभ्यां भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । स्थिराभ्यां द्विविधप्रश्नेऽपिस्थिरत्वं वक्तव्यम् । द्विस्वभावरूपाभ्यां द्विविधोऽपि प्रश्नः सिद्धिं प्रयाति पश्चाद्धस्ताद्व्रजेत् शुभे रूपिणि सुगममार्गेण स्वामित्वेन कार्यसिद्धिः अशुभे काठिन्येनास्वामित्वेन कार्यसिद्धिः स्यात् एवं द्विविधः प्रश्नो विचार्य वक्तव्यः सर्वत्रैव ।

अथ मिसरदेशीयानां रमलाचार्य्याणां प्रकारमाह ।

परंतु रमलज्ञाः प्रश्नकरणस्य संपूर्णविश्वासं मुसल्लसतोपरि कुर्वंति । तदाह यदि पृष्टः प्रश्नः संधिरूपो भवेत्तदा तद्गृहं पश्येत् । यस्माद्गृहात्प्रश्नो वर्त्तते तस्मिन्गृहे को रूपी वर्त्तत इति द्रष्टव्यम् । पुनस्तस्माद्गृहाद्द्वितीयगृहे को रूपी पतितो वर्त्तते इत्यपि द्रष्टव्यम् । स्वद्वितीयरूपिणा प्रश्नरूपिणं गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत् । एवं प्रश्नरूपिणं स्वद्वितीयरूपिणं तथा च ताभ्यां यदुत्पन्नमेतत्त्रयं रूपिणां पश्येत् यदिमे प्रवेशिनः स्युस्तदा सर्वः संधिरूपः प्रश्नः सिद्धिं प्रयाति । एवं यदीमे निर्गमाः स्युस्तदा संधिरूपः प्रश्नः सिद्धिं नो प्रयाति । एवं यदि स्थिराः स्युस्तदा संधिरूपः प्रश्नः स्थिरत्वे पतेत् । यदि ते द्विस्वभावाः स्युस्तदा संधिरूपः प्रश्नः सिद्धिं प्रयाति पुनरपि पश्चाद्धस्ताद्व्रजेत् । अत्र केचिद्वदंति । अर्द्धः प्रश्नः सिद्धिं प्रयाति । अर्द्धस्तु यथास्थितमेव तिष्ठेत् । अपरं सर्वेषु शुभेषु रूपिषु सुगममार्गेण कार्यसिद्धिः अशुभे काठिन्येन सिद्धिः स्यात् अथ यदि प्रश्नो भिन्नरूपो भवेत्तदा तत्पूर्वोक्तं त्रयं रूपिणामत्रापि पश्येत् । यदि ते निर्गमाः स्युस्तदा सर्वो भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति यदि प्रवेशिनः स्युस्तदा नो. यदि स्थिराः स्युस्तदा प्रश्नः स्थिरत्वे पतेत् । एवं यदि ते द्विस्वभावाः स्युस्तदा प्रश्ने द्विविधत्वं वक्तव्यं प्रश्नश्च सिद्धिं प्रयाति । पुनरपि हस्ताद्व्रजेत् । सर्वत्रैव शुभे रूपिणि सुगममार्गेण अशुभे काठिन्येन कार्यसिद्धिः अथ यदि ते रूपिणः प्रवेश्यादिभिर्मिश्रिताः स्युर्यथा एकः प्रवेशी एको निर्गमः एकः स्थिरः एकश्च द्विस्वभावः स्यात् । तदा त्रयाणामेव केवलान् बिंदून् गणयेत् । यदि चेदाग्निवाय्वोर्बिंदवो बहुतराः स्युस्तदा गमनरूपो भिन्नत्वसंबंधप्रश्नः सिद्धिं प्रयाति यदि जलपृथिव्योर्बिंदवो बहुतराः स्युस्तदा आगमरूपः संधिसंबंधप्रश्नः सिद्धिं प्रयाति विपर्य्यये विपर्ययफलं वक्तव्यम् । श्रीपरमेश्वरः सम्यक्प्रकारेण

जानाति । अपरं मुसह्लसाद्रूपं षोडशरूपिणा पृथगेकप्रकरणे चैकवृत्तांतोपरि वक्ष्यमाणे प्रश्नकथनामिश्रिकाध्याये सम्यक्प्रकारेण कथयिष्यामि यदीश्वरीच्छा वर्त्तते ।

अथ हिंदुदेशीयानां रमलाचार्याणां प्रकारमाह ।

हिंदुदेशीयरमलाचार्याः प्रश्नरूपिणा त्रयोदश १३ चतुर्दश १४ गृहरूपिणा च तथा तुला १५ रूपिणा चैतत्त्रयरूपिणा प्रश्नं कुर्वंति ॥ चतुर्दशगृहस्य "नाम आयने रमल" इति कथयंति । कोऽर्थः रमलदर्पणमित्यर्थः । तथा पंचदशगृहस्य नाम 'काजीरमल' इत्यर्थः । प्रश्नरमलस्य 'धर्मवेत्ता' इत्यर्थः । एभिस्त्रिभी रूपिप्रवेशिभिः संधिसंबंधप्रश्नः सिद्धिं याति । निर्गमैस्तैर्भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । स्थिरद्विस्वभावयोः पूर्ववत्फलं वक्तव्यम् । प्रश्नरूपिचतुर्दशपंचदशगृहरूपिणः प्रवेश्यादिभिर्मिश्रितरूपाः स्युस्तदा प्रथमगृहरूपिणा प्रश्नरूपिणं गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं भिन्नस्थाने स्थापयेत् । एवं चतुर्दशगृहरूपिणं पंचदशगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत् । पश्चाद्भिन्नस्थौ द्वौ स्वस्मिन्गुणितौ कर्त्तव्यौ । आभ्यां य उत्पन्नो भवेत्तं प्रश्नरमलेषु पश्येत् । यदि स रूपी प्रश्नरमलेषु प्रत्यक्षो भवेत्तदा द्विविधोऽपि प्रश्नः सिद्धिः प्रयाति । यदि प्रश्नरमले कुत्रापि नो पतितः स्यात्तदा द्विविधोऽपि प्रश्नः सिद्धिं नो प्रयाति । अथवा तस्य रूपिणः केवलबिंदुना फलं वक्तव्यम् । वह्निवायुभ्यां भिन्नस्वरूपः प्रश्नो वक्तव्यः । तथा जलपृथ्वीभ्यां संधिरूपः प्रश्नो वक्तव्यः ययोर्बिंदुराधिक्यं तस्यैवाज्ञा कारयेत् । यथा पूर्वोक्तं मया विपर्यये बिंद्वाधिक्ये विपर्य्ययं फलं वक्तव्यम् ।

अथ रूमदेशीयानां प्रकारमाह ।

रूमदेशीयाश्चतुर्दशगृहरूपिमनोऽभिप्रायरूपिभ्यां प्रश्नं कुर्वन्ति । यदि द्वौ रूपिणावेकरूपौ भवतः । तदाह । उभाभ्यां प्रवेशिभ्यां

संधिरूपः प्रश्नः सिद्धिं प्रयाति । निर्गमाभ्यामुभाभ्यां भिन्नरूपः प्रश्नः सिद्धिं प्रयाति स्थिराभ्यां द्विविधामपि स्थिरत्वं वक्तव्यम् । एवं द्विस्वभावफलं वाच्यम् । अथ यदि भिन्न-स्वरूपौ स्यातां मनोऽभिप्रायरूपी अन्यरूपः चतुर्दशगृहरूपी अन्यरूपस्तदा प्रथमगृहरूपिणि वह्निर्ग्राह्यः । द्वितीयगृहरूपिणि वायुर्ग्राह्यः । तृतीयगृहरूपिणि जलं ग्राह्यम् । तथा चतुर्थगृहरूपिणि भूमिर्ग्राह्या । एवं चतुर्भ्यो रूपिभ्यो वह्न्यादिकं गृहीत्वा चैकं रूपिणमुत्पादयेत् । अपरे चैवं पंचमगृहरूपिणो भूमिर्ग्राह्या । षष्ठगृहरूपिणो जलं ग्राह्यम् । सप्तमगृहरूपिणो वायुर्ग्राह्यः । अष्ट-मगृहरूपिणोऽग्निरूपं ग्राह्यम् । एवं पंचमादिचतुर्भ्यो रूपिभ्यो भूम्यादिकं गृहीत्वा तथैवैकं रूपिणमुत्पादयेत् । एतौ द्वौ स्वस्मिन् गुणितौ ताभ्यां य उत्पन्नो भवेत्तस्य नाम 'सलीबुररमल' इति कथ-यंति रमलज्ञाः । यद्ययं रूपी चतुर्दशगृहस्वरूपेण सदृशो भवेत्तदा मनोऽभिप्रायसिद्धिः स्यात्तदुक्तं भवति । सलीबुररमलचतुर्दशगृहरू-पिभ्यां प्रवेशिभ्यां संधिरूपः प्रश्नः सिद्धिं प्रयाति।ताभ्यां निर्गमाभ्यां भिन्नस्वरूपः प्रश्नः सिद्धिं प्रयाति । स्थिररूपाभ्यां स्थिरत्वम् ॥ द्विस्वभावरूपाभ्यां द्विस्वभावफलं द्विविधप्रश्नेऽपि। अथ यद्येतौ रूपि-णौ सदृशरूपौ नो स्यातां तथा चैतौ सलीबुररमलरूपिचतुर्दश-गृहरूपिणौ स्वस्मिन् गुणितौ कर्तव्यौ ताभ्यामुत्पन्नो भवेत्तेन रूपिणा प्रश्नः वक्तव्यः । प्रवेशिना संधिरूपः प्रश्नो वक्तव्यः निर्गमेन भिनत्व-रूपः प्रश्नो वक्तव्यः । स्थिरेण द्विविधेऽपि स्थिरत्वं फलं द्विस्वभावेन द्विस्वभावं फलं वाच्यम् ।

अथ रूसदेशीयानां प्रकारमाह ।

त एव रूसदेशीया ज्योतिःशास्त्राभिप्रायमार्गेण प्रश्नं कुर्वंति तदाह । प्रश्नरमलस्य प्रथमगृहे मेषयुतः १ द्वितीये वृषः २ तृती-ये मिथुनः ३ चतुर्थे कर्कः ४ पंचमे सिंहः ५ षष्ठे कन्या ६ सप्तमे

तुला ७ अष्टमे वृश्चिकः ८ नवमे धनुः ९ दशमे मकरः १० एकादशे कुंभः ११ द्वादशे मीनः १२ एवं तेषां प्रश्नकरणमूलं प्रथमगृहप्रभृतिद्वादश १२ गृहपर्य्यंतमेव एवं रूपिणो गृहेषु बद्धाः संति यथा पूर्वोक्तं मया । अथैषामाज्ञाकरणमाह । प्रश्नरमलेषु वाग्मी ⚍ प्रथमगृहे पतितः स्यात्तदा बृहस्पतिर्मेषस्थो ज्ञेयः लग्नस्थ इत्यर्थः । वाग्मी स्वप्रकृतिगृहे तिष्ठति । अत एव तस्य रूपिणः शुभावस्था वर्त्तते । एवं प्रथमगृहे १ तीक्ष्णांशुरूपी स्यात्तदा सूर्यः स्वोच्चे तिष्ठति मेषस्थो रविः । एवं प्रश्नमरलस्य प्रथमगृहादिषु तन्वादिभावेषु रूपिणां पतनप्रसंगेन ग्रहाणां स्थितिर्ज्ञेया । अत्र ज्योतिःशास्त्राभिप्रायतन्वादिभावेषु ग्रहाणां स्थित्या दृष्ट्या च प्रश्नो वक्तव्यः स्वर्क्षे शुभर्क्षे मित्रर्क्षे स्वोच्चे स्वप्रकृतौ शुभदृष्टे शुभं फलं वक्तव्यम् । तथा स्वर्क्षे पापर्क्षे शत्रुगृहे स्वनीचे पापाक्रांते पापयुते सूर्यलुप्तकिरणे वक्रीभूते गृहे अशुभं फलं वक्तव्यम् । यथा यदि गुरुर्वक्रीभूतः स्यात्तन्नैवं वक्तव्यम् । अस्मिन् समये वाग्मी अशुभफलदो भवति । एवं सर्वत्र ज्ञेयं संक्षेपमात्रमुक्तं मया । अथ यद्यपि चैतत्प्रकारा बहुतराः कथिता वर्त्तते । तथापि प्राचीनग्रंथस्य कर्त्ता सर्वेषां सिद्धांतं स्वल्पतरं परमरहस्यं बहुप्रयोजनयुतं पुरा कथितवान् तमहमत्र वच्मि । येन प्रश्नकथनेन यद्व्यक्तं स्यात्तदाह भो मित्र प्रश्नकथनस्य मूलप्रथमगृहप्रभृतिद्वादशगृहपर्यंतेष्वेवमस्मिन्गृहे शुभरूपी पतितः स्यात्तदा भाग्योदयरूपं फलं वाच्यम् । यद्यशुभरूपी स्यात्तदा निष्टं फलं वाच्यम् । प्रवेशिना संधिरूपाणि तथा गमनरूपाणि कार्याणि सिद्धिं प्रयांति । तथा निर्गमेन भिन्नत्वरूपाणि तथा गमनरूपाणि कार्याणि सिद्धिं प्रयांति । स्थिरेण स्थिरत्वं वाच्यम् द्विस्वभावेन द्विस्वभावं फलं वाच्यम् । एवं सर्वेषु रूपिषु शुभे रूपिणि सुगममार्गेण कार्यसिद्धिः अशुभे काठिन्येन । एवं सुसह्लसाद्विधिनापि प्रश्नं

कुर्वंति । तमाह । प्रश्नरमलेषु येन गृहेण प्रश्नः स्यात्तस्य गृहस्य रूपी द्वितीयगृहरूपिणा गुणितः । ताभ्यां यो रूपी चोत्पन्नो भवेत्स रूपी प्रश्नरूपिणः साक्षीभूतो ज्ञेयः । यादृशः साक्षीभूतस्तादृशं फलं प्रश्ने वक्तव्यम् । शुभेन साक्षीभूतरूपिणा प्रश्ने भाग्योदयो वक्तव्यः । अशुभेन साक्षीभूतरूपिणाऽनिष्टं फलं वाच्यम् प्रवेशिना साक्षीभूतरूपिणा वर्द्धमानं भाविफलं वाच्यम् । एवं निर्गमेण साक्षीभूतरूपिणा स्वल्पं भावि फलं वाच्यम् । स्थिरेण स्थिरत्वम् । द्विस्वभावेन विपर्य्ययं फलं वाच्यम् शुभे साक्षीभूते सुगममार्गेण कार्यसिद्धिः । अशुभे साक्षीभूते काठिन्येन कार्यसिद्धिः स्यात् तद्यथोदाहरणं द्रष्टव्यम् । यथा प्रथमगृहे शरीरद्रव्ययोः प्रश्नो वर्त्तते । स द्वितीय गृहरूपिणा गुणितस्ताभ्यामुत्पन्नो यो रूपी स तु नवमगृहे तिष्ठति तदा प्रथमगृहस्य साक्षीभूतो नवमगृहे तिष्ठति तेन साक्षीभूतेन शरीरद्रव्ययोर्भाग्योदयो ज्ञेयः । अशुभेन तेन शरीरद्रव्ययोरनिष्टत्वं ज्ञेयम् । प्रवेशिना तेन शरीरद्रव्ययोर्वर्द्धमानत्वं ज्ञेयम् । निर्गमेन शरीरद्रव्ययोः स्वल्पत्वं ज्ञेयम् स्थिरेण तेन शरीरद्रव्ययोः स्थिरत्वं ज्ञेयम् । द्विस्वभावेन तेन शरीरद्रव्ययोस्तत्रैव फलं वाच्यम् । वर्त्तमानशरीरावस्थावस्थान्तरं व्रजेत् । तथा द्रव्याणामागमं व्ययमपि वदेत् । शुभे तस्मिन्सुगममार्गेण । अशुभे तस्मिन्काठिन्येन फलं वाच्यम् । अपरं प्रश्नरमलस्य प्रथमगृहरूपिमनोऽभिप्रायरूपिभ्यां यो रूपी चोत्पन्नो भवेत्तस्य नाम 'लिशानुलअमर' इति कथयंति रमलज्ञाः तेन रूपिणा प्रश्नरमलस्य रचनत्वं नष्टत्वं च ज्ञेयम्।शुभेन रचनत्वं श्रेष्ठमशुभेन नेष्टत्वम् । अपरं पश्चिमदेशीयाः प्रश्नस्य सिद्धासिद्धत्वं पंचदशगृहरूपिणि कथयंति प्रवेशिना तेन संधिरूपःप्रश्नः सिद्धिं प्रयाति।निर्गमेन भिन्नत्वरूपः सिद्धिं प्रयाति विपर्य्ययेण विपर्ययरूपं फलं वाच्यम् । स्थिरेण स्थिरत्वम् । द्विस्वभावेन द्विस्वभावं फलं

वाच्यम् अथ रचनत्वनेष्टत्वयोर्हेतुकथनं । तुला गृहेऽ१५ न्वादेशेन उक्तस्य पुनरुक्तिरन्वादेशः । तदाह । यदि तुला १५ रूपिणोऽन्वादेशः प्रथमगृहे स्यात् । तदा शरीरादीनां हेतुना रचनत्वं श्रेष्ठत्वं च वक्तव्यम् तत्रान्वादेशे शुभे रूपिणि रचनत्वं शुभमशुभे रूपिणि नेष्टत्वं कार्यस्य । एवं तुलारूपिणोऽन्वादेशः । प्रश्नरमलस्य द्वितीयगृहे धनस्थाने स्यात्तदा द्रव्यादीनां कारणेन रचनत्वं नष्टत्वं वाच्यम् शुभे रचनत्वं शुभमशुभे नष्टत्वम्।एवं यद्यन्वादेशस्तृतीयगृहे स्यात्तदा भ्रातृभगिन्यादीनां हेतुना कार्यस्य रचनत्वं नष्टत्वं च वक्तव्यमेवं यदि चतुर्थगृहेऽन्वादेशः स्यात्तदा पित्रादीनां हेतुना कार्यस्य रचनत्वं नष्टत्वं वक्तव्यम् । शुभरूपिणि रचनत्वं शुभम् । अशुभे नष्टत्वम् एवं यदि तुलारूपिणोऽन्वादेशः पंचमगृहे स्यात्तदा पुत्रादीनां हेतुना कार्यस्य रचनत्वं नष्टत्वं च वक्तव्यम् । शुभे रचनत्वं शुभमशुभे नष्टत्वम् । एवं यद्यन्वादेशः षष्ठगृहे स्यात्तदा दासीदासानुचरादीनां हेतुना कार्यस्य रचनत्वं नष्टत्वं वाच्यम् । शुभे रचनत्त्वं शुभम् । अशुभे नष्टत्वमेवं यद्यन्वादेशः सप्तमगृहे पतितः स्यात्तदा स्त्रिया निग्रहण वाच्यमानवस्त्वादीनां हेतुना कार्यस्य रचनत्वं नष्टत्वं वाच्यम् । शुभे रचनत्वमशुभे नष्टत्वं वाच्यम् । एवमग्रेऽपि । यस्मिन्यस्मिन्गृहे तुलारूपिणोऽन्वादेशः समायाति तत्र गृहविचारांशहेतुना कार्यस्य मनोऽभिलषितस्य रचनत्वं नष्टत्वं वाच्यम् । शुभे रूपिणि रचनत्वम् । अशुभे नष्टत्वं वाच्यं सर्वत्रैव । अथापरं रमलप्रकारं मनोऽभिप्रायस्य सिद्धासिद्धकथने परीक्षितं परमरहस्यं च बहुप्रमाणयुतम् सिद्धान्तः प्रोच्यतेऽधुना । त्रयोदशादिचतुर्गृहेषु १३, १४, १५, १६, द्वौ गृहौ त्रयोदशचतुर्दशौ १३, १४, साक्षीभूतौ भवतः । तेषु पंचदशगृहं १५ धर्मवेत्तृज्ञेयम् । तथा षोडशगृहरूपिणो नाम निशातुलअमरसानीति कथयंति । तत्र पंचमषष्ठसप्त ५, ६, ७, माष्ट ८ मैकादश

द्वादश ११, १२ गृहाणां त्रयोदश गृहस्थरूपी साक्षीभूतो ज्ञेयः। एवं प्रथम १ द्वितीय २ तृतीय ३ चतुर्थ ४ नवम ९ दशम १० गृहाणां चतुर्दशगृहस्थरूपी साक्षीभूतो ज्ञेयः। यदि केनापि प्रश्नः कृतः संधिरूपः। तथाऽऽकाशेनापि गृह आगमवस्तुनि तदा द्रष्टव्यम्। यदि साक्षीभूतरूपी तथा धर्मवेत्ता प्रवेशी स्यात्तदा लिशानुलअमरशानी अपि प्रवेशी स्यात्तदा संधिरूपः प्रश्नः सिद्धिं प्रयाति। अपरं यदि साक्षीभूतयोर्मध्ये चैकः प्रवेशी एको निर्गमस्तथा तुलारूपी द्विस्वभावः षोडशगृह १६ रूपी प्रवेशी यदि तथापि संधिरूपः सिद्धिं प्रयाति। यदि त्रयोदशादिकाः सर्वे निर्गमाः स्युस्तदा संधिरूपः प्रश्नः सिद्धिं नो प्रयाति। शुभे रूपिणि शुभमार्गेण स्वामित्वेन कार्यसिद्धिः। अशुभे रूपिणि काठिन्येना स्वामित्वेन च कार्यसिद्धिः। अथ केनापि प्रश्नो भिन्नरूपः कृतो यथा प्रवासस्तथा दुःखमोक्षणं रोगशांतिः गुर्विणीप्रसवः एवं भिन्नत्वरूपः प्रश्नः स्यात्तदा त्रयोदशादिकाश्चत्वारो रूपिणो यदि निर्गमाः स्युस्तदा भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति। अपरं यदि साक्षीभूतयोर्मध्ये एकः प्रवेशी एको निर्गमस्तथा तुला १५ रूपी द्विस्वभावस्तथा षोडशगृह १६ रूपी निर्गमस्तथापि भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति। एवं यदि ते चत्वारः १३, १४, १५, १६, स्थिराः स्युस्तथा द्विविधप्रश्नेऽपि स्थिरत्वम्। एवं यदि ते द्विस्वभावाः स्युस्तदा द्विविधप्रश्नेऽपि द्विस्वभावफलं वाच्यं शुभैः सुगममार्गेण स्वामित्वेन च कार्यसिद्धिः। अशुभैः काठिन्येनास्वामित्वेन कार्यसिद्धिः स्यात्। एतद्वचनं सर्वत्रैव लापयेत्। अथ किंचिद्विशेष उच्यते। अथ केनापि प्रश्नः कृतः संधिरूपस्तदा द्रष्टव्यम्। यदि त्रयोदशचतुर्दशगृहरूपिणौ प्रवेशिनौ स्यातां तदा संधिरूपः प्रश्नः सिद्धिं प्रयाति। एवं यदि त्रयोदशगृहरूपी प्रवेशी भवेत्तथा चतुर्दशगृह १४ रूपी निर्गमो भवे-

त्तथापि संधिरूपः प्रश्नः सिद्धिं प्रयाति । यदि तौ निर्गमौ भवतः १३, १४, तदा संधिरूपः प्रश्नः सिद्धिं नो प्रयाति । अथ केनापि प्रश्नः कृतो भिन्नरूपस्तदाद्रष्टव्यं यदि त्रयोदशचतुर्दशगृहरूपिणौ निर्गमौ स्यातां तदा भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । यदि तौ प्रवेशिनौ स्यातां तदा प्रश्नः सिद्धिं नो प्रयाति । यदि त्रयोदशगृहरूपी निर्गमः स्यात्तथा चतुर्दशगृहरूपी यदि प्रवेशी तदा भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । स्थिराभ्यां स्थिरत्वं द्विस्वभावाभ्यां द्विस्वभावफलं वाच्यम् । अथ यदि तुलारूपी १५ द्विस्वभावो भवेत्तथा षोडशरूपी प्रवेशी भवेत्तदा कार्य्ये प्रष्टा एव स्थिरत्वं करोति परंतु किंचित्कार्यं सिद्धिं प्रयाति प्रष्टुः । यदि तुलारूपी द्विस्वभावो १५ भवेत्तथा षोडश १६ गृहरूपी निर्गमो भवेत्तदा किंचिदपि कार्य्यं सिद्धिं नो प्रयाति । शुभे सुगममार्गेण कार्य्यसिद्धिः अशुभे काठिन्येन कार्यसिद्धिः । एतद्वचनम् सर्वत्रैव लापयेत् । यदि षोडशगृहरूपी १६ स्थिरो भवेत्तदा कार्यं स्थिरत्वं व्रजेत्तथा प्रष्टा कार्य्यं त्यक्तुं नो शक्नुयात् । अपरं यदि षोडशगृह १६ रूपी अशुभो भवेत्तदा मनोऽभिप्रायरूपां कार्यसिद्धिं नो प्रयाति । अपरं यदि त्रयोदशगृह १३ रूपी निर्गमो भवेत्तदा प्रष्टा स्वयमेव मनोऽभिप्रायप्रश्नं त्यजेत् । अपरं यदि तुला- १५ रूपी प्रवेशी तथा षोडश १६ गृहरूपी प्रवेशी शुभरूपश्च तदा मनोऽभिप्रायकार्यमसंशयं सिद्धिं प्रयाति । विपर्यये विपर्ययः । अपरं यदि त्रयोदशरूपी १३ द्विस्वभावो भवेत्तदा प्रष्टुः चित्तं द्विग्रहरूपं स्यात् । यदि त्रयोदश १३ रूपी स्थिरो भवेत्तदा प्रष्टा आश्चर्य पतत् । अथ यदि ग्रहणदानयोः क्रयविक्रययोः प्रश्नो भवेत् । तदा द्रष्टव्यं भो मित्र यदि तुला १५ रूपी द्विस्वभावो भवेत्तथा त्रयोदशगृह १३ रूपी निर्गमो भवेत् । चतुर्दशगृहरूपी प्रवेशी

स्यात्तदा ग्रहणदानयोः प्रश्नस्तथा क्रयविक्रययोः प्रश्नः सिद्धिं प्रयाति विपर्य्येये विपर्य्ययफलं वाच्यम् । अथ यदि ज्ञातुमिच्छसि भो मित्र क्रेतृविक्रेत्रोर्मध्ये तथा साक्षिणोर्मध्ये तथा वादिप्रतिवादिनोर्मध्ये को दुर्मना भविष्यतीत्यत आह तदा द्रष्टव्यम् भो मित्र यदि प्रश्नरमलस्य त्रयोदशगृहे १३ अशुभरूपी पतितो भवेत्तदा प्रष्टा एव दुर्मना भवेत्। एवं यदि चतुर्दशगृहे १४ अशुभरूपी स्यात्तदा यस्मात्पुरुषात् प्रष्टा आशां करोति स एव पुरुषो दुर्मना भवेत् । अथवा यदर्थं प्रष्टा पृच्छति स दुर्मना भवेत् । एवं यदि प्रश्नरमलस्य पंचदशगृहे १५ अशुभरूपी पतितः स्यात्तदा द्वावपि किंचिद्दुर्मनसौ भवेताम् । कोऽर्थश्चित्तोद्विग्नप्रसन्नताभ्यां मिश्रितौ स्याताम् । षोडशगृहरूपिणि तु क्रयविक्रययोः किमपि फलं कथितं नास्ति । श्रीपरमेश्वरः सम्यक् प्रकारेण जानाति ।

अथ रमलार्णवग्रंथस्य कर्ता किंचिद्विशेषं वदति । किंच । प्राचीनरमलाचार्य्याः सर्वे सिद्धांताज्ञाकरणार्थं षड्वस्तूनां स्मरणं कुर्वंति प्रश्नसमये । तानि परमरहस्यतराणि गोप्यानि कानपिप्रति नो कथनीयानि दुर्जनेभ्यो रक्षणीयानि तानि।अथ तेषां षट प्रकाराणां नाम 'मुकारवतुलुमुगीवात' इति कथयंति रमलज्ञाः । तानाह प्रथमो 'मरातिव' इति। द्वितीय 'इस्तिरॉक' इति। तृतीयो 'मिंजाज' इति। चतुर्थक 'इमतिजाज' इति । पंचमस्तसीर इति । षष्ठस्तरह, इति । यः कोऽपि रमलज्ञ एतान् षट्प्रकारान् जानाति स प्रश्नकथने कस्याश्चिद्वार्ताया आधीनो नो भवेत् । अतएवैतान् षट्प्रकारानावश्यकेन जानीयात्। तत्रादौ 'मरातिव' रमलस्य पंच प्रकारानाह । प्रथमो 'रुवाई ' ४ द्वितीयः 'खुमासी' ५, तृतीयः ' सुदासी ' ६, चतुर्थः 'सवाई' ७, पंचमः 'समानी' ८, तत्र चतुर्बिंदुरूपी रुवाई ४ संज्ञकः । यथा शीतांशु ⁝ रेक एव । पंचबिंदुरूपिणां खुमासीति संज्ञा यथा इमे ⁝ ⁝ ⁝ ⁝ एवं षड्बिंदुरूपिणां सुदासीति–

संज्ञा यथा इमे ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ । एवं सप्तबिंदुरूपिणां सवाईति संज्ञा यथा इमे ⁝ ⁝ ⁝ एवमष्टबिंदुः सकलः समानीसंज्ञकः यथा सौम्य ☰ एक एव ।

अथैषां प्रयोजनमाह ।

रुबाई ४ समानी ८ अनयोर्मध्ये पारसीवचने 'जिद' इति वर्त्तते । कोऽर्थो वैरत्वम् । तथा खुमासी ५ सुवाई ७ अनयोर्मध्ये 'जिद' इति कोऽर्थः वैरत्वं वर्त्तत इत्यर्थः । सुदासी ६ कस्य कोऽपि जिदरूपो नास्ति । प्रयोजनमाह । यदि प्रश्नरमलेषु खुमासी ५ रूपी सुवाई ७ रूपिणो गृहे पतेत् । अथवा सुवाई ७ रूपी खुमासी ५ रूपिणो गृहे पतेत्तदा तन्मनोऽभिप्रायः सिद्धिं नो प्रयाति । अपि प्रष्टा तन्मनोभिप्रायं त्यक्तुमिच्छतीति विचारांशो वर्त्तते अत्र रूपिणां गृहाणि तत्तत्क्रमेण ज्ञेयानि । अपरमस्य त्याज्यकरणस्य कारणं हेतुरूपं कथं ज्ञायत इत्यत आह । प्रश्नरूपिणोऽन्वादेशो यस्मिन्गृहे भवेत्तस्य गृहस्य विचारांशैस्त्याज्यहेतुत्वं वाच्यम् । त्यक्तकरणस्य हेतुत्वं प्रश्नरूपिणोऽन्वादेशरूपेण वदेत् । अन्वादेशो द्विस्त्रिरुक्तः स्यात् । इति मरातिवस्य व्याख्यानम् ।

अथ इस्तिराकः प्रोच्यते ।

स द्विविधः एकः 'इश्तिराकशिरकत' इति द्वितीयः 'इश्तिराकवजूदी' । तत्रादौ इश्तिराकशिरकतमाह । प्रश्नरमलेषु येन गृहेण पृष्टो भवेत्तस्मिन्गृहे यो रूपी पतितः स्यात्स ग्राह्यस्तस्माद्गृहरूपिणो द्वितीयगृहे यो रूपी तिष्ठेत्स ग्राह्यः । आभ्यां य उत्पन्नो भवेत्सोऽपि ग्राह्यः । यथा मुसल्लसातेन बहिः समायाति रूपीपूर्वमुक्तं मया । एवं प्रश्नरूपी तथा प्रश्नरूपिणो द्वितीयरूपी सरीकरूपस्तथा ताभ्यामुत्पन्नो यस्तस्य नाम " नतीजा " इमे त्रयो रूपिणो यदि प्रकृतिस्वभावैः समानरूपाः स्युस्तदा मनोऽभिप्रायः सिद्धिं प्रयाति । यदि ते त्रयो रूपिणः प्रकृतिस्वभावैर्विपर्ययरूपाः

स्युस्तदा मनोऽभिप्रायः सिद्धिं नो प्रयाति विपर्यये विपपर्ययफलं वाच्यम् । परन्त्वत्रावश्यकेन हल्लः अ ४ कदौ विचारणीयौ । तत्रादौ हल्लमाह । हल्ल इति अमुद्रितशब्दार्थः । तदाह । प्रश्नरूपिशरीकरूपिभ्यामुत्पन्नो यो रूपी तं रूपिणं पश्येत् । यदि स विषमविंदुरूपिभ्यामुत्पन्नस्तदा तस्योत्पन्नरूपिणा नाम हल्ल इत्यमुद्रितः । अत्र मनोऽभिप्रायः सिद्धिं प्राप्नोति विषमविंदुरूपी खुमासी ९ सुबाई ७ अपरं यदि समविंदुरूपिभ्यामुत्पन्नस्तदा तस्योत्पन्नरूपिणो नाम अकद इति कथयंति अकद इति वंधित मुद्रितशब्दार्थः । अत्र मनोऽभिप्रायः सिद्धिं नो प्रयाति कार्याणि वंध्यानि भवंति । समविंदुरूपी रुबाई ४ सुदासी ६ समानी ८ इति । अपरं यदि च विषमविंदुसमविंदुरूपिभ्यामुत्पन्नो नतीजा रूपी तस्य नाम निमवस्ता इति कथयन्ति कोऽर्थः । अर्द्धबंधः। अर्द्धमुद्रितः । अत्र चिंकित्कार्य्यं सिद्धिं प्रयाति किंचिन्नो प्रयाति । एवमस्यां कर्तव्यतायां प्रवेशी निर्गमो भवति तथा निर्गमः प्रवेशी भवति । एवं रूपिणो रूपांतरं प्राप्नुयुः । परन्तु यादृग्स्वरूपाभ्यां रूपी चोत्पन्नो भवेत्तादृगेव फलं वाच्यम् अथ द्वितीय इश्तिराकवजूदी यथा केनापि प्रश्नः कृतः । तदा द्रष्टव्यं प्रश्नरमलेषु केन गृहेण प्रश्नो वर्त्तते । प्रश्नगृहे को रूपी पतितः तं रूपिणं काष्ठपीठोपरि लिखेत् । पुनः प्रश्नगृहस्य स्वामिनं क्रमेण पूर्वोक्तानां मते केन तस्य रूपिणः समीपे स्थापयेत् । तथा वर्णानुक्रमेण प्रश्नगृहस्य स्वामिनं रूपिणं पीठोपरि स्थापयेत् । एवं संख्यानुसारक्रमेण प्रश्नगृहस्य स्वामिनमपि तस्य समीपे स्थापयेत् । एवं प्रश्नगृहोपरि चत्वारो रूपिणो गृहीत्वा तान्स्वास्मिन् गुणयेत् । तद्यथा यो रूपी प्रश्नरमलस्य प्रश्नगृहे पतितो वर्त्तते तं रूपिणं प्रश्नगृहस्य स्वामिरूपिणा गुणयेत । ताभ्यां य उत्पन्नो भवेत्तमन्यत्र स्थापयेत् । तथा

वर्णानुसारक्रमेण प्रश्नगृहस्य स्वामिनं रूपिणं संख्यानुसारक्रमेण प्रश्नगृहस्य स्वामिना रूपिणा गुणयेत् । आभ्यां य उत्पन्नो भवेत्तं चापि पृथक् स्थापयेत् । पश्चाद्भिन्नस्थौ द्वौ स्वस्मिन्गुणितौ कर्तव्यौ । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा प्रष्टुर्मनोऽभिप्रायस्याज्ञां कारयेत् । तदाह । प्रवेशिना तेन संधिरूपः प्रश्नः सिद्धिं प्रयाति । निर्गमेण संधिरूपः प्रश्नः सिद्धिं नो प्रयाति । स्थिरेण स्थिरत्वम् । द्विस्वभावेन द्विस्वभावफलं वाच्यम् । शुभे सुगममार्गेण कार्यसिद्धिः। अशुभे काठिन्येन कार्य्यसिद्धिः स्यादेतद्वाक्यं सर्वत्रैव लापयेत् । यदि भिन्नत्वरूपः प्रश्नो भवेत्तदा निर्गमेन तेन सिद्धिं प्रयाति । प्रवेशिना नो सिद्धिं प्रयाति । स्थिरेण स्थिरत्वं वाच्यम् । द्विस्वभावेन द्विस्वभावफलं वक्तव्यम् । शुभे सुगममार्गेण । अशुभे काठिन्येन कार्यसिद्धिः स्यात् । यदि प्रश्नगृहस्य रूपी प्रकृतिक्रमेण स्वगृहे भवेत्तदा एवं न कर्तव्यम् । तत्र किंकर्त्तव्यमित्यत आह । प्रश्नरूपिणं मातृचतुर्थगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा पूर्ववत् प्रश्नाज्ञां कारयेत् । इति इश्तिराकस्य व्याख्यानमलम् ।

अथ मिजाजः प्रोच्यते ।

सोऽपि द्विविधः एकस्तु रव्यादिसप्तवासराणि । यथा प्रश्नरमलेषु येन गृहेण प्रश्नो भवेत्तस्मिन् गृहे यो रूपी पतितः स्यात्तस्य स्वामी च यो ग्रहः । तद्ग्रहसंबंधिवासरे मनोऽभिप्रायकार्य्यसिद्धिः स्यात् । एतत्सर्वं खेटक्रमे सम्यक्प्रकारेण पूर्वं कथितं मया ।

अथ द्वितीयमिजाजमाह ।

प्रश्नरमलेषु येन गृहेण प्रश्नो भवेत्तस्मिन् गृहे यो रूपी पतितो भवेत्तं गृहरूपिणं च पश्येत् । यदि द्वौ प्रकृत्या संधिरूपौ भवतः । यथा वह्निमुखरूपी वह्निमुख एव गृहे । अथवा वायुमुखरूपी वायुमुख एव गृहे । अथवा जलमुखरूपी जलमुख एव गृहे तिष्ठति

अथवा भूमुखरूपी भूमुख एव गृहे तिष्ठति । एवं द्वौ गृहरूपिणौ प्रकृत्या संधिरूपौ यदि भवतस्तदा मनोऽभिप्रायः सिद्धिं प्रयाति विपर्य्यये विपरीतफलं वाच्यम् । इति मिजाजकस्य व्याख्यानमलम् ।

अथ इमितिजाजः प्रोच्यते ।

द्वाभ्यां रूपिभ्यां य उत्पन्नो भवेत्तस्य नाम 'इमितिजाज' इति कथयंति कोऽर्थः संमेलनार्थः । यदि द्वाभ्यां रूपिभ्यां शुभाशुभाभ्यामुत्पन्नो भवेत्तदा इमितिजाजो भाग्योदयस्य वक्तव्यः । कोऽर्थः प्रष्टुः संमेलनो भाग्योदयेन स्यात शुभं फलं वक्तव्यम् यदि द्वाभ्यामशुभाभ्यामुत्पन्नो भवेत्तदा इमितिजाजः अभाग्योदयस्य वर्त्तते । अत्रानिष्टं फलं वाच्यम् । यदि शुभाशुभाभ्यामुत्पन्नो भवेत्तदा मिश्रितं फलं वाच्यम् । एवं प्रश्नगृहोपरि चतुरो रूपिणो गृहीत्वैतान्स्वस्मिन्गुणयेत् । तद्यथा । यो रूपी प्रश्नरमलस्य प्रश्नगृहे पतितो वर्त्तते तं रूपिणं क्रमाणां मते प्रश्नगृहे स्वस्वामिरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत् । तथा वर्णानुसारक्रमेण प्रश्नगृहस्य स्वामिनं रूपिणं संख्यानुसारं क्रमेण प्रश्नगृहस्य स्वामिना रूपिणा गुणयेत् । आभ्यां य उत्पन्नो भवेत्तं चापि भिन्नं स्थापयेत् । यद्वा भिन्नस्थौ द्वौ स्वास्मिन् गुणितौ कर्त्तव्यौ । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा प्रष्टुर्मनोऽभिप्रायस्याज्ञां कारयेत्तदा प्रवेशिना तेन संधिरूपः प्रश्नःसिद्धिं प्रयाति।निर्गमेन संधिरूपः प्रश्नःसिद्धिं नो प्रयाति।स्थिरेण स्थिरत्त्वं द्विस्वभावेन द्विस्वभावं फलं वाच्यम् । शुभेन सुगममार्गेण कार्यसिद्धिः अशुभेन काठिन्येन कार्यसिद्धिः स्यादेतद्वाक्यं सर्वत्रैव लापयेत् । यदि भिन्नत्वरूपः प्रश्नो भवेत्तदा निर्गमनेन सिद्धिं प्रयाति । प्रवेशिना सिद्धिं प्रयाति । स्थिरेण स्थिरत्वं फलम् । द्विस्वभावेन द्विस्वभावं फलं वक्तव्यम् । शुभे सुगममार्गेण अशुभे

काठिन्येन कार्यसिद्धिः स्यात् । यदि प्रश्नगृहस्य रूपी प्रकृतिक्रमेण स्वगृहे भवेत्तदा एवं न कर्त्तव्यम् । तत्र किं कर्त्तव्यमित्यत आह । प्रश्नरूपिणं चतुर्थगृह ४ रूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा पूर्ववत्प्रश्ने चाज्ञां कारयेत् । इति शस्तिराकस्य तुला १८ गृहे केवलबिन्दुर्द्वौ वा चत्वारो बिंदवः केवलाः पतिष्यंति नान्ये यथा ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ एते एव रूपिणः प्रश्नरमलस्य तुला १८ गृहे पतिष्यंति नान्ये । यदि द्विबिंदूभयतस्तदा द्वयोर्मध्ये एकः क्षुद्रः एको गुरुर्यः क्षुद्रः स गुरुसंबंधादुच्चैस्तिष्ठति । गुरुस्तु नीचैस्तिष्ठति । एक ऊर्द्धबिन्दुः क्षुद्रः । अधस्थो बिंदुर्गुरुः । ऊर्द्धबिंदुः प्रष्टुर्ज्ञेयः । अधस्थो बिंदुर्म्मनोऽभिप्रायस्य ज्ञेयस्तदा रूप्यपि एतावद्द्विबिन्दुः मातृगृहे द्रष्टव्यस्तत्र कस्मिन्तस्मिन्रूपिणि वर्त्तते तथैव द्रष्टव्यं पुनस्तावद्द्विबिन्दुर्दुहितरि वह्निस्थाने यायात् अथवा मातृगृहस्य वह्निबिंदुर्दुहितरि गलस्थान प्रयाति । अथवा मातृगृहस्य भूमिबिंदुर्दुहितरि वायुस्थाने प्रयाति । अथवा मातृगृहस्य वायुबिंदुर्दुहितरि भूमीस्थाने प्रयाति अस्य नाम इस्तिहालः मुस्तहील इति अपरमेवं नो भवेत्तदा इस्तिहालो नास्ति । तदा इस्तिहालरूपिपाते प्रष्टुर्मनोऽभिप्रायः सिद्धिं नो प्रयाति । यदि बिंदुरिस्तिहालरूपो नो भवेत्तदा द्रष्टव्यं मातृगृहस्य स्थानाद्द्विबिन्दुरूर्द्धगतोभवेद्दुहितरि तदा यदाशा कृता वर्त्तते सा सिद्धिं प्रयास्यति तथा मनोऽभिप्रायोऽपि सिद्धिं प्रयास्यतीति फलंवाच्यम्।यादृक्स्वरूपाभ्यां रूपी चोत्पन्नो भवति तादृशमेव फलं वाच्यम् । शुभाभ्यां शुभत्वम् । अशुभाभ्यामशुभत्वम् । नतूत्पन्नरूपी स्वरूपेण कदाचित् । एवं इमतिजाजे प्रश्नरूपिणः फलं वाच्यम् ।

अथ तसीरः प्रोच्यते ।

तसीरस्तु रमलावृत्तिः स्यात् । रमलावृत्तेर्व्याख्यानं पूर्वोक्तं मया

तदेवात्रापि द्रष्टव्यम् । तदाह । प्रश्नोत्तरं तथा ये जनाः प्रश्नं कुर्वंति गृहविचारांशेष्वनुरूपमपि सर्वं तसीरेण जानीयात् । केचिदाचार्य्या रमलज्ञाः रमलावृत्तिं द्वादशगृहादग्रे न जानन्ति । यदा द्वादशपर्य्यंतं रमलावृत्तिर्गण्यते । पुनरपि प्रथमगृहाद्गणयन्ति । परंतु मया यदुपरि विचार्यंते सा तु षोडशगृहपर्यंतेषु रमलावृत्तिः स्यात् । इति वचनात् । अत एव प्रष्टुः प्रश्नं पश्येत् । तस्माद्गृहाद्यावंत्यपेक्षितानि भवंति तावन्त्येव गणयेत् । यत्र संख्या पूर्णतां याति तत्रैव प्रश्नो द्रष्टव्यः । यथा पूर्वं द्वादशाध्याये रमलावृत्तेर्व्याख्याने कथितं वर्त्तते तथैवात्र कर्त्तव्यम् । एवं तरहकस्य व्याख्यानमग्रे तरहस्य स्थाने कथयिष्यामि । एतत् षट्प्रकारेषु रमलस्यैकभेदो वर्त्तते । अथ रमलार्णवग्रंथे किंचिद्विषेशः कथितो वर्त्तते । तमेवाह । प्रश्नरमलस्य तुला १६ गृहे केवलबिंदू द्वौ वा चत्वारो बिंदवः केवलाः पतिष्यंति नान्ये यथा [illegible] एत एव रूपिणः प्रश्नरमलस्य तुला १६ गृहे पतिष्यंति नान्ये यदि द्वौ बिन्दू भवतस्तदा द्वयोर्मध्ये एकः क्षुद्रः एको गुरुर्यः क्षुद्रः स गुरुसंबन्धादुच्चैस्तिष्ठति । गुरुस्तु नीचैस्तिष्ठति । एवमूर्द्ध्वबिंदुः क्षुद्रः । अधस्थबिंदुर्गुरुः । ऊर्द्ध्वबिंदुः प्रष्टुर्ज्ञेयः । अधस्थो बिंदुर्मनोऽभिप्रायस्य ज्ञेयस्तुलारूपिणि एतावेव द्वौ बिंदू मातृगृहे द्रष्टव्यौ । तत्र कस्मिन्रूपिणि वर्त्तंते तथैव दृष्ट्वा पुनस्तावेव द्वौ बिंदू दुहितृगृहे मुस्तहीलरूपौ भवतो वा नेति द्रष्टव्यम् । तद्यथा मुस्तहीलरूपमाह । मातृस्थानस्थ जलबिंदुर्दुहितरि वह्निस्थाने यायात् । अथवा मातृगृहस्थवह्निबिंदुर्दुहितरि जलस्थाने यायात् । अथवा मातृगृहस्थभूमिबिंदुर्दुहितरि वायुस्थाने यायात् । अथवा मातृगृहस्य वायुबिंदुर्दुहितरि भूमिस्थाने यायात् अस्य नाम इस्तिहालः मुस्तहील इति अपरमेवं नो भवेत्तदा इस्तिहालो नास्ति तदा इस्तिहालरूपे

याते प्रष्टुर्मनोऽभिप्रायः सिद्धिं नो प्रयाति। यदि बिंदुरिस्तिहाल-रूपो नो भवेत्तदा द्रष्टव्यम्। मातृगृहस्य स्वस्थानादूर्द्ध्वंगतो वर्त्तते दुहितरि वाऽधस्थः। यदि स्वस्थानाद्विंदुरूर्द्ध्वंगतो भवेद्दुहितरि तदा यदाऽऽशा कृता वर्त्तते सा सिद्धिं प्रयाति तथा मनोऽभिप्रायो-पि सिद्धिं प्रयाति। परन्तु मनसि यावत्परिमिताऽऽशा वर्त्तते तदधि-काऽऽशा मनोऽभिप्रायश्च सिद्धिं प्रयाति। यदि मातृगृहस्थः स्वस्था-नाद्बिंदुरधस्थगतो दुहितरि भवेत्तदापि याऽऽशा कृता वर्त्तते सा सिद्धिं प्रयाति। तथा मनोऽभिप्रायश्च सिद्धिं प्रयाति। परन्तु यावत्परिमिताऽऽशा वर्त्तते तन्न्यूना सिद्धिं प्रयाति।तथा स्वल्पमनो-भिप्रायश्च सिद्धिं प्रयाति। अपरं यदि मातृगृहस्थस्वस्थानाद्विंदु-र्दुहितर्य्यपि स्वस्थान एव गतो भवेद्यस्मिन्स्थाने मातरि ति-ष्ठति तस्मिन्नेव स्थाने दुहितर्य्यपि पतितो वर्त्तते तदा याऽऽ शा कृता वर्त्तते सा सिद्धिं प्रयाति। तदा मनोऽभिप्रायश्च सिद्धिं प्रयाति। परन्तु यावत्परिमिताऽऽशा वर्त्तते तावदेव सिद्धिं प्रयाति तथा मनोऽभिप्रायश्च तावदेव सिद्धिं प्रयाति नाधिको नातिन्यूनः। यथास्थितमेव सिद्धिं प्रयाति अथ यदि तुला १५ गृहे केवलाश्चत्वारो बिंदवो भवंति तदा ऊर्द्ध्वस्थौ द्वौ बिंदू ग्राह्यौ वह्निवाय्वोः केचिद्वदंति वह्निभूम्योर्बिंदू ग्राह्यौ तथैव कृत्वा विलोक्य फलं वक्तव्यम्। अथ तस्मिन्नेव ग्रंथेऽपरस्मिन्स्थलेऽपि कथितं वर्त्तते तदेवाह। मातृगृहस्थवह्निबिंदुर्दुहितरि वायुस्थाने यातस्तदा-ऽयं संमेलन उष्णस्य श्लेष्मत्वेन सह तदाऽस्याज्ञा इयं वर्त्तते दर्शन-वचनकथनं भाग्योदयश्च स्यात्। यदि मातृगृहस्य वह्निबिंदु र्दुहि-तरि जलस्थाने यायात्तदा तु वैरत्वमिदं संमेलनं यातं तदा तस्याज्ञा-करणमिदम्। मृत्युसदृशं फलं तथा नष्टं भ्रष्टं वैरत्वं च फलं स्यात एवं यदि मातृगृहस्थवायुबिंदुर्दुहितरि वह्निस्थाने यायात्तदेदं संमे-लन मुच्चताया वर्त्तते तदाज्ञाकरणमिदम्। उच्चताभवेत्तथोत्कृष्टपदवीं

प्राप्नोति प्रष्टा तथा प्रतिष्ठाया विचारांशो वर्त्तते । एवं यदि मातृगृहस्थवायुबिन्दुर्दुहितरि जलस्थाने यायात्तदेदं संमेलनं मित्रत्वस्य वर्त्तते। तदास्याज्ञाकरणमिदं मनोऽभिप्रायः सिद्धिं प्रयाति तदा द्वयोर्मित्रयोः स्वस्मिन् संमेलनम्भवेत् । एवं यदि मातृगृहस्थवायुबिंदुर्दुहितरि भूमिस्थाने यायात्तदेदं मेलनं दुष्टत्वस्य जातं तदास्याज्ञाकरणमिदम् । दुष्टत्वं भवेत्तथा कार्याणि दूरे प्रयांति । एवं यदि मातृगृहस्य जलबिंदुर्दुहितरि वह्निस्थाने यायात्तदा बृहद्वैरत्वमिदं ज्ञेयम्। तदास्याज्ञाकरणमिदं बृहद्वैरत्वं भवेत् बहुदुष्टत्वं भवेत् । एवं यदि मातृगृहस्य जलबिंदुर्दुहितरि भूमिस्थाने यायात्तदा मित्रत्वसंमेलनमिदम् । तदास्याज्ञाकरणमिदम्। प्रष्टा मनोऽभिप्रायश्च। अनयोर्मध्ये मित्रत्वं वर्त्तते । अत एव मनोऽभिप्रायः सिद्धिं प्रयाति । प्रष्टा यं प्रति याचते स दास्यति मित्रत्वात् । अपरमन्नपानादिकं लभेत् । प्रष्टुः कार्यसिद्धिः स्यात् तथा जीवनवृत्तिः सिद्धिं प्रयाति । एवं यदि मातृगृहस्थजलबिंदुस्तथा भूमिबिंदुर्दुहितरि वह्निस्थाने यातो तदा एवं वक्तव्यम् । द्विपुरुषयोर्मध्ये वैरत्वमुत्पद्यते । यदि संधिरूपः प्रश्नो भवेत्तदा सिद्धिं नो प्रयाति । यदि रोगिणोऽर्थे पृच्छति तदा रोगिणो मृत्युः स्यात् । यदि बंधगतपुरुषस्यार्थे पृच्छति तदा बंधगतपुरुषो बंधनान्मुच्यते । श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ॥ इति रमलार्णवग्रंथस्य संमतम् ॥

अथ रमलेऽन्वादेशभूतस्य फलमाह ।

अन्वादेशस्तु रमलस्य मूलं वर्त्तते तथा भेदो वर्त्तते रमलस्य । तथाहि । मनोऽभिप्रायगृहस्य रूपी योऽन्यगृहस्य रूपी प्रश्नरमलेषु एकस्मिन्स्थले वा द्वितीयस्थानेऽन्वादेश रूपेणागतः स्यात्तदा तस्य नाम 'तकार' इति । अन्वादेशो द्विस्त्रिरुक्तमित्युक्तत्वात् । 'अनेनान्वादेशरूपेण प्रष्टुः सर्वं वृत्तांतं ब्रूयात् । अयमन्वादेशः । प्रत्येकैकस्यावस्थाया वृत्तांतं ददाति । यदि रमलज्ञोऽन्वादेशाभ्यासं कुर्यात

तदा प्रष्टुर्नानावृत्तांतकथने समर्थो भवेत् । प्रष्टुराश्चर्यावस्थाकथने समर्थो भवेत् । तद्यथोदाहरणं द्रष्टव्यम् । यथा प्रश्नो रोगिणो वर्त्तते । रोगिणो गृहं षष्ठम् । तस्मिन्षष्ठगृहे सौरिरूपी प्राप्तः ≡ स एव पंचमगृहे ५ ऽन्वादेशो वर्त्तते तदा एवं वक्तव्यम् । यद्यपि बृहद्रोगी वर्त्तते । तथापि स्वास्थ्यं भविष्यति रोगी रोगान्मुच्यते । कस्मात् सौरिरूपी पंचमे प्रसन्नताया गृहे मंगलस्य गृहेऽन्वादेशो वर्त्तते इतिवचनात् । अपरं यथा प्रश्नरमलस्य प्रथमगृहे सौम्यः ≡ प्राप्तस्तदा मयोक्तं शरीरे चिन्ताधिक्यं वर्त्तते । यदा पंचमगृहे सौम्यस्यान्वादेशो दृष्टस्तदा मयोक्तं पुत्रकाम्यया वा अद्भुतवस्तुकाम्यया वा मित्रकाम्यया शरीरे चिन्ताधिक्यं वर्त्तते । अपरं यथा प्रमगृथहे उष्णगुरूपीप्राप्तः ≡ अयमेव नवमगृहेऽन्वादेशो वर्त्तते तदा मयोक्तम् । अत्र शरीरः प्रवासे गमिष्यति वा कश्चित्प्रवासिनो वार्त्तां पृच्छति प्रष्टा । कस्मात् । प्रथमगृहं शरीरस्य नवमगृहं प्रवासस्येति वचनात् । अपरं यथा दशमगृहे सौम्यः प्राप्तः ≡ स एवैकादशगृहेऽन्वादेशो वर्त्तते । तदा मयोक्तम् । स्थिरत्वेन स्वकंचुककोशादाशासिद्धिं प्रयास्यति । कस्मात् रूपी स्थिर एकादशगृहमाशायास्तथा कंचुके कोशस्येति वचनात् । अपरं यथा सप्तमगृहे कश्चिद्रूपी प्राप्तः स एव नवमगृहेऽन्वादेशो वर्त्तते । तदा मयोक्तं प्रष्टा परीक्षाकरणार्थं समागतः कस्मात् सप्तमगृहं चित्तहेतोर्वर्त्तते । स एव नवमगृहे विद्याया गृहे समागत इति वचनात् । अथ प्राचीनग्रंथेष्वपि कथितं वर्त्तते । मनोऽभिप्रायगृहरूपिणोऽन्वादेशो रचनत्वनष्टत्वाभ्यां चैतन्यं करोति यथा प्रथमगृहेऽन्वादेशःपतेत्तदा शरीरप्रसंगेण चायुर्दायप्रसंगेन मनोऽभिप्रायस्य रचनत्वं नेष्टत्वं वक्तव्यम् । शुभे रूपिणि श्रेष्ठत्वम् । अशुभे रूपिणि नेष्टत्वं वाच्यम् । एवं यदि द्वितीयगृहेऽन्वादेशः पतेत्तदा द्रव्यादिप्रसंगेन रचनत्वं नेष्टत्वं वाच्यम् । एवमग्रेऽपि ज्ञेयम् । यदेवं द्वादशगृहेऽन्वादेशः पतेत्तदा दुष्टानां प्रसंगेन मनोऽभिप्रायस्य श्रेष्ठ-

त्वं नेष्टत्वं च वाच्यम् । यदि त्रयोदशगृहेऽन्वादेशः पतेत्तदा ग्राहक-पुरुषाणां प्रसंगेन मनोऽभिप्रायस्य श्रेष्ठत्वं नेष्टत्वं च वक्तव्यम् । यदि चतुर्दशगृहेऽन्वादेशः पतेत्तदा ग्राह्यपुरुषाणां वस्तूनां वा प्रसंगेन मनोऽभिप्रायस्य रचनत्वं श्रेष्ठं नेष्टत्वं च वाच्यम् । यदि पंचदश गृहेऽन्वादेशः पतेत्तदा मध्यस्थपुरुषाणां प्रसंगेन मनोऽभिप्रायस्य रचनत्वं नष्टत्वं च वाच्यम् । यथा क्रये विक्रये मध्यस्थः विवाहे ब्राह्मणः यवनविवाहे धर्म्मवेत्ता यथा यथानर्थकरणे पृथ्वीपतिः। अपरं रमलज्ञाचार्या अन्वादेशस्याज्ञाकरणफलं लिखितुं शंकां कुर्वंति । अत एव प्रश्नसमये ऽन्वादेशोपरि आज्ञाकरणं रमलस्य सिद्धांतभेदो वर्त्तते । प्रस्फुटं मयात्र प्रकाशितं यः कोऽपि रमलज्ञो ऽन्वादेश-मार्गेण वार्त्ता वदति तस्य वार्ता ध्रुवं सत्यरूपा भवेत्कदापि मिथ्या-रूपा नो भवेत् । श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति । एतद्रहस्यं गोपनीयं प्रयत्नतः । केषां चिदग्रे नो प्रकाशयेत् ॥ " गुह्याद्गुह्यतरं गुह्यं त्रिषु लोकेषु दुर्लभम्" । सर्वेभ्यो रक्षयेत् । अपरमपि ज्ञातव्यम् प्रश्नसमये चाज्ञाकरणस्य मूलं इनकिलावो वर्त्तते ।

अथ इनकिलावः प्रोच्यते ।

स इनकिलावो बहुप्रकारो वर्त्तते । यथा केचिद्वदंति द्वाविंशति२२-परिमिता इनकिलावाः संति । केचिद्वदंति षोडश १६ परिमिता इनकिलावाः संति । अस्माभिरत्र ये प्रसिद्धा वर्त्तन्ते तथा येषामुपरि रमलज्ञा विचारं कुर्वंति ते प्रोच्यंते । तेषां मध्ये प्रथमप्रकार इन-किलावो यथा प्रश्नसमये ध्रुवमाज्ञाकरणस्य रूपं तुला १६रूपिणा अस्य नाम 'इन ?' किलावहुकुमसुतलक' इति कथयंति रमलज्ञाः यः कोऽपि इनकिलावं नो जानाति सः कदापि सत्याज्ञाकरणं कर्तुं नो समर्थो भवेत् । तस्य प्रश्नस्तथ्यतां नो यातीति ज्ञातव्यम् । इन-किलावहुकुमसुतलक' एवं वर्त्तते । तदाह । प्रश्नरमलस्य मातृगृहेण दुहितृगृहं गुणयेदपरं मातृगृहं विरच्य रमलमलं कारयेत् । तदा

ध्रुवं तुलागृहे १९ सौम्य ☰ रूपी एवागमिष्यति । तदा त्रयोदशचतुर्दशरूपिभ्यां सर्वप्रश्नस्य सिद्धासिद्धौ चाज्ञां कारयेत् । प्रवेशिभ्यां संधिरूपः प्रश्नः सिद्धिं प्रयाति । शुभे सुगममार्गेण अशुभे काठिन्येन कार्यसिद्धिः निर्गमाभ्यां नो सिद्धिं प्रयाति । शुभेस्वामित्वेन अशुभे काठिन्येन । स्थिराभ्यां स्थिरत्वं यथा स्थितमेव तिष्ठेत् । शुभे परिणामे कार्यसिद्धिः । अशुभे कदापि सिद्धिर्न स्यात् । द्विस्वभावाभ्यां द्विस्वभावं फलं वाच्यमादौ कार्यागमनं पश्चाद्गमनं भवेत्कार्यस्य । तद्यथा प्रश्नरमलस्य प्रथमगृहरूपिणं पंचमरूपिणा गुणयेत् । तथा मातृगृहस्य द्वितीयगृहरूपिणं दुहितुः षष्ठगृहरूपिणा गुणयेत् । एवं मातृगृहस्य तृतीयगृहरूपिणं दुहितुः सप्तमगृहरूपिणा गुणयेत् । तथा मातृगृहस्य चतुर्थगृहरूपिणं दुहितुरष्टमगृहरूपिणा गुणयेत् । एवं मातृगृहस्य दुहितृभ्यां चत्वारो रूपिण उत्पादयेत् । तेषां चतुर्णां मातृगृहं विरच्य रमलमलंकारयेत् । अपरं तस्य मातृगृहस्यैकः सिद्धांतस्वभावस्त्वयं वर्त्तते । त एवरूपिणो दुहितर्याप्य गमिष्यंति । अपरं रमलस्य तुलागृहे त्वावश्यकेन सौम्य एव रूपी स्यात् । एवं रमलमलंकृत्य पश्येत् । यदि प्रश्नः संधिरूपो भवेद्यथा विवाहः । तथा द्रव्यादीनां ( साठिः ) यः स्वहस्ते चागमिष्यति तदा द्रष्टव्यम् । इनकिलावस्य तुला १९ रूपिणं यदि सौम्यो द्वाभ्यां प्रवेशिभ्यामुत्पन्नो यातस्तदा संधिरूपः प्रश्नः सिद्धिं प्रयाति । यदि द्वाभ्यां निर्गमाभ्यामुत्पन्नस्तदा सिद्धिं नो प्रयाति । यदि द्वाभ्यां स्थिराभ्यामुत्पन्नस्तदा मनोऽभिप्रायस्य स्थिरत्वं पश्येत् । यथा स्थितमेव तिष्ठेत् । यदि द्वाभ्यां द्विस्वभावाभ्यामुत्पन्नस्तदा प्रश्नसिद्धौ द्विस्वभावं फलं वाच्यम् । अपरं सर्वत्र शुभे सुगममार्गेण कार्य्यसिद्धिः । अशुभे काठिन्येन कार्य्यसिद्धिः स्यात । एवं यदि प्रश्नो भिन्नत्वरूपो भवेत् । यथा रोगिणो रोगशांतिः बंधगतपुरुषस्य

बंधमोक्षः सगर्भा स्त्री सुखप्रसवा भविष्यति । इत्यादिप्रश्नं तदा पश्येत् । यदि तुला १५ रूपी द्वाभ्यां निर्गमाभ्यामुत्पन्नस्तदा भिन्नत्वरूपः प्रश्नः सिद्धिं प्रयाति । यदि द्वाभ्यां प्रवेशिभ्यामुत्पन्नस्तदा नो सिद्धिं प्रयाति । स्थिराभ्यामुत्पन्नो यदि तदा यथास्थितमेव तिष्ठेत् । यदि द्वाभ्यां द्विस्वभावाभ्यामुत्पन्नस्तदा द्विस्वभावं फलं वाच्यम् । आदौ कार्य्यसिद्धिः पश्चाद्धस्ताद्गमनं भवेत् । अपरं सर्वत्रैव शुभे रूपिणि सुगममार्गेण कार्य्यसिद्धिः । अशुभे काठिन्येन कार्य्यसिद्धिः स्यात् ।

अथ किंचिद्विशेष उच्यते ।

यदि इनकिलावं विनापि ज्ञातुमिच्छेत्कार्यम् ।तदा द्वाभ्यां रूपिभ्यां सौम्य उत्पन्नो भविष्यति । तदाह प्रश्नरमलस्य तुलागृहे यो रूपी पतितः स्यात्तथैव रूपद्वयेन सौम्यो भविष्यति इनकिलावे । यथा । स एव तुलारूपी इनकिलावस्य त्रयोदशचतुर्दशगृहे चागमिष्यति ताभ्यां तुलागृहे सौम्यो भविष्यति ।

अथ द्वितीयप्रकारेण इनकिलावः प्रोच्यते ।

तस्य नाम इनकिलावऔताद इति कथयंति रमलज्ञाः । तेन प्रष्टुराशायः सिद्धासिद्धत्वं वक्तव्यम् । तथा प्रातिदिनस्य प्रश्नादिकं वदेत् । तदाह । प्रश्नरमलस्य प्रथमगृहरूपिणं तथा चतुर्थ ४ गृहरूपिणं तथा सप्त ७ मगृहरूपिणं तथा दशम १० गृहरूपिणं गृह्णीयात् । एतान् गृहीत्वा मातृगृहं कारयेत् । तथा रमलमलंकारयेत् । एवं कृत्वा त्रयोदशचतुर्दश १३, १४ रूपिभ्यां प्रश्नसिद्धासिद्धौ चाज्ञां कारयेत् । प्रवेशिनिर्गमादिभिः पूर्ववत्फलं वाच्यम् ।

अथ तृतीयप्रकारेण इनकिलावः प्रोच्यते ।

अस्यापि नाम इनकिलावऔताद इति कथयंति तदाह प्रश्नरमलस्य प्रथमगृहरूपिणं त्रयोदशगृहरूपिणा गुणयेत् । तथा चतुर्थगृहरूपिणं चतुर्दशगृहरूपिणा गुणयेत् । तथा सप्तमगृहरूपिणं पंच-

दशगृहरूपिणा गुणयेत् तथा दशमगृहरूपिणं षोडशगृहरूपिणा गुणयेत्।एवं गुणयित्वा चत्वारो रूपिण उत्पाद्य तेषां मातृगृहं कृत्वा रमलमलंकारयेत् । तस्य चतुर्दशपंचदशगृहरूपिभ्यां प्रश्नसिद्धासिद्धौ प्रवेशिनिर्गमादिभिः पूर्ववच्चाज्ञां कारयेत् ।

अथ चतुर्थप्रकारेण इनकिलावः प्रोच्यते ।

अनेन प्रवासिनो विचारः कर्तव्यः । तथा रोगिणो विचारः । तथा पलायमानस्य विचारः कर्त्तव्यः । तथा चौरहृतवस्तुनो विचारः कर्त्तव्यः । तदाह । प्रथमप्रकारवत्प्रश्नरमलस्य मातरं दुहित्रा गुणयेत् । एवं चत्वारो रूपिण उत्पाद्य मातृगृहं विरच्य रमलमलंकारयेत् । एवं कृत्वा प्रवासगृहात् ९प्रवासिनः प्रश्नो वाच्यः । रोगिगृहा-६ द्रोगिणः प्रश्नो वक्तव्यः । बलिष्ठपुरुषस्य गृहाद्बलिष्ठस्य प्रश्नो वाच्यः । आधीनगृहादाधीनस्य प्रश्नो वाच्यः । भूतले स्थापितवस्तुनो गृहात्तस्य प्रश्नो वाच्यः । कोऽर्थः।चतुर्थगृहाद्भूतलस्थवस्तुनो विचारः कर्त्तव्यः । अनेन इनकिलावेन सर्वप्रश्नस्याज्ञां कारयेत् । अत्र मयोच्यते अयं इनकिलावः प्रथम एव वर्त्तते । परंतु प्रश्नस्याज्ञाकरणं तुला १५ गृहान्नास्ति । अत्र सर्वगृहेभ्यः सर्वप्रश्नानामाज्ञाकरणं वर्त्तते ।

अथ पंचम इनकिलावः प्रोच्यते ।

अनेन चौरहृतवस्तुनः प्रश्नो वक्तव्यः । तदाह । प्रश्नरमलस्य तृतीयगृहरूपी तथा सप्तमगृहरूपी तथैकादशगृहरूपी तथा पंचदशगृहरूपी एवं चत्वारो रूपिणो गृहीत्वा मातृगृहं विरच्य रमलमलंकारयेत् । अपरं चौरहृतगृहा ६ त्प्रश्नस्याज्ञां कारयेत् । कस्मात् । अस्मिन्निनकिलावे मातृगृहस्य मूलगृहं ३ दुहितुर्मूलगृहं ७ दौहित्री गृहस्य मूलगृहं ११ साक्षीगृहस्य मूलगृहं १५ मातृगृहरूपं ५ विरचितं वर्त्तत इति वचनात् ।

अथ षष्ठप्रकारेण इनकिलावः प्रोच्यते ।

प्रश्नमलस्य प्रथमगृहरूपिणो वह्निरूपं ग्राह्यम् । तथा द्वितीयगृहरूपिणो वायुरूपं ग्राह्यम् । तथा तृतीयगृहरूपिणो जलरूपं ग्राह्यम् । तथा चतुर्थगृहरूपिणो भूमिरूपं ग्राह्यम् । केवलो भवेद्वा युग्मं भवेत् । एवं प्रथमादिचतुर्भ्यः सोपानक्रमेण वह्न्यादिचतुरो गृहीत्वा चैकं रूपिणं घटयेत् । तं रूपिणं भिन्नं स्थापयेत् । अपरं तथैव पंचमादि चतुर्भ्योऽपि वह्न्यादिचतुरो गृहीत्वा चैकं रूपिणं कारयेत् । अनेन रूपिणा भिन्नस्थं रूपिणं गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं रूपिणं पश्येत् । यदि स रूपी शुभो भवेत्तथा प्रवेशी तदा मनोऽभिप्रायः सिद्धिं प्रयाति । यदि रूपी अशुभो भवेत्तथा निर्गमस्तदा तु मनोभिप्रायः सिद्धिं नो प्रयाति । स्थिरश्चेत्तदा स्थिरत्वे मनोऽभिप्रायः पतेत् । यदि द्विस्वभावो भवेत्तदा द्विस्वभावे पतेत् ।

अथ सप्तमप्रकारेण इनकिलावः प्रोच्यते ।

प्रश्नरमलस्य मातृचतुष्टयरूपिणां वह्निरूपं गृहीत्वा एकं रूपिणं कारयेत् । तथा दुहितृचतुष्टयरूपिणां वायुरूपं गृहीत्वा एकं रूपिणं कारयेत् । तथा दौहित्रीचतुष्टयरूपिणा जलरूपं गृहीत्वा एकं रूपिणं कारयेत् । तथा साक्षिचतुष्टयरूपिणां भूरूपं गृहीत्वा एकं रूपिणं कारयेत् । एवं चत्वारो रूपिण उत्पाद्य मातृगृहं विरच्य रमलमलंकारयेत् । अत्रापि सर्वगृहेभ्यः सर्वप्रश्नानां चाज्ञां कारयेत् ।

अथाष्टमप्रकारेण इनकिलावः प्रोच्यते ।

अस्मिन् इनकिलावे तुलारूपी विपर्य्ययरूपो नो भवेत् । कोऽर्थः यो रूपी प्रश्नरमलस्य तुला १६ गृहं पतितः स एव रूपी इनाकिलावे कृतेऽपि तुलागृहे चागमिष्यति । तदाह । प्रश्नरमलस्य प्रथम गृहरूपिणं वाम्मि ⠿ रूपिणा गुणयेत् । तथा द्वितीयगृहरूपिणं लोहित ⠿ रूपिणा गुणयेत् । तथा तृतीयगृहरूपिणं

विधु रूपिणा गुणयेत् । तथा चतुर्थगृहरूपिणं सौरि रूपिणा गुणयेत् । एवं गुणयित्वा चत्वारो रूपिण उत्पाद्य तेषां मातृगृहं विरच्य रमलमलं कारयेत्तदा तुलाविपर्ययरूपो नो भवेत्तेन तुलारूपिणा तथा त्रयोदशगृहरूपिणा चतुर्दशगृहरूपिणा च सर्वप्रश्नं ब्रूयात् । एभिस्त्रिभीरूपिभिः सर्वप्रश्नस्य सिद्धासिद्धत्वे चाज्ञां कारयेत् । परन्तु प्रवेशिनिर्गमादिप्रकृतिसहितैः मिश्रे मिश्रं फलं वक्तव्यम् ।

अथ नवमप्रकारेण इनकिलावः प्रोच्यते ।

अयं इनकिलावरमलः संवत्सरस्य वर्त्तते । तेन संपूर्णवर्षस्य फलं ब्रूयात् । अस्य व्याख्यानं मिश्रप्रकरणे कथयिष्यामि । यदीश्वरेच्छा वर्त्तते ।

अथ प्रश्नरमले वाग्मिप्रभृतीनां प्रकर्षफलानि प्रोच्यंते ।

यदि प्रश्नरमले रूपिणां रूपाणि चतुः पंचादिप्रभृतीनि भवंति तन्नाम पारशीवचने गलावा इत्यच्युते । तत्रादौ वाग्मिनः अन्वादेशफलं प्रष्टुः शरीरे बलाधिक्यं भवेत् नीरोगायुश्च वक्तव्यम् नष्टवस्तुनो लाभः स्यात् । युद्धप्रश्ने रणादिकं भवेच्छुभवस्तुनो दर्शनं स्यात् । परमपदवीं प्राप्नोति प्रष्टा, रोगिणः कुशलं वक्तव्यम् । बंधगतपुरुषस्य च कुशलत्वं वाच्यम् । बंधमोक्षोऽपि स्यात् । शरीररोगप्रश्ने शरीरजं रोगं व्रणविचर्चिकामसूरिकादिकं वदेत् । मित्रप्रश्ने मित्रत्वं भवेत् । यदि चेत्केवलमित्रगृहेषु वाग्मिनः प्रकर्षो भवेत्तदातीव मित्रत्वं वक्तव्यम् । यदि च शत्रुगृहेषु प्रकर्षो भवेत्तदा शत्रुत्वं वक्तव्यम् । तत्र तनुप्रभृतिषु मित्रगृहाणि ३, ५, ९, ११, शत्रुगृहाणि ४, ७, १०, १२, मिश्रस्थले प्रकर्षश्चेत्तदा मिश्रफलं वाच्यम् ।

अथ तीक्ष्णांशोः प्रकर्षफलम् ।

जीवनवृत्तिप्राप्तिस्तथा निमित्तप्राप्तिः स्यात् । स्वगृहे वस्तु बहुतरं

भवेत् । यत्कार्य्यं महता कष्टेन सिद्ध्यति तच्छीघ्रतया भवेत् । गमनं नो भवेत् । इतस्ततोऽपि नो प्रचलेत् । नष्टवस्तुनः प्राप्तिः स्यात् ॥ २ ॥

अथ पातरूपिणः प्रकर्षफलम् ।

यद्वस्तु नष्टं यातं तथा यद्वस्तु चौरादिभिर्हृतं तथा यद्वस्तु पलायमानं यातं वर्त्तते तेषां प्राप्तिर्न स्यात् । मनोऽभिप्रायः सिद्धिं नो प्रयाति । द्रव्यादिकं हस्तगतं नो तिष्ठेत् । प्रष्टा कुकर्म्मणि पतेत् । रणादिकं भवेत् । केनापि प्रसंगेन रोदनं कारयेत् । मिथ्यापवादं स्वात्मानं लापयेत् स्त्रीपुरुषयोर्मध्ये मित्रता भवेत् ॥ ३ ॥

अथ सौम्यस्य प्रकर्षफलम् ।

सर्वकार्य्याणि बंधनानि भवंति । उपद्रवो भवेत् बहुक लहोऽपि स्यात् । यस्मिन्कार्य्ये चोपद्रवाधिक्यं तदेव कार्य्यं भवेत् । रोगिणः क्षेमं वक्तव्यम । सगर्भायाः स्त्रियाश्चापि कुशलत्वं वक्तव्यम् । अयं सौम्यरूपी सर्वरूपिणां रक्षकः । अत एव सर्वरूपिणां सांगत्ये चास्य सौम्यस्य मेलनं वर्त्तते । अस्य सौम्यस्य साक्षीभूतः सप्तम ७ गृहे द्रष्टव्यः ॥ ४ ॥

अथ दैत्यार्चितस्य प्रकर्षफलम् ।

आह्वानं कारयेत् । प्रष्टा कश्चित्पुरुषोपरि बलिष्ठो भवेत् । स्वमित्राह्वानं कारयेत् । दूरतरस्य कार्य्यस्य सिद्धिर्न स्यात् । इदं कार्य्यं दूरतरं वर्त्तते कठोरवृत्तान्तमिदं न वर्त्तते । अनायासेन परकीयेनापि पुरुषेण मनोऽभिप्रायः सिद्धिं प्रयाति । गर्भे पुत्रसंभवो भविष्यति । अस्य दैत्यार्चितस्य साक्षी भूतो नवम ९ गृहे द्रष्टव्यः ॥ ५ ॥

अथ मंदगस्य प्रकर्षफलम् ।

कलहो भवेत् । बन्धो भवेत् । बंधगृहे बद्धः पुरुषो भवेत् । मनसि

म्लानता स्यात् । कश्चन पुरुषं ताडयेत्प्रष्टा कश्चन पुरुषं बंधयेत् । पुनः प्रष्टा कस्य चित्पुरुषस्य यातनां कारयेत् । अपरं नवयचतुष्पदस्य प्राप्तिः स्यात् । अपरं कुताश्चित् दुम्मकस्य यूथं प्रापयेत प्रष्टा ॥ अस्य मंदगस्य साक्षी भूत एकादश ११ गृहे द्रष्टव्यः ॥ ६॥

अथ सौरिरूपिणः ☰ प्रकर्षफलम् ।

मनसः संकीर्णता स्यात् । अपरं मनसि विषण्णः स्यात् । शीघ्रतया प्रवासी स्वगृहं प्राप्तः स्यात् । प्रथमगर्भयुतायाः स्त्रिया अनिष्टं वर्त्तते भयं वापि भवेत् । बंधगृहे बंधगतपुरुषस्य निषिद्धतरं वर्त्तते रोगिणः द्विस्वभावं वाच्यम् । मृत्युः स्यादथवा रोगशांतिः स्यात् । अपरं यद्वस्तु नष्टं स्यात्तथा चौरहृतं पलायमानं च स्यात्तस्य वस्तुनः स्वहस्ते प्राप्तिः स्यात् । अस्य सौरिरूपिणः साक्षीभूतः सप्तमगृहे द्रष्टव्यः ॥ ७ ॥

अथ लोहितस्य ☰ प्रकर्षफलम् ।

वस्तूनां क्षयत्वं भवेत् । शरीरे भयं भवेत् रुधिरपतनं स्यात् । सर्वकार्य्याणि कठोरतराणि भवंति । यदि लोहितस्य पातरूपी साक्षीभूतो भवेत्तदा धूम्रं वाच्यम् । तथा वह्निर्वर्त्तते । सगर्भायाः स्त्रियाः पूर्णमासो वर्त्तते । बंधगतस्य पुरुषस्य मनसि म्लानता बहुतरा स्यात् । पृथ्वीपतेः सकाशात्कार्यस्य याचनं सम्यग्वर्त्तते चौरः प्रसिद्धः स्यात् । यदि लोहितस्य प्रकर्षस्तस्मिन्गृहे स्यात् । यस्माद्गृहात्प्रथमगृहं तनुस्थानं पश्येत् । तथा सप्तमगृहं पश्येत्तदा मनसि म्लानता स्यात् । दृष्टिविवरणं पूर्वं कथितं मया । अपरं यदि लोहितस्य प्रकर्षस्तनुस्थाने नो भवेत् । तथा यस्माद्गृहात्तनुस्थानं नो पश्यति तदाऽभक्ष्यस्य भक्षणं स्यात् । सुरापानं स्यात् । कुकर्म्म कारयेत् प्रष्टुरुपद्रवो भवेत् । यदि प्रथम १ तृतीय ३ पंचम ५ नवम ९ गृहेषु लोहितः पतितः स्यात्तदापि कुकर्मनिरतो भवेत् । तथा मद्यपः स्यात ॥ ८ ॥

अथ विधुरूपिणः —/—/∘/— प्रकर्षफलम् ।

भारगुरुत्वं वर्त्तते।सर्वकार्य्येष्वालस्यता स्यात्।सगर्भायाः स्त्रियाः पूर्णमासो वर्त्तते । यदि प्रश्नसमये विधुरूपिणो लोहितस्य रूपमुत्पद्यते । तदा रोगिणो मृत्युः स्यात् । बंधगतपुरुषाणां बंध-गृहान्मोक्षः स्यात् । यः पृथ्वीपतेर्याचकस्तस्य निषिद्धतरं भवेत् । यत्र यत्र याचते तत्र तत्र तस्यैव वस्तुनः क्षीणता स्यात् ॥ ९ ॥

अथोष्णगुरूपिणः ∘/∘/—/— प्रकर्षफलम् ।

केनचित्पुरुषेण सह कलहो भवेत् । धूर्तत्वं भवेद्वा मनसः संकीर्णता स्यात् । शोकः स्यात् । रोगिणो निषिद्धतरं भवेत् । उपद्रवाधिक्यं भवेत् । यः प्रवासं कुर्यात् तस्य समीचीनं भवेत् । प्रवासे कृते सति मनोऽभिलषितकार्य्यसिद्धिः स्यात् । परंतु शीघ्रतया स्वगृहे प्रत्यागमनं भवेत् । सैन्यानां बलाधिक्यं भवेत् । तथा वहु सैन्यं स्यात् । अपरं यद्वस्तु हस्ते तिष्ठति तस्य वस्तुनो हस्ताद्गमनं भवेत् । अस्योष्णगुरूपिणः साक्षीभूतस्तृतीयगृहे द्रष्टव्यः ॥ १० ॥

अथ सूरिरूपिणः —/—/∘/∘ प्रकर्षफलम् ।

रोगिणो रोगशांतिः स्यात् । कुतश्चिन्मृतकस्यागमनं भवेत् तथा मृतकस्य दर्शनं स्यात् । कार्य्येषु गमनागमनं सुगमोपायो भवेत् । अपरं प्रवासमध्ये कश्चित्सुगमोपायो भवेत । भोः पृच्छक द्रुमचतुष्पदानां समूहस्य वार्ता वर्त्तते नौकाया आगमनं भवेत् । चौरहृतवस्तुन आगमनं भवेत् । वहुदिनेषुव्यतीतेषु प्रवासिन आगमनं भवेत् ॥ ११ ॥

अथ वक्रस्य ∘/∘/∘/— प्रकर्षफलम् ।

संपूर्णकार्य्याणि हस्तगतानि भवंति । निषिद्धानि मनोवांछित-कार्य्याणि सिद्धयन्ति । यथा ककर्म स्त्रिया सह उपद्रवादयः

रोगिणो रोगशान्तिः स्यात् । प्रवासी तूर्णं गृहं प्रत्यागच्छेत् । अथवा प्रवासिनो वृत्तांतप्राप्तिः स्यात् ॥ १२ ॥

अथाररूपिणः ⸪ प्रकर्षफलम् ।

प्रष्टुः शरीरे गुप्तभयं भवेत् । प्रष्टुश्चित्ते निषिद्धतरः संदेहः बहुतमो भवेत्।एकस्मिन्कार्य्ये द्रव्यादिकं याचेत तेन प्रष्टुः शरीरे भयं भवेत् । चौरैर्वस्तुनो हरणं भवेत् । अथवा भोः पृच्छक इयं वार्त्ता चौरहृतवस्तुनो वर्त्तते । हस्ताद्गमनं भवेद्वस्तूनाम् । अथवा भोः पृच्छक हस्ता न्नष्टवस्तुनो वार्त्ता वर्त्तते । प्रवासिनः क्षीणता स्यात् । यदि वा आरः प्रकर्षतां कुर्यात्तदा शरीरे क्षतादिकं बहुतरं भवेत् वर्त्तते वा ॥ १३ ॥

अथ कविरूपिणः ⸪ प्रकर्षफलम् ।

भोः पृच्छक यत्कार्य्यादिकं तथा नृपतेजस्त्वादिकं च हस्ताद्गतं भवेत्तस्य वार्त्ता इयं वर्तते । प्रवासस्य वार्ता वर्तते । पृथिवीपतेर्याचकस्य भाग्योदयः स्यात् । बंधगतस्य बंधमोक्षः स्यात् । भूकटकं सत्यं भवेत् । प्रष्टुर्मनसि प्रसन्नता स्यात् । द्रव्यादीनामाधिक्यता भवेत् । तथा जीवनवृत्तीनामाधिक्यता वाच्या ॥ १४ ॥

अथ बोधनस्य ⸪ प्रकर्षफलम् ।

बृहच्चतुष्पदानामियं वार्त्ता वर्त्तते । भोः पृच्छक अपरं ये मनुष्या रणाय यांति तेषां शूराणां वार्त्ता वर्त्तते। भोः पृच्छक प्रवासिनां वार्त्ता वर्त्तते बंधगतानां शीघ्रतया बंधमोक्षः स्यात् । मिथ्याप्रवासो भवेत्कोऽर्थः प्रवासो न स्यात्। रोगिणः पुरुषस्य निषिद्धतरं वर्त्तते।किमर्थं निषिद्धतरं वर्त्तत इत्येतस्य प्रयोजनमाह । अस्य बोधनस्य स्वरूपं ⸪ शबराज्येव । अत एव रोगिणां निषिद्धतरं वाच्यम् । सगर्भा स्त्री मृत्युं प्राप्नोति । यदि वा स्वरूपिणः साक्षीभूतः स्यात् । नेष्टगृहे साक्षीभूतं नेष्टम् भव्यगृहे चेत् भव्यं वाच्यम् ॥ १५ ॥

अथ शीतांशोः प्रकर्षफलम् ।

प्रष्टुर्मनोवांछितकार्यं दूरतरं भवेत् । कोऽर्थः बहुदिनव्यतीते मनो-

वांछितकार्यसिद्धिः स्यात्। परिणामे मनोभिलषितं सिद्ध्येत्। अपरं या नवोढा पुरुषं प्रति नो गता स्यात्तस्या वार्त्ता वर्त्तते। अपरं रोगग्रस्तजनस्य निषिद्धतरं वर्त्तते। यदि च शीतांशोः प्रकर्षः स्वल्पो भवेत्रिचतुःपंचपरिमिता एव स्युस्तदा रोगग्रस्तपुरुषो रोगान्मुच्येत्। रोगशांतिः स्यात्सर्वथैव यदि बहुरूपाणि भवंति। तदा ध्रुवं रोगिणो मृत्युः राज्ञः समीचीनं भवेत्। अपरं तथा प्रताप-तेजस्त्वकर्तुः समीचीनं भवेत्। एवं षोडशगृहरूपिणं चतुर्थः गृहः फलं ददाति। यथा पूर्वं गृहाणां विचारांशे प्रोक्तम् ॥ १६ ॥ अथ प्राचीनग्रंथेषु कश्चिद्विशेषः कथितो वर्त्तते । यदि चारलोहित ⁝ ⁝ वक्रा ⁝ इमे त्रयो रूपिणः प्रश्नरमलस्य प्रथमगृहे यद्यागच्छन्ति वा प्रश्नरमलेषु प्रकर्षं कुर्वन्ति तदा एवं वक्तव्यम्। यदि पुरुषः प्रश्नं पृच्छति तदा स स्त्रीभोगं कृत्वाऽस्नात्वाऽपवित्रत्वेन प्रश्नार्थं समागतः अथवा यदि काचित्स्त्री प्रश्नं पृच्छति तदा सा स्त्री पुरुषेण संभोग कारयित्वा वा रजस्वलाभूताऽपवित्रत्वेन प्रश्नार्थं समागता ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे द्वितीयप्रकरणस्य व्याख्यानम् ॥

---

# अथ तृतीयप्रकरणम्।

---

## प्रथमोऽध्यायः ।

अस्मिन्तृतीयप्रकरणे तन्वादिभावक्रमेण संपूर्णप्रश्नकथनस्य व्याख्यानं वर्त्तते । तस्य तन्वादिद्वादशाध्यायाः सन्ति । तत्रादौ प्रथमाध्याये प्रथमगृहस्य प्रश्नकथनम् यदि प्रष्टा स्वशरीरजीवयोः प्रश्नं कुर्यात्तदा द्रष्टव्यः स रूपी यः प्रथमगृहे समागतो वर्त्तते। यदि स रूपी निर्गमो वर्त्तते। तदा एवं विचारांशो ज्ञेयः अस्य प्रष्टुर्मनः अन्यत्र कुत्रापि वर्त्तते। कुत्रापि गमनस्येच्छां करोति।अथवा भिन्नस्थ-

पुरुषेभ्यः किंचित् याचते प्रष्टा यदि स एव निर्गमः शुभो भवेत्तदा एवं ज्ञेयम् प्रष्टुरिच्छया कष्टेन च गमनादिकं भूयात् । यदि स एव निर्गमः अशुभो भवेत्तदा एवं विचारांशो वर्त्तते प्रष्टुर्मनसि ग्लानता वर्त्तते तथा वस्तूनां क्षीयमाणत्वं अस्थायित्वेन स्यात् । यदि स रूपी शुभप्रवेशी भवेत्तदा विचारांशः अस्मिन्वाक्योपरि वर्त्तते । तदाह । प्रष्टुर्मन एक वस्तूपरि वर्त्तते । यद्वस्तु प्रष्टुरग्रतो दूरे तिष्ठति। तद्वस्तु सिद्धं कर्तुमिच्छति प्रष्टा अथवा केषां चित्संमेलनार्थं पृच्छति अपरं मनसः प्रसन्नतोपर्य्यपि विचारांशो वर्त्तते । अपरं स्थायित्वेन स्थितिः स्यादयमपि विचारांशे वर्त्तते अपरं यदि स रूपी अशुभ-प्रवेशी भवेत्तदा प्रष्टुर्मनोऽभिप्रायः काठिन्येन सिद्ध्येत् । अथवा प्रष्टा तं मनोऽभिप्रायं काठिन्यरूपं जानाति । अपरं स्वशरीर-स्य स्थितिस्स्थायित्वेन स्यादयमपि विचारांशो वर्त्तते । अनि-च्छयावस्थितिः स्यात् । एवं स्वात्मनः स्थितिः स्यादयमपि वि-चारांशो वर्त्तते । अपरोऽपि विचारांशो वर्त्तते । तदाह । प्रष्टा धर्म-वेतृत्वमिच्छति वा केनापि सह कलहादि कर्तुमिच्छति । अथवा प्रवासिनः प्रश्नं कर्तुमिच्छति । अपरं स्थायित्वेन मनः संकीर्णं भवेदिदमपि विचारांशे वर्त्तते । अपरं यदि प्रथमगृहरूपी द्विस्व-भावो भवेत्तदा प्रष्टुर्द्विविधं मनो भवेदेवं विचारांशे वर्त्तते । अपरं तस्य वर्तमानाऽवस्था विपर्य्ययरूपं प्राप्नुयात् । कोऽर्थः । अशुभावस्था शुभा स्याच्छुभाऽशुभा भवेदित्यर्थः । अपरं कस्मिन्नपि कार्य्ये प्रष्टा विषण्णमनाःस्यात् । अपरं समयं-२, प्रति प्रष्टैकैकप्रकारस्य चिन्तां कारयेत् पुनस्तां चिंतां दूरीकृत्य तिष्ठेत् । यदि स रूपी द्विस्वभावः शुभो भवेत्तदा स्थायित्वेनैव तत्सर्वं स्यात् । अपरं तत् कार्य्यं स्याद्यस्मिन् कार्य्ये प्रष्टा सौख्यं यायात् । अपरमपि विचारांशो वर्त्तते । शरीरं नीरोगित्वेन तिष्ठेत् । अपरं यदि स द्विस्वभावः अशुभरूपी

भवेत्तदा दुःखोपरि तथा क्रोधोपरि विचारांशा वर्त्तते ⁝ निषिद्ध-कार्यं प्रसंगेन भूयात्। अपरमेवं यदि प्रथमगृहे मंदगा ⁝ रयो ⁝ मध्ये चैकोऽपि यद्यायाति तदा प्रष्टा सदा सर्वतः संयमेन तिष्ठेत्। केनापि प्रतिवादविवादादिकं कुकर्म्मादिकं न कुर्यात्। अपरं यदि स प्रथमगृहरूपी स्थिरो भवेत्तदा प्रष्टुर्मनसि चिन्ता संभावना बहुतरा भवेत्। तथा तस्यावस्था बद्धा भवेत्। तथा प्रष्टा विषण्णमना भवेत्। अपरं यदि स्थिररूपी शुभो भवेत्तदा एकं कार्य्यमेतादृशं स्याद्यस्मिन्मध्ये मंगलकुशलक्षेमादीनां संबंधो भवेत्। अपरोऽपि विचारांशो वर्तते नीरोगित्वेन शरीरं तिष्ठेत्। अपरं यदि स थिरोऽशुभरूपी भवेत्। यथा ⁝ यम्। तदा निषिद्धकार्य्योपरि विचारांशो वर्त्तते। अत एव प्रष्टा निषिद्ध-कार्यं कुर्यात् तथा भयत्रासोपरि विचारांशो वर्तते। तस्मादेतयोः संयमं कर्यात्।

अथ कश्चिद्विशेष उच्यते।

अस्य प्रथमगृहस्य भूतकालो द्वादशगृहं ज्ञेयम्। एवं वर्त-मानकालस्तु स्वयमेव प्रथमं गृहम्। अस्य प्रथमगृहस्य भवि-ष्यकालो द्वितीयगृहं ज्ञेयम्। यदि भूतकालगृहे शुभरूपी समा-गतः स्यात्तदा पूर्वावस्था शरीरस्य शुभाभूत्। अशुभे रूपिणि भूतकालगृहे तिष्ठति तदा पूर्वाऽवस्थाऽशुभा भवेत्। एवं वर्त्त-मानकालगृहे शुभरूपी पतितः स्यात्तदा शरीरस्य वर्त्तमानाऽवस्था समीचीना वक्तव्या। अशुभे रूपिण्यशुभाऽवस्था वर्त-माना ज्ञेया। एव यदि भविष्यकालगृहे शुभरूपी समागतः स्यात्तदाग्रे शरीरस्य शुभावस्था आगमिष्यति। अशुभे रूपिण्यशु-भावस्थाग्रे चागमिष्यति। एवं भूतभविष्यद्वर्त्तमानकालेषु प्रवेशि-रूपेण शरीरस्य पुष्टत्वं निर्गमरूपेण क्षीणत्वं स्थिररूपेण यथा स्थितमेव पुष्टत्वं द्विस्वभावरूपिषु पुष्टत्वं क्षीणत्वं च यथा

पूर्वोक्तं मया । अपरेषां प्रश्नानां रचनत्वनष्टत्वयोः प्रयोजनं प्रथमगृहरूपिणोऽन्वादेशेन वक्तव्यम् । तद्यथा रमलार्णवग्रंथेषु व्यक्तद्वारेण व्याख्यानं कृतं वर्त्तते । तदाह । यदि प्रष्टुः प्रश्नः शरीराऽवस्थाजीवादीनां वर्त्तते तदा प्रश्नरमलस्य प्रथमगृहे द्रष्टव्यं को रूपी पतितो वर्त्तते । यदि स शुभरूपी भवेत्तदा शरीरस्य बलाधिक्योपरि विचारांशो वर्त्तते । तथा प्रष्टुर्ज्जीवस्तेजस्वरूपो वर्त्तते । अयमपि विचारांशो यस्य प्रतिष्ठामहत्वं लोके बहुतरं भवेत् । अपरं शरीरस्य स्वास्थ्योपरि विचारांशो वर्त्तते तथा प्रकृतिः समानरूपा तिष्ठेद्यस्माद्रोगोत्पत्तिर्न स्यात् । तथा प्रष्टुः स्वावस्थायाः शुभत्वं भवेत् । अपरं यद्ययमेव रूपी दशम १० गृहेन्वादेशं कुर्यात्तदा चाधिक्यपदवा स्यात् । तथा पृथ्वीपतेर्जीवनवृत्तिबलादिकं प्राप्नुयात् । तथा तैः शिक्षां प्राप्नुयात् । तथा मातृभिः शुभत्वं पश्येत् । कर्म्मकारितेजस्त्वादिभिः शुभत्वं पश्येत् । एवं यदि चैकादशगृहे ११ प्रथमगृहरूपी चान्वादेशं कुर्यात्तदा मित्रैः सह फलं प्राप्नुयात् । तैराशां प्राप्नुयात् । एवं यदि पंचमगृहे५,ऽन्वादेशो भवेत्तदा प्रष्टा प्रसन्नो भवेत् । तथा इष्टिलग्नपुरुषैः संतानैश्च शुभत्वं पश्येत् । तथा समीचीनां वार्त्तां शृणुयात् । कुतश्चिन्नूतनशुभवस्तूनां प्राप्तिः स्यात्।एवं यदि षष्ठगृहेन्वादेशो भवेत्तदा प्रष्टुःप्रकृतिर्विपर्य्ययरूपा । एवं यदि सप्तमगृहेऽन्वादेशो भवेत्तदा स्त्रीणां बल वाच्यम् । तथा स्पर्धिपुरुषाणां दुष्टानां च बलं भवेत् । एतैः सार्द्धं कलहो भवेत् । एवं यदि चाष्टमगृहे ८ ऽन्वादेशस्तदा किंचिद्भयं भवेत् । एवं यदि नवम ९ गृहेऽन्वादेशो भवेत्तदा प्रवासः स्यात् । एवं यदि द्वादश १२ गृहेऽन्वादेशो भवेत्तदा दुष्टैः सह दुःखं प्राप्नुयात् । परन्तु बृहच्चतुष्पदानामवस्था समीचीना वर्त्तते । अपरं यदि प्रथमगृहस्य रूपी अशुभो भवेत्तदा सर्वं विपर्य्ययमूलं वाच्यम् । तदाह । शरीरस्य हीनबलोपरि

विचारांशो वर्त्तते । तदा प्रष्टुर्जीवः अधिरूपस्तेजस्त्वरहितो ज्ञेयः । क्लेशवेष्टितशरीरः सदा तिष्ठेत् । तथा प्रकृतिर्विपर्य्ययरूपा स्याद्य-स्माद्रोगोत्पत्तिस्तथा प्रष्टुरवस्था समीचीना भवेत् । अपरं यद्यय-मेव रूपी दशम १० गृहेऽन्वादेशो भवेत्तदा हीना पदवी स्यात् । तथा पृथ्वीपतेर्जीवनवृत्तिबलादिकं नो प्राप्नुयात् । यदि प्राप्नुयात्त-र्हिं नेष्टं फलं वाच्यम् । तथा तस्मात् शिक्षां न प्राप्नुयात् । तथा मातृभिः शुभत्वं नो पश्येत् । तथा कर्म्मकारितेजस्त्वादिभिः शुभत्वं नो पश्येत् । एवं यदि चैकादशगृहेऽन्वादेशो भवेत्तदा मित्रैः फलं न प्राप्नुयात् । तथाऽमित्रैः फलाप्राप्तिर्न स्यात् । एवं यदि द्वादश १२ गृहेऽन्वादेशो भवेत्तदा शत्रुभिर्दुःखं पश्येत् । परंतु दुष्टानामवस्था निषिद्धतरा स्यात् । एवं यदि पंचमगृहेऽन्वादेशो-भवेत्तदा प्रष्टुर्मनसि म्लानता स्यात् । तथा दृष्टिलग्नपुरुषः संतानैश्च शुभत्वं नो पश्येत् । तथा समीचीनं वृत्तांतं न शृणुयात् । एवं यदि षष्ठगृहेऽन्वादेशो भवेत्तदा प्रकृतिर्विपर्य्ययरूपा स्यात् । रोगोत्पत्तिः स्यात् । एवं यदि सप्तमगृहेऽन्वादेशो भवेत्तदा स्त्रीभिस्तथादुष्टैः सह कलहो भवेत् । एवं यदि चाष्टमगृहेऽ-न्वादेशो भवेत्तदा भयं त्रासश्च भवेत् । एवं यदि नवमगृहे-ऽन्वादेशो भवेत्तदा प्रवासे कृते नेष्टं फलं लभेत् । अपरं यदि प्रथम-गृहे शुभाशुभैः समानरूपी पतितः स्यात्तदा प्रष्टुरवस्था मध्यमा वाच्या शुभेष्वप्यशुभेष्वपि । अपरं यस्मिन्गृहेऽन्वादेशं कुर्या-त्तदा बलसदृशं फलं वाच्यम् । प्रवेशिनिर्गमस्थिरद्विस्वभावरूपैः फलं वाच्यम् । शुभाशुभत्वेन च । यथा पूर्वं कथितं मया एकविं-शतितमाऽध्याये । अथ प्राचीनग्रंथेषु कश्चिद्विशेषः कथितो वर्त्तते । तदाह । यदि प्रष्टा पृच्छति । भो रमलज्ञ ममायुर्दायः स्थिरो भवति वा स्वल्पैरेव दिनैः क्षयमेष्यति । तदा प्रश्नरमलस्य प्रथमगृहरूपिणं चतुर्थगृहरूपिणा गुणयेत् । ताभ्यां यो रूपी चोत्पन्नो भवत्तेन चाज्ञां

कारयेत् । प्रवेशिना मत्युं न प्राप्नोति । निर्गमेन मृत्युं प्राप्नुयात् । स्थिरेणायुर्दायः स्थिररूपो भवेत् । द्विस्वभावेन कतिपयादिनोपरि लोकान्तरप्राप्तिः शुभेन स्थिरत्वमशुभेन क्षीयमाणत्वमायुर्दायस्य । अथ यदि कार्यप्रारंभप्रश्नो भवेत् तदा प्रश्नरमलस्य प्रथमगृह-रूपिणं चतुर्दशगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन चाज्ञां कारयेत् । प्रवेशिनिर्गमाभ्यां तथा स्थिरद्विस्वभावाभ्यां प्रवेशि-निर्गमसंधिरूपकार्यस्य प्रारंभः स्यात् । निर्गमेन नो स्यात् । स्थिरेण स्थिरत्वं प्रारंभे द्विस्वभावेन द्विविधत्वं वर्त्तते प्रारंभ-करणे शुभे रूपिणि सुगममार्गेण । अशुभे काठिन्येन प्रारंभः स्यात् । एवं भिन्नत्वरूपस्य कार्यप्रारंभो निर्गमेन स्यात् प्रवेशिना न स्यात् । स्थिरेण स्थिरत्वं द्विस्वभावेन द्विविधत्वं प्रारंभे वा-च्यम् । अपरं सर्वत्र शुभे सुगममार्गेण प्रारंभः स्यात् । अशुभे काठिन्येन प्रारंभः स्यात् । श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ।

अथ शरीरस्य क्षतादिकज्ञानार्थमेकं रहस्यं प्रोच्यते ।

क्षतादिकन्तु नाकिसरूपिणा विचारयंति रमलज्ञाः । तदाह । ये विषमबिंदुरूपिणः संति प्रश्नरमलस्य तुलागृहे नागच्छंति तेषां नाम नाकिस इति कथयंति रमलाचार्यास्ते चाष्टपरिमिताः संति।यथा इमे ०——— ———० —०—— ——०० ००—० ०—०० ०००— —००० एवं विज्ञाय पश्येत् तदा द्रष्टव्यम् प्रश्नरमलस्य कस्मिन्गृहे नाकिसरूपी समागतो वर्त्तते । तदंगे क्षतादिकं ब्रूयात् । कस्मात् गृहेष्वसंबंधो वर्त्तते रूपिषु च क्षतादिकस्य रूपी वर्त्तते तस्माद्गृहसदृशेंगे रूपिसदृशं क्षतादिकं चिह्नं वाच्य-मिति वचनात् । तत्रादौ गृहेष्वंगसंबंधमाह । तत्र प्रथमगृहं १ शीर्षोपरि तथा मुखमंडलोपरि विचारांशो वर्त्तते एवं द्वितीयगृहे २ नाड्युपरि तथा ग्रीवोपरि विचारांशो वर्त्तते । एवं तृतीयगृहे ३ स्कंधोपरि तथा भुजमणिबंधकरोपरि विचारांशो वर्त्तते । तथा-करांगुल्युपरि । एवं चतुर्थगृहे ४ वक्षःस्थलोपरि तथा पृष्ठोपरि

विचारांशो वर्त्तते एवं पंचमगृहे ५ पंजरोपरि तथा कुक्ष्युपरि विचारांशो वर्त्तते। एवं षष्ठगृहे ६ उदरोपरि तथा नाभ्युपरि विचारांशो वर्त्तते। एवं सप्तमगृहे ७ लिंगोपरि तथा गुदोपरि तथांडोपरि विचारांशो वर्त्तते। एवमष्टमगृहे ८ नितंबोपरि तथोरुजंघोपरि विचारांशो वर्त्तते। एवं नवमगृहे ९ जंघाग्रे प्लीहयोरुपरि विचारांशो वर्तते। एवं दशमगृहे १० जानूपरि विचारांशो वर्त्तते। एवमेकादशगृहे ११ गुल्फयोरुपरि। एवं द्वादशगृहे १२ चरणयोरुपरि विचारांशो वर्त्तते। अथ रूपिणां विचारांशो नानाप्रकारक्षतोपरि ⁞ अस्य विचारांशस्तत्क्षतोपरि य अभ्यंतरादुत्पद्यते। यथा व्रणपामाविचर्चिकादयः। एवं य आभ्यंतरीयरुधिरविकारात्प्रकटो भवति। शरीरिणः शरीरं क्लेशं नो ददाति। कोथा यैर्व्रणादिभिः शरीरे क्लेशो नो भवेत्तेषां व्रणादीनां शरीरे क्षतं वक्तव्यम्। अथ सौरि ⁞ रूपिणो विचारांशस्तत्क्षतोपरि वर्त्तते यः प्रकटहेतुनोत्पद्यते। यथा उच्चस्थानात्पतनं वृक्षात्पतनं भित्तितः पतनम्। तेन शरीरे क्षतं स्यात्। अथवा केनापि पाषाणेन ताडितं स्यात्तेन शरीरे क्षतं वाच्यम्। तथांगानां भग्नत्वात्क्षतं वाच्यम्। शरीर एवमन्यदपि विचारणीयम्। अथ लोहित ⁞ रूपिणो विचारांशो वर्त्तते तत्क्षतोपरि यः प्रकटहेतुनोत्पद्यते। यथा वह्निना दग्धत्वं तेन क्षतं शरीरे स्यात्। अथवा तेन जीवेन दंशितं यो विदारयित्वा भक्षति। यथा व्याघ्रवृकचित्रकादयः तेन शरीरे क्षतं भवेत्। अथवा विषधरजीवानां दंशनात्क्षतं शरीरे स्यात्। यथा सर्पवृश्चिकश्वानशृगालादयः। अथवा केनापि लोहरूपेण शरीरे क्षतं स्यात्। एवमन्यदपि विचारणीयम्। अथ विधुरूपिणो ⁞ विचारांशस्तत्क्षतोपरि वर्त्तते यः प्रकटहेतुना गुप्तहेतुना चोत्पद्यते। अपरं तस्य रोगस्य प्रकटत्वं शीतत्वं कफादिभिः स्यात्। तेन शरीरे क्षतं भवेत्। अथवा ते रोगा ये शीतकाले चोत्पद्यंते। तथा जलेन चोत्पद्यंते। तै रोगैः शरीरे क्षतं

स्यात् । अथवा जलचरजीवभक्षणैर्ये रोगास्तैरित्यर्थः । एवमन्यदपि विचारणीयम् । अथारूपिणो ⠸ विचारांशस्तत्क्षतोपरि वर्त्तते यत्क्षतं कुंततः स्यात् । तथा बाणेन स्यात् । अथवा खंजरेण तथा तवलेन स्यात् । अथवा त्रिशूलेन वा शक्त्या स्यात् । एवंविधशस्त्रेण शरीरे क्षतं वाच्यम् । अथ दैत्यार्चितस्य ⠸ विचारांशस्तत्क्षतोपरि यत्क्षतं छुरिकया भवेत्तथा करद्या वा स्यात् । एवं विधतीक्ष्णाग्रशस्त्रेण शरीरेक्षतं वाच्यम् । अथ वक्ररूपि ⠸ णो विचारांशस्तत्क्षतोपरि यत्क्षतं बाणेन भवेत् । वाजमधरेण भवेदथवा सूचिकया भवेत् वा कीलकेन भवेत् वा नावकेन भवेत् नावक इति बाणविशेषः । एवंविधशस्त्रेण शरीरे क्षतं वाच्यम् । अथ कविरूपिणो ⠸ विचारांशस्तत्क्षतोपरि यत्क्षतं गण्डासिकेन भवेत् । अथवा गदया भवेत् । लोके गुर्ये इत्युच्यते । एवंविधशस्त्रेण शरीरे क्षतं वाच्यम् । अपरः क्षतविशेषः पूर्वोक्तविधिना ज्ञातव्यो यथा प्रागुक्तं मया ।

अथ यदि ज्ञातुमिच्छेदिदं क्षतं केन प्रकारेण जातमिति तदाह । प्रश्नरमलेषु स रूपी कस्मिन् स्थलेऽन्वादेशरूपो यातस्तेन गृहेण चाज्ञां कारयेत् । तदाह । यदि क्षतसूचकरूपिणः प्रथमगृहेऽन्वादेशः स्यात्तदा तेन कार्येण क्षतं जातं यत्कार्यं स्वशरीरेणैव सिद्ध्येत् । तेन कारणेन क्षतं जातमिति । यदि क्षतरूपिणोऽन्वादेशो द्वितीय २ गृहे स्यात्तदा द्रव्यादीनां कारणेन क्षतं जातं वा मित्रत्वदातुः कारणेन क्षतं जातं शरीरे एवम् । यदि तृतीयगृहेऽन्वादेशः स्यात्तदा भ्रातॄणां स्वसॄणां च तथा गोत्राणां च कारणेन शरीरे क्षतं जातमिति । एवमग्रेऽपि ज्ञेयम् । अथ यदि कुत्रापि चान्वादेशरूपो नो भवेत्तदा द्रष्टव्यं क्षतसूचकरूपी कस्य गृहस्याधिपतिर्वर्त्तते । यस्य गृहस्याधिपतिः स्यात्तेन गृहेण क्षतकारणस्य चाज्ञां कारयेत् । श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे तनुस्थानस्य प्रश्नकथनन्नाम प्रथमोऽध्यायः ॥ १ ॥

## अथ धनस्थानस्य प्रश्नकथने द्वितीयोऽध्यायः ।

तदा द्रष्टव्यं प्रश्नरमलस्य द्वितीयगृहे को रूपी समागतो वर्त्तते । यदि निर्गमो भवेत्तदा द्रव्यस्य व्ययोपरि विचारांशो वर्त्तते । शुभे स्वामित्वेन व्ययो भवेत् । अशुभे ऽस्वामित्वेन व्ययः स्यात् । यदि प्रवेशी भवेत्तदा द्रव्याणामागमनं वाच्यम् । कोशे बलं भवेत् । शुभे सुगममार्गेण द्रव्याणामागमनम् । अशुभे काठिन्येन द्रव्याणामागमनं स्यात् यदि रूपी स्थिरो भवेत्तदा द्रव्याणामागमनं व्ययश्च स्थिरत्वे पतेत् यथा स्थिरमेव तिष्ठेत् । शुभे परिणामे द्रव्याणामागमनं स्यात् । अशुभे स्थिररूपिणि सर्वं द्रव्यं व्ययो भवेत । एवं यदि द्विस्वभावरूपी भवेत्तदा द्रव्याणामागमनं व्ययो वापि स्यात् । शुभे स्वामित्वेनागमनं व्ययो वा वाच्यः। अशुभे ऽस्वामित्वेनाऽऽगमनं व्ययो वा वक्तव्यः ।

अथ भूतभविष्यवर्त्तमानकालेषु द्रव्याणामागमनव्यययोर्ज्ञानमाह । अस्य धनस्थानस्य २ प्रथमगृहं १ भूतकालिकं ज्ञेयम् । तथा तृतीयगृहं ३ भविष्यकालिकं ज्ञेयम् । वर्त्तमानं तु धन २-स्थानमेव । तदाह । यदि प्रथमगृहे शुभनिर्गमरूपी समागतः स्यात्तदा एवं वक्तव्यम् । भोः प्रष्टस्तव समीपे भूतकाले द्रव्यं स्थितम् परंतु स्वेच्छया स्वामित्वेन च त्वं व्ययीकृतवान्पुरा । अशुभेऽनिच्छयाऽस्वामित्वेन च व्ययीकृतम् । एवं यदि प्रथमगृहे प्रवेशी समागतः स्यात्तदा पूर्वं द्रव्याणामागमनमभूत् । शुभे सुगममार्गेण बहुतरमागमनमभूत् । अशुभे काठिन्येन चागमनं वाच्यम् । एवं यदि प्रथमगृहे स्थिररूपी पतितः स्यात्तदा पर्वद्रव्याणां स्थिरत्वमभूत् । शुभे स्वामित्वेन स्थिरत्वमभूत् । अशुभेऽनिच्छयाऽस्वामित्वेन द्रव्याणां स्थिरत्वमभूत् । एवं यदि प्रथमगृहे द्विस्वभावरूपी पतितः स्यात्तदा पूर्वं द्रव्याणामागमनमपि जातं व्ययो ऽभूत । शुभे स्वेच्छया स्वामित्वेन चागमनव्ययश्च कृत इति वाच्यम् ।

अशुभेऽनिच्छया स्वामित्वेन चागमनं व्ययश्च कृतः पूर्वामात वाच्यम् । एवं भविष्यकालेऽपि वाच्यम् । तद्यथा । तदा द्रष्टव्यं तृतीयगृहे को रूपी पतितो वर्त्तते । यदि प्रवेशी स्यात्तदा एवं वक्तव्यम् । भोप्रष्टः कतिपयदिनोपरि तवाग्रे हस्ते च द्रव्यमागमिष्यति । शुभे सुगममार्गेणाऽगमिष्यति । अशुभे सकले काठिन्येनाऽगमिष्यति । एवं यदि तृतीयगृहे निर्गमरूपी समागतः स्यात् । तदा एवं वक्तव्यम् । भोः प्रष्टः अग्रे तव द्रव्यादिकं क्षयमेष्याति । व्ययकरणेन स्वल्पं द्रव्यं भविष्यति ॥ यत्किंचिच्छेषमपि तिष्ठत्तत्सर्वं व्ययीभविष्यति शुभे स्वामित्वेन व्ययो भविष्यति । अशुभेऽस्वामित्वेनैकेनैव वारेण व्ययो भविष्यतीति वाच्यम् । एवं यदि तृतीयगृहे शुभस्थिररूपी पतितः स्यात्तदा एवं वाच्यम् ।भोः प्रष्टः अग्रे तव हस्ते द्रव्यमागमिष्यति परंतु स्थिरतया बहुविलम्बेन यदि अशुभस्थिररूपी भवेत्तदा एवं वाच्यम् । भोः प्रष्टर्मनसि द्रव्यागमनलालसा सदा तिष्ठेत् परंतु बहुदिनव्यतीतऽपि द्रव्यागमनं नो भविष्यति । एवं यदि तृतीयगृहे द्विस्वभावरूपी समागतस्तदा द्रव्याणामागमनमपि भविष्यति व्ययश्चापि भविष्यति । शुभे सुगममार्गेण गमनं व्ययश्च भविष्यति स्वायत्त्वेन च । अशुभ काठिन्येनाऽस्वायत्त्येन च द्रव्याणामागमनं व्ययश्चापि भविष्यतीति वाच्यम् । वर्त्तमानकालस्य व्याख्यानं द्वितीयगृहे पूर्वोक्तं मया । अत्र प्राचीनग्रंथेष्वपि कथितं वर्त्तते । तदाह । भो रमलज्ञ प्रश्नरमलस्य द्वितीयगृहे को रूपी समागतो वर्त्तत । यदि शुभप्रवेशी भवेत् यथा इमे [रमल चिह्नानि] तदा कोषे द्रव्यादिभिर्बलाधिक्यं भवेदिति विचारांशो वर्त्तते । अपरं सर्वतः सर्ववस्तूनां वर्धमानता स्यात् । सहायदातृपक्षान्मनसि प्रसन्नता स्यात् । प्रवासी शीघ्रतया गृहं प्रत्यागच्छेत् । क्रये विक्रये भव्यलाभाधिक्यं चापि भवेत । कोशे द्रव्यादिभिः

प्राचुर्य्यं भवेत् । अथ यद्यशुभप्रवेशी द्वितीयगृहे भवेत् । यथा-यम् ⁞ तदा विचारांशो वर्त्तते । कोशद्रव्यादिभिर्बलं भवेत्परंतु काठिन्येन । अपरं सहायदातारः साहाय्यं न करिष्यंति । इदमपि विचारांशे वर्त्तते क्रयविक्रयौ नो कारिष्यति करिष्यति चेत् कोशस्य क्षीयमानता स्यात् । व्ययाधिक्यं भवेत्परंतु स्वामित्वेनानिच्छया च । अत्र द्रव्यादिकं रक्षयेच्चौरेभ्यो यत्नेन स्थापयेत् । यतश्चौरो न प्राप्नुयात् । अत एव संयमेन सदा तिष्ठेत् । एवं यानि वस्तूनि द्वितीयगृहस्य विचारांशे तिष्ठंति तेषु सर्वेष्वपि निषिद्धतरं फल वाच्यम् । अथ यदि शुभद्विस्वभावरूपी द्वितीयगृहे समागतः स्यात् । यथा इमौ ⁞ ⁞ तदा विचारांशो वर्त्तते को-शद्रव्याणि समयं २ प्रत्यवस्थांतरं प्राप्नुयुः । यत्किंचिद्द्रव्याणा-मागमनं भवेत्तत्सर्वं व्ययं प्राप्नोति । परंतु स्वामित्वेन स्वेच्छया च । अपरं सहायदातारः सहायं दद्युः स्वेच्छया क्रये विक्रये च शुभफलं प्राप्नुयात् । लाभोऽपि स्यात् । अत एव क्रयं विक्रयं कर्तव्यम् । अथ यदि द्विस्वभावरूपी द्वितीयगृहे समागतः स्यात् । यथा इमौ ⁞ ⁞ तदा विचारांशो वर्त्तते काठिन्येन द्रव्याणामागमनं न भवेत् । सुगमेन गमनं भवेद्द्रव्याणां कोऽर्थः शीघ्रतया व्ययः स्यात् । परे स्वामित्वेनानिच्छया च । अत्र क्रयं विक्रयं च नो कुर्यात् कृते सत्युभयस्मिन्मध्ये वस्तूनां क्षीयमाणता स्यात् । अत एव क्रयविक्रयेभ्यः समयं कारयेत् । एवं यानि वस्तूनि द्वितीय-गृहस्य विचारांशे तिष्ठन्ति तेषु सर्वेष्वपि द्विविधं फलं वाच्यम् परिणा-मे च नेष्टम् । अथ रमलार्णवग्रंथे कश्चिद्विशेषः कथितो वर्त्तते । तदाह । यदि प्रष्टा पृच्छेत् भो रमलज्ञ मम जीवनवृत्तिर्द्रव्यादिकं कीदृशं वर्त्तत इत्यत आह । तदा प्रश्नरमलस्य प्रथमगृहे द्वितीयगृहे च को रूपी समागतो वर्त्तत इति द्रष्टव्यम् । यद्युभयस्मिन्गृहे शुभप्रवेशी पतितः स्यात्तथा स एव दशम १० कादश ११ पंच-

दश १५ षोडश १६ गृहेषु कस्मिन्नपि गृहेऽन्वादेशं कुर्यात्तदा विचारांशो वर्त्तते । द्रव्यादीनां तथा जीवनवृत्तीनां तथा प्रष्टुरवस्थानां भाग्योदयः स्यात् । तथैतेषां वर्धमानताऽनायासेन सुगमेन विना कष्टेन स्यात् । तथा कर्म्मकार्य्येण तेजस्त्वेन स्वज्ञातिकर्मणा साधारणकार्य्येण च सुफलं प्राप्नुयात् । अथ यद्युभयस्मिन्गृहे १। २ अशुभप्रवेशी पतितः स्यात्तदैतत्सर्वं काठिन्येन कष्टेन च सिध्येत अथ यद्युभयस्मिन् गृहे १।२ निर्गमः पतितः स्यात्तदा स एव दशमै- १० कादश ११ पंचदश १५ षोडश १६ गृहेषु कस्मिन्नपि गृहे- ऽन्वादेशं कुर्यात्तदा विचारांशो वर्त्तते । द्रव्याणामागमनं नो भवेत् । यत्किंचिदपि भवेत्तत्सर्वं व्ययं प्राप्नुयात् । शुभे स्वच्छया व्ययं कुर्य्यात् । अशुभेऽनिच्छया व्ययं कुर्य्यात् । अथ यदुभयस्मिन्गृहे १। २ द्विस्वभावरूपी समागतः स्यात्तथा स एव दशमै १० कादश ११ पंचदश१५ षोडश १६ गृहेषु कस्मिन्नपि गृहेऽन्वादशं कुर्यात् । तदा निर्गमवत्फलं वाच्यम् । शुभेनायासेन सुगमेन विना कष्टेन । अशुभे काठिन्येन महता कष्टेन कार्य्यसिद्धिः । अथ यद्युभयस्मिन् गृहे १, २ स्थिररूपी समागतः स्यात्तथा स एव दशमै १० कादश- ११ पंचदश १५ षोडश १६ गृहेषु कस्मिन्नपि गृहेष्वन्वादेशं कुर्यात्तदा तु प्रवेशिवत्फल वाच्यम् । शुभे रूपिणि सुगमन कार्य्य- सिद्धिः । अशुभे महता कष्टेन कार्य्यसिद्धिः स्यात् । एवं प्रवेशिनि- र्गमाभ्यां मिश्रितं फलं वाच्यं नात्र संदेहः ।

अथ कथं कस्माद्वा द्रव्यलाभो भविष्यतीत्य आह ।

तथा धनस्थाने द्वितीयगृहे द्रष्टव्यं को रूपी समागतो वर्त्तते । तेन रूपिणा कस्मिन्स्थलेऽन्वादेशः कृतो वर्त्तते इत्यपि द्रष्टव्यम् । तदान्वादेशस्थानादाज्ञां कारयेत् प्रश्ने । तथा यदि प्रथमगृहेऽन्वादेशो भवेत्तदा प्रष्टा स्वशरीरेण द्रव्याशां स्था-

पयति कोऽर्थः स्वबाहुबलेन । तथा स्वशरीरकारणेन द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि द्वितीयगृह एव ऽर्थः कुत्राप्यन्वादेशो नो भवेत्तदा क्रयविक्रयाभ्यां द्रव्याशां स्थापयति । तथा तयोरेव कारणेन द्रव्यं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि तृतीयगृहेऽन्वादेशः स्यात्तदा भगिनीभ्रातृस्वकुटुंबस्वस गोत्रैः सह द्रव्याशां स्थापयति । तथैतेषामेव कारणेन द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम्।तथा इतस्ततः प्रचलनेन कुत्रापि गमनेन च द्रव्याशां स्थापयति । तथागमनकारणेन द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि चतुर्थगृहेऽन्वादेशो भवेत्तदा पित्रा सह द्रव्याशां स्थापयति । तथा जीवनवृत्तिभूमिप्रसंगेन ग्रामप्रसंगेन द्रव्याशां स्थापयति तथा गृहप्रसंगेन द्रव्याशां स्थापयति । एतेषामेव कारणेन द्रव्यादिकं हस्तगतं करिष्यतीति वाच्यम् । एवं यदि पंचमगृहेन्वादेशः स्यात्तदा पुत्रीपुत्राणां प्रसंगेन द्रव्याशां स्थापयति । तथाद्भुतनूतनवस्तुप्रसंगेन ां स्थापयति । तथैतेषामेव कारणेन द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि षष्ठगृहेऽन्वादेशः स्यात्तदा दासीदासादीनां प्रसंगेन द्रव्याशां स्थापयति । तथा येन पुरुषेण स्त्रीतिरस्कृतेन पुरुषेण द्रव्याशां स्थापयति । तथा यया स्त्रिया पुरुषस्य तिरस्कारः कृतस्तया स्त्रिया सह द्रव्याशां स्थापयति । एतेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि सप्तमगृहेऽन्वादेशः स्यात्तदा स्त्रीप्रसंगेन द्रव्याशां स्थापयति तथा साटिकाकारपुरुषप्रसंगेन द्रव्याशां स्थापयति तथा यस्योपरि ऋणं वर्त्तते । तेन जनेन द्रव्याशां स्थापयति । एतेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं कारिष्यतीति वाच्यम् एवं यद्यष्टमगृहेऽन्वादेशः स्यात्तदा ऋणप्रसंगेन वा मृतकद्रव्यादिषु स्वांशप्रसंगेन द्रव्याशां स्थापयति । वा कुत्रापि स्थापितवस्तुप्रसंगेन द्रव्याशां

स्थापयति। अथवा चौरहृतवस्तुप्रसंगेन द्रव्याशां स्थापयति । तेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम्। एवं यदि नवमगृहेऽन्वादेशः स्यात्तदा प्रवासप्रसंगेन विद्याप्रसंगेन च द्रव्याशां स्थापयति । तयोरेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि दशमगृहेऽन्वादेशः स्यात्तदा कर्म्मकार्य्येण द्रव्याशां स्थापयति वा तेजस्त्वेन द्रव्याशां स्थापयति । अथवा पृथ्वीपतिना सह द्रव्याशां स्थापयति । वा मात्रा सह द्रव्याशां स्थापयति । वा गुरुणा सह वा स्वकर्म्मकर्तृपुरुषेण सह द्रव्याशां स्थापयति । एतेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम्। एवं यदि चैकादशगृहेऽन्वादेशः स्यात्तदा मित्रैः सह द्रव्याशां स्थापयति । वा बृहत्पुरुषाचार्य्यैः सह द्रव्याशां स्थापयति । एतेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । एवं यदि द्वादशगृहेऽन्वादेशः स्यात्तदा शत्रुभिः सह द्रव्याशां स्थापयति। वा बृहच्चतुष्पदैः सह द्रव्याशां स्थापयति। वा बंधगतपुरुषैः सह द्रव्याशां स्थापयति । एतेषामेव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम्। अथ केचित्कांचिद्विशेषं वदन्ति । यदि कुत्राप्यन्वादेशो नो भवेत्तदा किं कर्तव्यमित्यत आह तदा द्वितीयगृहे द्रष्टव्यं को रूपी समागतो वर्त्तते । अपरं तस्य रूपिणः प्रकृतिक्रमेण गृहं द्रष्टव्यं कुत्र वर्तते । तथा तास्मिन् गृहे को रूपी समागतो वर्तत इत्यपि द्रष्टव्यम् । तेन गृहेण तस्य रूपिणः प्रकृतिरूपादिभिश्चाज्ञां कारयेत् । तद्यथोदाहरणं द्रष्टव्यम् । यथा प्रश्नरमलस्य द्वितीयगृहे मूरिरूपी ⁞ समागतः अस्य प्रकृतिक्रमेण चैकादशगृहं वर्त्तते तास्मिन्नेकादशगृहे लोहितः ⁞ स्थितो वर्त्तते । तदा मयोक्तं कोऽप्येकः पुरुष आरक्तमुखस्तेन पुरुषेण द्रव्याशां स्थापयति प्रष्टा अपरं तस्य पुरुषस्यैव कारणेन प्रष्टा द्रव्यादिकं स्वहस्तगतं करिष्यतीति वाच्यम् । अथैकं

वाक्यमिदं वर्त्तते । तदाह प्रश्नरमलस्य प्रथमगृहरूपिणं द्वितीयगृहरूपिणा गुणयेत् । ताभ्यां ध्रुवं नवमगृहरूपी चोत्पद्यते । तदा द्रष्टव्यः स रूपी कस्मिन् गृहेऽन्वादेशो वर्त्तते तस्य गृहस्य विचारांशे चाज्ञां कारयेत् ।

अथ यदि प्रष्टा पृच्छेत्स्वहस्तेन द्रव्यप्राप्तिर्भविष्यतीति वा न इत्यत आह ।

तदा ते चत्वारो रूपिणो द्रष्टव्या येऽधिकसंज्ञकाः ।केचित्साक्षिण इति वदंति अर्थादिमे १३,१४,१५,१६, यदीमे प्रवेशिनः स्युस्तदा द्रव्याणामागमनं प्राप्तिश्च स्यात । एषु शुभेषु सुगमेन प्राप्तिः । अशुभेष्वेतेषु काठिन्येन प्राप्तिः स्यात् । यदि कोऽपि शुभः कोप्यशुभः स्यात्तदाऽऽधिक्योपरि फलं वक्तव्यम् । शुभाधिक्ये सुगमेनाशुभाधिक्ये काठिन्येन द्रव्याणामागमनं स्यात् । यदि शुभाशुभैः समानरूपाः प्रवेशिनः स्युस्तदा यावन्ति द्रव्याणामागमनानि सुगमेन स्युस्तावन्ति एव काठिन्येन स्युः । एवं यदि ते १३, १४, १५, १६, शुभनिर्गमाः स्युस्तदा द्रव्याणामागमनं स्वल्पं व्ययो बहुतरो भवेत् । परंतु स्वायत्त्येन । यद्यशुभनिर्गमाः स्युस्तदा द्रव्याणामागमनं किमपि न स्यात् । यत्किंचिद्भवेत्तत्सर्वं व्ययं प्राप्नुयाद्वा हस्ताद्व्रजेत् । परंत्वस्वायत्त्येन । यदि कोऽपि शुभः कोप्यशुभो भवेत्तदा पूर्ववदाधिक्योपरि फलं वाच्यम् । शुभाधिक्ये स्वायत्त्येन व्ययो वाच्यः । अशुभाधिक्येऽस्वायत्त्येन व्ययो भवेत् । यदि शुभाशुभौ द्वौ समानरूपौ स्यातां तदा यावत्परिमितं स्वायत्त्येन व्ययो भवेत्तावदेवाऽस्वायत्त्येन व्ययः स्यात । अथ प्राचीनग्रंथेष्वपि कथितं वर्तते । तथैव यदि तेषां १३, १४, १५, १६, मध्ये केचित्प्रवेशिनः केचिन्निर्गमाः स्युस्तदाप्याधिक्योपरि चाज्ञां कारयेत् । प्रवेशिनामाधिक्ये प्रवेशिनां फलं वाच्यम् । निर्गमाधिक्ये निर्गमस्य फलं वाच्यम् । शुभैः स्वायत्त्येन सुगमेन च । अशुभैः काठिन्येनास्वायत्त्येन च कार्य्यसिद्धिः स्यात् । यदि तेषु गृहेषु १३,

१४, १५, १६ प्रवेशिनिर्गमौ समानरूपौ स्यातां कोऽर्थः द्वौ प्रवेशिनौ द्वौ निर्गमौ तदा त्रयोदशादीनां चतुर्णां रूपिणां युग्मकेवलमिश्रितान्बिन्दून्गुणयेत् । वह्निप्रभृतीनां पृथक्पृथगबिंदुसमूहं कृत्वा द्रष्टव्यम् । यदि वह्निवाय्वोर्बिंदुसमूहाधिक्यं तदा निर्गमस्य फलं वक्तव्यम् । एवं यदि जलपृथिव्योर्बिंदुसमूहाधिक्यं तदा तु प्रवेशिनः फलं वाच्यम् । एवं यदि ते रूपिणः १३, १४, १५, १६ शुभस्थिराः स्युस्तदा द्रव्याणामागमनं तस्य प्राप्तिश्च स्थिरतया भवेत् । परंतु सुगममार्गेण यदि तेऽशुभस्थिराः स्युस्तदा द्रव्याणामागमनं प्राप्तिश्च कदाचिन्न स्यात् । तथा कोशस्य निकृष्टावस्था भवेत् ।अत्र द्रव्यप्राप्तेस्तथा कोशनिषिद्धावस्थाया दिनमानं तु संख्याक्रमसंमतेन तेषु गृहेषु १३, १४,१५, १६,अशुभस्थिरा यावत्परिमितसंख्यांकाः प्राप्नुयुस्तावत्परिमितदिनोपरि द्रव्यप्राप्तिस्तेष।मागमनं च भविष्यति।अथवा संपूर्णरमलेषु ये रूपिणः संख्यानुक्रमेण स्वगृहे तिष्ठंति तेषां ध्रुवांकसमसंख्याभिर्दिवसैर्निषिद्धावस्थायाः स्थिरत्वं वक्तव्यम् । यदि तेषां मध्ये केपि शुभाः १३, १४, १५, १६, केप्यशुभा भवंति तदाधिक्योपरि चाज्ञां कारयेत् । शुभाधिक्ये शुभस्याशुभाधिक्येऽशुभस्य चाज्ञां कारयेत् । यदि तेषु गृहेषु १३, १४, १५, १६, स्थिररूपिणः शुभाशुभैः समानरूपाः स्युः कोऽर्थः द्वौ शुभौ द्वावशुभौ स्यातां तदा द्रव्याणामागमनं भवेत्परंतु पुनरपि व्ययो भवेत्स्वायत्त्येन सुगमेन च । तथा मनः प्रसन्नतया न व्ययं कुर्यात् । एवं यदि तेषु गृहेषु १३, १४, १५, १६, शुभद्विस्वभावाः स्युस्तदा द्रव्याणामागमनं काठिन्येन स्वल्पं भवेदस्वामित्वेन व्ययो बहुतरः स्यात् । यदि तेषु केचिच्छुभाः १३, १४, १५, १६, केचिदशुभा भवंति तदाधिक्योपरि चाज्ञां कारयेत् । शुभाधिक्ये शुभस्य फलं वाच्यम् । अशुभाधिक्येऽशुभस्य फलं वक्तव्यम् । यदि तेषु शुभाशुभैः समानरूपौ स्यातां कोऽर्थः द्वौ शुभौ द्वावशुभौ यदि

भवतस्तदा यावत्परिमितौ सुगमेन प्राप्तिव्ययौ भवेतां तावदेव काठिन्येन प्राप्तिव्ययौ स्याताम् । यदि तेषां मध्ये एकः प्रवेशी एको निर्गमः । एकः स्थिर एको द्विस्वभावो भवेत्तदा संपूर्णप्रश्नरमलेषु ये रूपिणः संख्यानुक्रमेण स्वगृहे तिष्ठंति तेषां संख्यांकसमूहः कर्त्तव्यः। तं समूहं चतुर्विभागं प्रवेश्यादिषु दापयेत् । तावत्संख्यैर्दिवसैः प्रवेश्यादीनां फलं वाच्यम् । प्रवेशिना द्रव्याणामागमनं प्राप्तिश्च निर्गमेन व्ययः । स्थिरेण स्थिरत्वं यथास्थितमेव । द्विस्वभावेन प्राप्तिव्ययौ वाच्यौ । शुभे स्वायत्त्येन सुगमेन चेति । अशुभेऽस्वायत्त्येन काठिन्येन चेति फलं वाच्यम् । अथवा तेषु गृहेषु १३, १४, १५, १६, प्रवेशिनिर्गमस्थिरद्विस्वभावरूपाणां चतुर्णां संख्याक्रमसंमतेन पृथक् २ संख्यांका ग्राह्यास्ते च स्वसंख्यांकदिवसैः फलदा भवंति । तद्यथा । प्रवेशिना द्रव्याणामागमनं प्राप्तिश्च निर्गमेन व्ययः । स्थिरेण स्थिरत्वं यथा स्थितमेव। द्विस्वभावेन द्वावपि प्राप्तिव्ययौ वक्तव्यौ तावत्परिमितैर्दिवसैः शुभे स्वायत्त्येन सुगममार्गेण च । अशुभे स्वायत्त्येन काठिन्येन चेति फलं वाच्यम् । अत्र संख्यांकोत्पादनं संख्याक्रमसंमतेन कर्तव्यमिति ।

अथ क्रयो विक्रयश्च भविष्यति वा न इत्यत आह ।

तदा द्रष्टव्यं द्वितीयगृहे को रूपी समागतो वर्त्तते । यदि निर्गमरूपो भवेत्तदा एवं वक्तव्यम् । भोः प्रष्टस्तव वस्तुविक्रयो भविष्यति । यदि शुभो भवेत्तदा विक्रये फलप्राप्तिः स्यात् । अशुभे निर्गमरूपे सति तदा विक्रये क्षीयमाणता भवेत् । एवं द्वितीयगृहे प्रवेशी शुभो भवेत्तदा एवं वाच्यम् । भोः प्रष्टः क्रयो भाविष्यति । शुभो भवेत्तदा क्रये फलप्राप्तिः स्यात् । यद्यशुभो भवेत्तदा क्रये क्षीयमाणता भवेत । एवं यदि द्वितीयगृहे द्विस्वभावो भवेत्तदा एवं वक्तव्यम । भोः प्रष्टः किंचिद्वस्तुक्रयो भविष्यति

किंचिद्वस्तुविक्रयो भविष्यति। शुभो भवेत्तदा क्रये विक्रये फलप्राप्तिः । यद्यशुभो भवेत्तदा क्रये विक्रये क्षीयमाणता भविष्यति। एवं यदि द्वितीयगृहे स्थिरो भवेत्तदा क्रयो विक्रयश्च स्थिरत्वे पतेत्। शुभे परिणामे क्रयो विक्रयश्च स्यात्। अशुभे महात्स्थिरत्वं क्रयो विक्रयश्च कदापि न स्यात् ।

अथ क्रयविक्रयकरणं कीदृशं वर्त्तत इत्यत आह ।

तदा प्रश्नरमलस्य द्वितीय २ गृहरूपिणं चाष्टम ८ गृहरूपिणा । गुणयेत् अथवा ताभ्यां य उत्पन्नो भवेत्तं पश्येत् । यदि शुभप्रवेशी भवेत्तदा क्रयः कर्त्तव्यः पश्चाद्विक्रयं च कुर्यात्। तयोरपि करणेन बहुफलप्राप्तिर्लाभाधिक्यं च भविष्यति । परन्तु यदि स एव केंद्रगृहेषु १, ४, ७, १०, वा पणफरगृहेषु २, ५, ८, ११ अन्वादेशं कुर्यात् तदा तु ध्रुवं बहुफलप्राप्तिर्भविष्यति । क्रये पश्चाद्विक्रये च । अत एव भोः प्रष्टः क्रयो विक्रयश्च कर्त्तव्य इति एवं निर्गमादिरूपेष्वशुभेषु कदापि फलप्राप्तिर्न स्यात् । तयोस्त्याज्यकरणं समीचीनम्।

अथ केचिद्विशेषं वदंति तमाह ।

प्रश्नरमलस्य द्वितीयगृहरूपिणं चैकादशगृहरूपिणं चतुर्दशगृहरूपिणं चैतत्त्रयं सकलं पश्येत्। अथवा एकादशगृहरूपिणं चतुर्दशगृहरूपिणा गुणयेत्। ताभ्यां य उत्पन्नो भवेत्तं च द्वितीयगृहरूपिणा गुणयेत् ॥ ताभ्यां य उत्पन्नो भवेत्तं पश्येत् यदि स शुभप्रवेशी भवेत्तदा क्रयः समीचीनो वर्त्तते । परन्तु यदि स एव केंद्रगृहेषु १, ४, ७, १०, वा पणफरगृहेषु २, ५, ८, ११ अन्वादेशं कुर्यात्तदा तु ध्रुवं क्रये लाभाधिक्यं भविष्यति। एवं प्रवेशी अशुभो भवेत्तदा क्रये क्षीयमाणता भविष्यति । परंतु यदि स एवापोक्लिमगृहेषु ३, ६, ९, १२, अन्वादेशं कुर्यात्तदा तु ध्रुवं क्रये क्षीयमाणत्वं वाच्यम्। एवं यदि स शुभनिर्गमो भवे-

त्तदा विक्रयः समीचीनो वर्त्तते । परन्तु स एव यदि केंद्रगृहेषु १, ४, ७, १०, वा पणफरगृहेषु २, ५, ८, ११, अन्वादेशं कुर्यात्तदा तु ध्रुवं विक्रये लाभाधिक्यं भविष्याति । एवं निर्गमोऽशुभो भवेत्तदा विक्रये क्षीयमाणता भविष्यति । परन्तु यदि स चापोक्लिमगृहेष्वन्वादेशं कुर्यात्तदा ध्रुवं क्षीयमाणत्वं विक्रये वाच्यम् । एवं यदि स शुभस्थिरो भवेत्तदा वस्तुस्थापनं समीचीनं वर्त्तते विक्रयो मा कर्त्तव्यः । परंतु यदि स एव केंद्रगृहेषु १, ४, ७, १० वा पणफरगृहेषु २, ५, ८, ११ अन्वादेशं कुर्यात् तदा तु ध्रुवं वस्तुस्थापनसंग्रहे लाभाधिक्यं भविष्यति । एवं यदि स्थिरोऽशुभो भवेत्तदा स्थापने क्षीयमाणता भविष्यति । परंतु स एव चापोक्लिमगृहेषु ३, ६, ९, १२, अन्वादेशं कुर्यात्तदा तु ध्रुवं स्थापने क्षीयमाणता स्यात् । अत एव शीघ्रतया विक्रयः कर्त्तव्य इति । एवं यदि स शुभद्विस्वभावो भवेत्तदा तूर्णेन क्रयं कृत्वा विक्रयं कुर्यात् तदा समीचीनं वर्त्तते स्थिरत्वकरणे क्षीयमाणता स्यात् । यदि स द्विस्वभावो भवेत्तदा क्रयविक्रयौ न कारयेद्यदि शुभो भवेत्तदा समीचीनं स्यात् अस्मिन्स्थले प्राचीनग्रंथेषु कश्चिद्विशेषः कथितो वर्त्तते । तदाह प्रश्नरमलस्य द्वितीयगृहरूपिणं पंचमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं पश्येत् । यदि स शुभप्रवेशी भवेत्तदा क्रयः समीचीनः। अशुभश्चेत्तदा क्रये क्षीयमाणता स्यात् फलप्राप्तिर्न स्यात् । एवं यदि स शुभनिर्गमो भवेत्तदा विक्रयः समीचीनो वर्त्तते । अशुभश्चेत्तदा विक्रये क्षीयमाणता कोऽर्थः फलप्राप्तिर्न स्यात् । एवं यदि स शुभस्थिरो भवेत्तदा स्थापनं न समीचीनं ज्ञेयमिति।अशुभश्चेत्तदा स्थापने क्षीयमाणता स्यात् कोऽर्थः फलप्राप्तिर्न स्यात् । अत एव झटित्येव विक्रयः कर्तव्यः । एवं यदि स शुभद्विस्वभावो भवेत्तदा तूर्णं क्रयं कृत्वा विक्रयं कारयेत्तदा समीचीनं वर्त्तते अशुभश्चेत्तदा

क्रयविक्रयौ न कर्तव्यौ कृते दोषः सर्वत्रैव विपर्य्यये विपर्ययफलं वाच्यम् । अथ केचिद्रमलज्ञाः कञ्चिद्विशेषं वदन्ति यदि प्रश्नरमलस्य द्वितीयगृहे शुभप्रवेशी भवेत्तथा दशमगृहस्वामी शुभगृहेऽन्वादेशं कुर्यात्तदा क्रये बहुतरफलप्राप्तिः स्यात् । यदि स अशुभप्रवेशी भवेत्तथा दशमगृहस्य स्वामी अशुभगृहेऽन्वादेशं कुर्यात्तदा कदापि न क्रयं कुर्यात् । क्रये कृते बहुतरा क्षीणता स्यात् । अत एव वस्तुसंग्रहो न कर्त्तव्यः । एवं यदि द्वितीयगृहे शुभनिर्गमो भवेत्तथा दशमगृहस्य स्वामी शुभगृहेऽन्वादेशं कुर्यात्तदा विक्रये कृते सति बहुतरफलप्राप्तिः स्यात् । यदि अशुभनिर्गमो भवेत्तथा दशमगृहस्य स्वामी अशुभगृहेऽन्वादेशं कुर्यात्तदा विक्रयं नैव कुर्यात् ।कृते क्षीणता बहुतरा भवेत् । अत एव वस्तुविक्रयो न कर्त्तव्यः । एवं यदि द्वितीयगृहरूपी शुभस्थिरो भवेत्तथा दशमगृहस्य स्वामी शुभगृहेऽन्वादेशं कुर्यात्तदा स्थापनं समीचीनं स्थापने लाभाधिक्यं भविष्यति ।अत एवाधुना विक्रयो मा कर्त्तव्यः । यदि स अशुभस्थिरो भवेत्तथा दशमगृहस्य स्वामी अशुभगृहेऽन्वादेशं कुर्यात्तदा नैव स्थापयेत् । स्थापने क्षीणता भविष्यति अत एव शीघ्रतया विक्रयं कुर्यात् तदा समीचीनम् एवं यदि द्वितीयगृहे शुभद्विस्वभावो भवेत्तथा दशमगृहस्य स्वामी शुभगृहेऽन्वाऽदेशं कुर्यात्तदा तूर्णं क्रयं कृत्वा विक्रयं कुर्यात्तदा बहुतरफलप्राप्तिः स्यात् । यदि स अशुभद्विस्वभावो भवेत्तथा दशमगृहस्य स्वामी अशुभगृहेऽन्वादेशं कुर्यात्तदा क्रयं विक्रयं च नैव कुर्यात् । कृते क्षीणता बहुतरा भवेत् । अत्र केचिद्वदंति यदि द्वितीयगृहे शुभरूपी कोऽपि भवेत्तदा दशमगृहस्य स्वामी शुभगृहेऽन्वादेशं कुर्यात्तदोभयस्मिन्क्रये विक्रये च बहुतरा फलप्राप्तिः स्यात् । एवं यदि द्वितीयगृहे शुभरूपी भवेत्तथा दशमगृहस्य स्वामी अशुभगृहेऽन्वादेशं कुर्यात्तदा द्वावपि क्रयविक्रयौ नैव कुर्यात् । कृते दोषः क्षीणता बहुतरा स्यात् ।

अथ केचिद्रमलाचार्याः क्रयविक्रयस्याभिप्रायं व्यक्तप्रकारेण वदंति तमाह ॥

धातुमूलजीवानामुपलक्षणोपरि व्यक्तद्वारं कथयंति । तत्र मृत्तिकापाषाणादिस्वर्णपर्यंता धातुः तृणादिबृहत्काष्ठपर्यंतं मूलम् पिपीलिकादिहस्तिपर्यंतं जीवाः । यदि धातुसंबंधेन क्रयविक्रयस्य प्रश्नं कुर्यात् । तदा प्रश्नरमलस्य द्वितीयगृहरूपिणं दशमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन चाज्ञां कारयेत् । तथा यदि स शुभप्रवेशी भवेत्तदा धातुरूपस्य क्रयः समीचीनो वर्त्तते । क्रये कृते सति बहुतरा फलप्राप्तिः स्यात् । यदि प्रवेशी अशुभो भवेत्तदा क्रये क्षीणता स्यात् कोऽर्थः फलप्राप्तिर्न स्यात् । यदि स शुभनिर्गमो भवेत्तदा विक्रयः समीचीनो वर्त्तते । धातुरूपस्य विक्रये कृते सति बहुतरफलप्राप्तिः स्यात्। यद्यशुभो भवेत्तदा विक्रये क्षीणता स्यात् कोऽर्थः फलप्राप्तिर्न स्यात् । अत एव विक्रयं नैव कुर्यात् । यदि स शुभस्थिरो भवेत्तदा धातुसंबंधस्य स्थापनं समीचीनं वत्तत स्थापने लाभाधिक्यं भविष्यति । अत एव स्थापनीयं बहुतरफलप्राप्तिर्भविष्यति । यद्यशुभो भवेत्तदा स्थापने दोषः । अत एव शीघ्रतया विक्रयः कर्त्तव्यः । एवं यदि स शुभद्विस्वभावो भवेत्तदा तूर्णमेव क्रयं कृत्वा विक्रयं कुर्यात् । धातुसंबंधिप्रश्नस्तदा समीचीनः स्यात् । स्थापने दोषः । एवं यदि मूलस्य क्रयविक्रयरूपः प्रश्नो भवेत्तदा प्रश्नरमलस्य द्वितीयगृहरूपिणं चतुर्थगृहरूपिणा गुणयेत् ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा क्रयविक्रयेषु शुभाशुभान्वितैः प्रवेश्यादिभिः पूर्ववत्फलं वाच्यम् । प्रवेशिना क्रयं निर्गमेण विक्रयं स्थिरेण स्थापनम् विक्रयं च द्विस्वभावेन क्रयो विक्रयश्चापि शुभेन फलप्राप्तिः अशुभेन क्षीणत्वम् ॥ एवं जीवेषु दासीदासचतुष्पदानां क्रयविक्रयरूपः प्रश्नो भवेत्तदा प्रश्नरमलस्य द्वितीयगृहरूपिणं षष्ठगृहरूपिणा गुण-

येत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा क्रयविक्रयेषु शुभाशुभान्वितैः प्रवेश्यादिरूपैः पूर्ववत्फलं वक्तव्यम् । एवं यदि बृहच्चतुष्पदानां क्रयविक्रयरूपः प्रश्नो भवेत्तदा द्वितीयगृहरूपिणं द्वादशगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा बृहच्चतुष्पदान क्रयविक्रयेषु शुभाशुभान्वितैः प्रवेश्यादिरूपैः पूर्ववत्फलं वाच्यम् । प्रवेशिना क्रयं निर्गमेण विक्रयं स्थिरेण स्थापनं द्विस्वभावेन तूर्णमेव क्रयं कृत्वा विक्रयं कुर्यात् । सर्वत्रैव शुभेन फलप्राप्तिः अशुभेन क्षीणता स्यात् ।

अथ रमलार्णवग्रन्थकर्तृ सम्मतमाह ।

यदि प्रष्टा पृच्छेत् । भो रमलज्ञ अस्मिन् क्रये विक्रये च फलप्राप्तिर्भविष्यति वा क्षीणता भविष्यतीति तदा द्वितीयगृहरूपिणं पंचमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं रूपिणं प्रष्टुर्भांडारस्य जानीयात् । तथैवाष्टमगृहरूपिणं चतुर्दशगृहरूपिणा गुणयेत ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा येन सार्द्धं प्रष्टा क्रयं विक्रयं च कर्तुमिच्छतितस्य भांडारस्य ज्ञेयम्।अथोभयोर्भांडारस्य रूपिणौ स्वस्मिन्गुणितौ कर्तव्यौ । ताभ्यां य उत्पन्नो भवेत्तं रूपिणं पश्येत् । यदि स शुभो भवेत् मातृगृहेष्वन्वादेशं कुर्यात्तदा प्रष्टुः फलप्राप्तिः स्यात् । अशुभश्चेत्तदा तयोर्निकटे प्रष्टा कदापि न यायात् । कृते दोषः । किंचिदपि लाभः क्रये विक्रये च नो भवेत् । अपरं यदि स एव शुभो भूत्वा दुहितृमध्येऽन्वादेशं कुर्यात्तदा येन सार्द्धं प्रष्टा क्रयं विक्रयं च कर्तुमिच्छति तस्य पुरुषस्य फलप्राप्तिः स्यात् । अशुभश्चेत्तदा तस्य पुरुषस्य कश्चिदपि लाभः क्रये विक्रये नो भवेत् । एवं यदि स शुभो भूत्वा उभयस्मिन्स्थले मातरि दुहितर्य्यप्यन्वादेशं कुर्यात्तदा प्रष्टुः फलप्राप्तिस्तथा येन सार्द्धं प्रष्टा क्रयं विक्रयं च कर्तुमिच्छति तस्यापि फलप्राप्तिः स्यात् । एवं द्वयोरपि पुरुषयोः फलप्राप्तिः स्यात् । एतत्सर्वं शुभरूपिणा स्यात् । अशुभश्चेत्तदा

तयोर्निकटे नो जायते। तयोरिति क्रयविक्रययोः। अथ यदि स रूपी उभयस्मिन्स्थले मातरि दुहितरि चान्वादेशं नैव कुर्यात् तदा क्रमाणां मतेन तस्य रूपिणो गृहे द्रष्टव्यं को रूपी पतितो वर्त्तते। यदि शुभरूपी भवेत्तदा क्रये विक्रये च प्रष्टुः फलप्राप्तिः स्यात्। यद्यशुभरूपी भवेत्तदा क्रये विक्रये च प्रष्टुः क्षीणता स्यात्। अपरं विवर्णे शुभाशुभान्वितैः प्रवेश्यादिरूपैः पूर्ववत्फलं वक्तव्यमिति।

अथ क्रयविक्रयाभ्यां फलप्राप्तिर्भविष्यति वा नेत्यत आह।

तदा प्रश्नरमलस्य द्वितीय२गृहैकादश११गृहयो रूपिणौ द्रष्टव्यौ। यदि द्वौ शुभप्रवेशिरूपौ भवतस्तदा तद्दिने संपूर्णफलप्राप्तिः क्रयविक्रयाभ्यां स्यात्। यदि च द्वयोर्मध्ये चैकः शुभो भवेदेक अशुभस्तथा निर्गमादिभिर्मिश्रितौ स्यातां तदा तौ द्वितीयै२कादशौ११स्वस्मिन्गुणितौ कर्तव्यौ ताभ्यां य उत्पन्नो भवेत्तं रूपिणं पश्येत्। यदि स शुभरूपी भवेत्तथा स एव कुतश्चिन्मित्रत्वदृष्ट्या द्वितीयं गृहं धनस्थानं पश्येत्तथा तद्दिने सम्यक्फलप्राप्तिः क्रयविक्रयाभ्यां स्यात्। अपरं यदि स एव शुभरूपी धनस्थानं दुष्टत्वदृष्ट्या पश्येत्तदा तद्दिने क्लेशोत्पत्तिस्तथा केनापि सह कलहो भवेत्। परं तु यद्यशुभरूपी दुष्टत्वदृष्ट्या धनं२ पश्येत् तदा तु ध्रुवं तद्दिने क्लेशोत्पत्तिस्तथा कलहादिकं वाच्यम्।

अथ मम कार्यं कया रीत्या भविष्यतीत्यत आह।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं १ सप्तमगृह ७ रूपिणं च पश्येत्। यदि द्वावपि शुभौ भवतस्तदा तद्दिने संपूर्ण भाग्योदयो भवेत्। अत एव तद्दिने यत्कार्यं कुर्यात् तत्सर्वं सिद्धिं प्रयाति। यदि च द्वयोर्मध्ये चैकः शुभ एकश्चाशुभस्तदा तौ स्वस्मिन्गुणितौ कर्तव्यौ। ताभ्यां य उत्पन्नो भवेत्तं रूपिणं प्रश्नरमलेषु पश्येत्। यदि स शुभंगृहेऽन्वादेशं कुर्यात्सोऽपि शुभो भवेत्तदा

प्रश्नादिने संपूर्णभाग्योदयः स्यात् । यत्कार्यं कुर्यात्तत्सर्वं सिद्धिं प्रयाति । यदि स शुभोऽपि प्रश्नरमलेष्वशुभगृहेऽन्वादेशं कुर्यात्तदा तद्दिने सर्वतः स्वात्मानं संयमेन स्थापयेत् । तद्दिनमभाग्योदयस्य ज्ञेयम् । अत एव तद्दिने किमपि कार्यं न कर्तव्यामित्यर्थः । परंतु यदि स रूपी अशुभो भवेत्तथाऽशुभगृहेऽन्वादेशं कुर्यात्तदा तु ध्रुवं सर्वं वर्ज्यं तद्दिने यत्नेन स्वात्मानं रक्षेत् । केषांचित्कार्याणां निकटे नो यायात् ।

अथ ऋणदापनं कीदृशं वर्त्तते इत्यत आह ।

तदा प्रश्नरमलस्य द्वितीयगृहरूपिणं पश्येत् यदि द्वितीयरूपी प्रवेशी भवेत्तथा क्रमाणां मतेन द्वितीयगृहस्य स्वामी रूपी प्रश्नरमलस्य द्वितीयरूपिणा सार्द्धं केंद्रगृहेषु १, ४, ७, १०, वा पणफरगृहेषु २, ५, ८, ११, अन्वादेशं कुर्यात्तदा तु ऋणं दापयेत् यद्येवं भवेत् यदि द्वितीयगृहरूपी अशुभो भवेत्तदा विचार्य दापयेत् । एवं द्वितीयगृहरूपी प्रश्नरमलस्य शुभस्थिररूपी भवेत्तथैव क्रमाणां मतेन द्वितीयगृहस्य स्वामी रूपी तेन द्वितीयगृहरूपिणा सार्द्धं केंद्रगृहेषु वा पणफरगृहेष्वन्वादेशं कुर्यात्तदा स्थिरतया ऋणं दापयेत् । यदि द्वितीयगृहरूपी अशुभो भवेत्तदा बहुदिनोपरि ऋणं दापयेत् । एवं यदि प्रश्नरमलस्य द्वितीयगृहे निर्गमो भवेदथवा द्विस्वभावो भवेद्यद्यपि शुभस्तथापि ऋणं नैव दापयेत् । परंतु यदि तु द्वितीयगृहे निर्गमद्विस्वभावरूपावशुभौस्तस्तथा शुभगृहेषु आपोक्लिमगृहेषु क्रमाणां मतेन द्वितीयगृहस्य स्वामी तेन सार्द्धं ३, ६, ९, १२ अन्वादेशं कुर्यात्तदा तु ध्रुवमृणं न दापयेत् । यद्यस्मै दत्तं स्यात्तत्तस्यैव भवेद्ध्रुवमिति वचनात् ।

अथ द्रव्यं हस्तगतं कया रीत्या भविष्यतीत्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं पश्येत् । यदि स शुभो भवेत्तथा क्रमाणां मतेन प्रथमगृहस्य स्वामी शुभगृहेष्वन्वादेशं कुर्यात् ।

तथा प्रश्नरमलस्य सप्तमरूपीबलरहितो भवेत्तदा सम्यक् प्रकारेण द्रव्यं हस्तगतं भविष्यति करिष्यति वा। परंत्वष्टमगृहरूपी यदि प्रवेशी भवेत्तदा तु ध्रुवं द्रव्यं हस्तगतं करिष्यतीति वक्तव्यम्। विपरीते विपर्य्यय-फलं वाच्यम्। अथ यदि प्रथमगृहे त्रयोदशगृहे च प्रवेशी भवेत्। तथा सप्तमगृहे चतुर्दशगृहे च निर्गमो भवेत्तदा वैरत्वेन याचक-पुरुषो द्रव्यं याचयेत्। परंतु याच्यमानपुरुषो नो दापयेत्। एवं यदि प्रथमगृहे त्रयोदशगृहे च निर्गमो भवेत्। तथा सप्त-मगृहे चतुर्दशगृहेच प्रवेशी भवेत्तदा दाता पुरुषो दापयेत्। परंतु ग्राहक पुरुषो न गृह्णीयात्।

अथ द्रव्यस्य हस्तागतस्य स्थितिर्भविष्यति वा व्यय इत्यत आह।

तदा प्रश्नरमलस्य तुलागृहं १९ पश्येत्। यदि तस्मिन् गृहे शुभ-रूपी प्रवेशी भवेत्तदा हस्तगतस्य द्रव्यस्य स्थितिः स्यात् यद्यशुभो भवेत्तदा हस्तागतस्य द्रव्यस्य स्थितिर्न स्यात्। नात्र संदेहः।

अथ ममाभिप्रायः सिद्धिं प्रयास्यति वा नेत्यत आह।

तदाष्टमगृहे ८ द्वादशे च १२ द्रष्टव्यम्। यद्युभयस्मिन्गृहे शुभप्रवेशी भवेत्तदा मनोभिप्रायः सिद्धिं प्रयाति। यद्यशुभो भवेत्तदा मनोऽभिप्रायः सिद्धिं न प्रयाति। परन्तु द्वाभ्यां ८। १२ य उत्पन्नो भवेत्स यदि द्विस्वभावरूपो भवेत्तदा तु ध्रुवं मनोऽभिप्रायः सिद्धिं न प्रयाति। एवं द्वौ तौ ८। १२ रूपिणौ यदि निर्गमौ वा द्विस्वभावौ स्यातां तथापि नो सिद्धिः स्यात्। नात्र संदेहः।

अथ मम ऋणमोचनं भविष्यति वा नेत्यत आह।

तदा प्रश्नरमलस्य प्रथमगृहं पश्येत्। यदि प्रथमगृहे तीक्ष्णांशु-ः भवेत्तथा स एव द्वितीयगृहेऽष्टमगृहे च यद्यन्वादेशो भवेत्तदा प्रष्टारं प्रति शुभवृत्तांतो वक्तव्यः किंच। भो प्रष्टस्तव ऋणमोचनं भविष्यति ध्रुवम्। अथ यदि प्रथमगृहे वा द्वितीयगृहे सौरि ः रूपी

भवेद्वा मंदगो ⁝ भवेद्वा स्थिररूपिणां मध्ये ⁝ ⁝ कोऽपि भवेत्तथा स एव प्रश्नरमलस्य तृतीयगृहे वा षष्ठगृहे वाष्टमगृहेऽन्वादेशो भवेत्तदा प्रष्टारं प्रत्येवं वक्तव्यम् । किंच । भो प्रष्टस्तवोपरि ऋणं बहुतरं भविष्यति वा वर्त्तेत । भवेद्वा परंतु शीघ्रतया ऋणमोचनं नो भविष्यति । यदि चाष्टमगृहे सौरिरूपी ⁝ तवेत्तथा स एव षष्ठ ६ गृहे द्वादश १२ गृहे चान्वादेशो भवेत्तदा ऋणकारणेन स पुरुषो बंधगतो भवेत् । यदि च प्रश्नरमलस्य प्रथमगृहे द्वितीयगृहे वा शुभरूपी भवेत्तथा स एवाष्टमगृहे वा चतुर्दशगृहे वा षष्ठगृहेऽन्वादेशो भवेत्तदा तूर्णमृणमोचनं भवेत् परंतु सुगमेन स्वायत्त्येन च नात्र संदेहः ।

अथ कोपि प्रवासिनश्चागमनं पृच्छेदित्यत आह ।

तदा प्रश्नरमलस्य द्वितीयगृहे पश्येत् । यदि निर्गमो भवेत्तथा।इमे ⁝ ⁝ तदा प्रवासी आयास्यति । परंतु यदि प्रथमगृहे प्रवेशी नो भवेद्यथा इमे ⁝ ⁝ अपरं यदि द्वितीयगृहे प्रवेशी भवेत्तदा प्रवासी आगच्छेत् । परंतु प्रथमगृहे प्रवेशी वा निर्गमः समबिंदुरूपी भवेद्यथा इमे ⁝ ⁝ यदि प्रथमगृहे शीतांशुबोधनमंदगसौम्य ⁝ ⁝ रूपिणां मध्ये कोप्येको भवेत्तदा झटित्येव प्रवासी आयास्यति कस्मात्। इमे चत्वारो रूपिणो विपरीतरूपेषु स्थापितेष्वपि रूपांतरं न प्राप्नुयुरिति वचनात् । अपरं यद्येभ्य अन्ये रूपिणः प्रथमगृहे द्वितीयगृहे च स्युस्तदा प्रवासी शीघ्रतया नागच्छेत् बहुदिनोपरि चागमनं वाच्यम् । नात्र संदेहः श्रीगुरुर्ज्जयति ।

अथ केचिद्रमलाचार्य्याः कंचिद्विशेषं वदन्ति तदाह ।

प्रश्नरमलस्य प्रथमगृहप्रभृतिषोडशगृहपर्य्यंतं रूपिणां युग्मकेवलमिश्रितं बिंदुसंख्यासमूहं कुर्यात्तं समूहं चतुर्भि ४ र्भजेत्।एक १ शेषे झटित्येव प्रवासी आयाति।द्वि २ शेषे कतिपयदिनोपरि प्रवासी आयाति। एवं त्रि ३ शेषश्चेत्तदा गमनोपरि प्रवासिनो मनो नास्तीति वक्तव्यम् ।

यदि चतुः ४ शेषश्चेत्तदा प्रवासी कदापि नायास्यति। नात्र संदेहः। अथ मयोच्यते चैतत्प्रवासिनः प्रश्नः प्राचीनग्रन्थात् कथितः। अपरं तेन ग्रन्थकर्त्रा तस्मिन् पुस्तके प्रवासिन आगमनाऽध्याये प्रवेशिनिर्गमस्थिरयोर्मध्ये भेदो नो कृतः परंतु सर्वान् प्रवेशिरूपान् कथितवान्। प्रवेशी तु प्रवेशी एव तथा स्थिरोपि प्रवेशिफलदः। एवं निर्गमद्विस्वभावयोरपि मध्ये कश्चिद्भेदो न स्थापितस्तेन। परंतु सर्व्वान्निर्गमरूपान् कथितवान्निर्गमस्तु निर्गम एव तथा द्विस्वभावोऽपि निर्गमफलदः स्यात्। अत एव प्रवासिन आगमन-प्रश्ने निर्गमप्रवेशिभ्यां फलमुक्तं मया पूर्वम्।

अथ रमलार्णवग्रन्थमतेन कश्चिद्विशेष उच्यते।

प्रश्नरमलस्य प्रथमगृहे यो रूपी पतितः स्यात् स एव यदि दशम-गृहे १० एकादशगृह ११ चान्वादेशो भवेत्तदा प्रवासिन आगमनं भवेत् शीघ्रतया। अथ प्रश्नरमलस्य नवमगृहे यो रूपी प्रवेशी समागतः स्यात् स एव यदि सप्तम ७ गृहे चतुर्थ ४ गृहे चान्वादेशो भवेत्तदा प्रवासिन आगमे स्थिरत्वं वर्त्तते इति वाच्यम्। अथ यदि नवम-गृहे निर्गमः स्यात्स एव त्रयोदशगृहेऽन्वादेशो भवेत्तदा प्रवासी पथि वर्त्तते झटित्येवागमिष्यति ध्रुवम्। नात्र संदेहः। अथ प्राचीनग्रन्थेष्वपि कथितं वर्त्तते। यदि प्रष्टा प्रवासिन आगमनप्रश्नं कुर्यात्तदा प्रश्नरमलस्य द्वितीयगृहे द्रष्टव्यम्। यदि यो रूपी प्रश्नरमलस्य सप्तमगृहे स्यात्स एव द्वितीयगृहे समागतश्चेदथवा प्रथमगृहे समागतः स्यात्तदा प्रवासिन आगमनं वाच्यम्। एवं यदि सप्तमगृहस्य स्वामी रूपी प्रथमगृहे वा द्वितीय-गृहे समायाति तदापि प्रवासिन आगमनं वक्तव्यं ध्रुवम्। अथ यदि सप्तमगृहस्य स्वामी रूपी च प्रश्नरमलेषु कुत्रापि नो समागतः स्यात्तदा द्रष्टव्यम्। प्रश्नरमलस्य द्वितीय २ गृहे को रूपी पतितो वर्त्तते तं द्वितीयगृहस्वामिना रूपिणा गुणयेत्। ताभ्यां य उत्पन्नो

भवेत्तं पश्येत् । यदि स नवमगृहस्य स्वामी स्याद्वा सप्तमगृहस्य स्वामी स्यात्तदा प्रवासी झटित्येवागमिष्यति । नान्यथा । यदि तस्मिन् रूपिणि पृथिव्या बिंदुर्भवेत्तदाऽऽगमनप्रश्नो बलिष्ठो ज्ञेयः । प्रवासिन आगमनस्य विचारांशो वर्त्तते । यदि तस्मिन् रूपिणि जलस्य बिंदुर्भवेत्तदा प्रवासिना सह संमेलनं स्यादिति विचारांशो वर्त्तते । यदि वायोर्बिंदुर्भवेत्तदा प्रवासिनो वृत्तांतस्य विचारांशो वर्त्तते । यदि तस्मिन् रूपिणि वह्निबिंदुर्भवेत्तदा प्रवासिनो दर्शनस्य विचारांशो वर्त्तते । एवं प्रष्टारं प्रति वक्तव्यम् । अथ यदि सप्तम-गृहस्य स्वामी रूपी केन्द्रगृहे १, ४, ७, १०, ष्वायातेष्वपि ध्रुवं दशम १० गृहे वा चैकादश ११ गृहे समागतः स्यात्तदा प्रवासी आगमिष्यति । नात्र संदेहः । अथ यदि पंचमगृहस्य स्वामी प्रथम-गृहे आगच्छेदथवा द्वितीयगृहे समागतः स्यात्तदा प्रवासिनः शुभ-वृत्तांतागमनं स्यात्तथा पत्रिकाप्यायास्यति । परंतु यदि शुभरूपी भवेत् । यद्यशुभरूपी भवेत्तदा निषिद्धवृत्तांतागमनं पत्रिकायां स्यात् । एतच्छ्रवणेन मनसि म्लानता स्यात् । एवं शुभरूपी सत्य-वृत्तांतोपरि विचारांशो वर्त्तते । तथा शुभरूपी अनृतवृत्तांतोपरि विचारांशो वर्त्तते । परंतु यदि कोपि पृच्छेदयं वृत्तांतः सत्यरूपो वर्त्तते वाऽनृतरूपस्तदैवं वक्तव्यम् ।

अथ प्रवासिन आगमने दिनसंख्या द्वितीयगृहरूपिणा वक्तव्या । इदं परीक्षितं वर्त्तते ध्रुवं नात्र संदेहः । अपरं समुचितं वर्त्तते यो रूपी द्वितीयगृहे स्यात्तस्य रूपिणः संख्याक्रमसंमतेन संख्यांकं गृहीत्वा तथा द्वितीयगृहस्य च संख्यांकं गृहीत्वा प्रवासिन आगमने दिनसंख्या वक्तव्या । यथा संख्यानुक्रमे पूर्वोक्तं मया तथैव कर्तव्यं नात्र संदेहः । अपरं प्रवासिन आगमनप्रश्नस्य शेषाज्ञाकरणं सप्त-माध्याये कथयिष्यामि यदीश्वरेच्छा वर्त्तते ।

अथ कस्मैचिद्दत्तं तद्वस्तु पुनरपि मम हस्ते चागमिष्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य द्वितीयगृहरूपिणं सप्तमगृहरूपिणा गुणयेत्।आभ्यां य उत्पन्नो भवेत्तं चतुर्दशगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं पश्येत् । यदि स रूपी पंचमगृहे वा चैकादशगृहेऽथवा चतुर्दशगृहे वा द्वितीयगृहे समागतः स्यात्तदैवं वक्तव्यम् । भोः पृच्छक सुखेनैव सुगमेन च पुनरपि तद्वस्तुन आगमनं भविष्यति । यदि च स एव रूपी षष्ठगृहे वा सप्तमगृहेऽथवाऽष्टमगृहे द्वादशगृहे च समागतः स्यात्तदैवं वक्तव्यम् । भोः प्रष्टः काठिन्येनैव परिश्रमेण च महता कष्टेन च तद्वस्तुनः आगमनं भविष्यति । यदि स एव रूपी प्रथमगृहे वा तृतीयगृहे चतुर्थगृहे च नवमगृहे दशमे च त्रयोदशे पंचदशे षोडशे च समागतः स्यात्तदैवं वक्तव्यम् । भोः प्रष्टः कदापि तद्वस्तुनो नागमनं भविष्यति । अथ केचिदेवं वदन्ति। यदि स प्रवेशी भवेत्तदैवं वाच्यं तद्वस्तुन आगमनं भविष्यति । शुभे सुगममार्गेण अशुभे काठिन्येन यदि निर्गमो भवेत्तदा तद्वस्तु नागमिष्यति । शुभे स्वायत्त्येनाशुभे काठिन्येनाशक्येनास्वायत्त्येन च । यदि स रूपी स्थिरो भवेत्तदा तद्वस्तुन आगमने स्थिरता वर्त्तते । शुभे परिणामे चागमिष्यति । अशुभे कदापि नागमिष्यति। एवं यदि द्विस्वभावो भवेत्तदा तद्वस्तुन आगमे द्विविधत्वं वर्त्तते । शुभे कतिपयदिनोपरि तद्वस्तुन आगमनं भविष्यति । अशुभे कदापि नागमिष्यति । नात्र संदेहः ।

अथ स्वामी द्वितीयां स्त्रियं करिष्यति वा न यदि कुर्यात्तदा तस्याः स्थितिर्भविष्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य द्वितीयगृहे पश्येत् । यदि प्रवेशी भवेत्तदैवं वाच्यम् । स द्वितीयां स्त्रियं करिष्यति कृतायामपि तस्याः स्थितिर्भविष्यति शुभे सुगमेनानायासेन च । अशुभे काठिन्येन

यदि निर्गमो भवेत्तदा स द्वितीयविवाहं नो करिष्यतीति वाच्यम् । यदि कुर्यात्तदा तस्याः स्थितिर्नो भविष्यति शुभे शक्येन स्वायत्त्येन च अशुभे अशक्येनाऽस्वायत्त्येन च। यदि स्थिरो भवेत्तदा द्वितीयस्त्रीकरणं स्थिरत्वे पतेत् । शुभे परिणामो बहुदिनोपरि स्यात्। अशुभे कदापि नो स्यात् यदि द्विस्वभावो भवेत्तदा द्वितीयस्त्रीकरणं वाऽकरणं द्विविधत्वे पतेत् केचिद्वदंति नो कुर्यादुभयस्मिन् शुभेप्यशुभेऽपि श्रीगुरुर्ज्ञयति ।

इति श्रीभयभंजनशर्म्मकृतौ रमलरहस्ये सारसंग्रहे धनस्थानस्य द्वितीयगृहस्याज्ञाकरणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

अस्मिन्तृतीयाध्याये तृतीयगृहस्य प्रश्नकथनस्य व्याख्यानं वर्त्तते । यः कोऽपि पुरुषो भ्रातृभगिनीस्वगोत्रकुटुंबानां प्रश्नं कुर्यात्तथा कुत्रापि निकटगमनस्य प्रश्नं कुर्यात्तथा गृहाद्गृहांतरगमनस्य इहाया इहांतरगमनस्य तथा वर्तमानावस्थाया द्वितीयावस्थांतरस्य प्रश्नं कुर्यात् तथैतस्ततो गमनस्य च प्रश्नं कुर्यात्तदा प्रश्नरमलस्य तृतीयगृहे द्रष्टव्यं को रूपी समागतो वर्त्तते । यदि शुभप्रवेशी भवेत्तदा गमनान्निवृत्तिः स्यात् कुत्रापि नो गच्छेत् प्रष्टा । तथा भ्रातृप्रभृतीनामवस्था समीचीना वर्त्तत अपरमस्य तृतीयगृहस्य विचारांशो यावन्तिवस्तून्युपरि तिष्ठंति तेषां सर्वेषामवस्था समीचीना वाच्या । अपरं कुत्रापि गमनं तु स्थिरत्वेन भवेत् । परंतु स्वायत्त्येन स्वशक्यत्वेन च । यद्यशुभप्रवेशी भवेत्तदा प्रष्टुर्भ्रातृप्रभृतीना सर्वेषामवस्था निषिद्धतरा वाच्या । तथा यानि वस्तून्यस्य विचारांशे तिष्ठंति तेषामप्यवस्था निषिद्धतरा वक्तव्या । अपरं स्वस्थितिरस्वायत्त्येनाशक्यत्वेन च । तथा प्रष्टा स्वकुटुंबस्वगोत्रेभ्यो मनोऽभिप्रायं नो प्राप्नुयात् । एवं यदि शुभनिर्गमो भवेत्तदा प्रष्टुर्भ्रा-

तृप्रभृतीनामवस्था समीचीना वाच्या । तथा तेषां कुत्रापि गमनो-
परि विचारांशो वर्त्तते । तथा प्रष्टा निकटे कुत्रापि गच्छेत् । स्वाय-
त्त्येन तत्र गते सुफलप्राप्तिः स्यात् । यद्यशुभनिर्गमो भवेत्तदा
प्रष्टुर्भ्रातृप्रभृतीनामवस्था निषिद्धतरा वाच्या तथा भ्रातृप्रभृति-
प्रष्टृणाम्मध्ये भिन्नता भवेत् । अपरं प्रष्टा झटित्येवाऽनायासेन
प्रवासं कुर्यात् कुत्रापि । परंतु अस्वायत्त्येन तत्र गते निष्फलं
भवेत् । नात्र संदेहः । अथ यदि शुभद्विस्वभावो भवेत्तदा प्रष्टुर्भ्रातृ-
प्रभृतीनामवस्था समीचीना वर्तत इति वाच्यम् । तथा समयं समयं
प्रति तेऽवस्थांतरं प्राप्नयुः परंतु स्वायत्त्येन यद्यशुभद्विस्वभावो भवे-
त्तदा प्रष्टुर्भ्रातृप्रभृतय उद्विग्नमनसः स्युः । अपरं यत्नादुदरभरणयोग-
करणं निष्फलं परंत्वस्वायत्त्येन। तथा भगिनीभ्रातृकुटुम्बादयः प्रष्टुः
शुभं नेच्छेयुः । परंतु यदि स एव रूपी स्वस्थाना २ त्तरवीयगृहे
४ । १० वा मुकाबिलागृहेऽ ७ । १ थवा मुकारनागृहेऽ २ न्वादेशं
कुर्यात्। नात्र संदेहः । अथ यदि शुभस्थिरो भवेत्तदा भ्रातृप्रभृतीना-
मवस्था समीचीना वाच्या । तथा प्रष्टा स्वस्थाने तिष्ठेत् । कोऽर्थः
कुत्रापि गमनं नो भवेत् । परंतु स्वायत्त्येन । अपरं भ्रातृप्रभृतयः
प्रष्टुर्मित्राणि स्युः तथैतेभ्यः प्रष्टा फलं प्राप्नुयात् परंतु स्थिरतया ।
अथास्मिन् द्वितीयगृहे बोधनसौम्यौ विधुना समीचीनौ
वर्त्तेते स्थिरयोर्मध्ये । कस्मात् । अस्मिन् द्वितीयगृहे तयो रूपिणोः
खेटक्रमसम्बधत्वात् । खेटक्रमे तु पूर्वोक्तं मया । लोहितस्त्वशुभ
एव । अथ यद्यशुभस्थिरो भवेत्तदा भ्रातृप्रभृतीनामवस्था निषिद्ध-
तरा वाच्या । तथा भ्रातृप्रभृतयः कस्मिन्नपि काठिन्ये कर्म्मण्युद्वि-
ग्नमनसो भवेयुः।तथा समयंसमयं प्रति चिन्ताधिक्यं कुर्य्युः। तथा ते
भ्रातृप्रभृतयो भयचित्ता भवेयुः । तथा भगिनीभ्रातृकुटुंबादयः प्रष्टुर-
शुभं वांछेयुर्नात्र संदेहः।रमलार्णवग्रन्थस्य कर्ता कश्चिद्विशेषं वदति ।

अथ भगिनीभ्रातृगोत्रकुटुम्बेभ्यो मे सुखप्राप्तिर्वा दुःखप्राप्तिरित्यत आह ।

तदा द्वितीयगृहरूपिणं प्रथमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा चाज्ञां कारयेत् । शुभाशुभान्वितैर्निर्गमप्रवेशिस्थिरप्रभृतिभिः । यथा पूर्वोक्तं मया । अथ भ्रातृप्रभृतीनां भूतकालावस्थाज्ञानं द्वितीयगृहरूपिणा तथा तेषां भविष्यकालावस्थाज्ञानं चतुर्थगृहरूपिणा ब्रूयात् । शुभे शुभावस्थाऽऽशुभेऽशुभावस्था वाच्या ।

अथ प्रष्टा यदि कुत्रापि निकटगमनस्य प्रश्नं कुर्यात् । तदा तृतीयगृहरूपिणा ब्रूयात् । यदि शुभनिर्गमो भवेत्तदा सर्वेषां संमतमध्ये प्रष्टा गमनं कुर्यात् सुगममार्गेण। यदि शुभप्रवेशी भवेत्तदापि सर्वेषां संमतमध्ये प्रष्टा यायात् । परंतु काठिन्येन नात्र संदेहः । शेषरूपिणः शुभा ज्ञेयाः । अथ प्राचीनग्रंथेष्वपि कथितं वर्त्तते । यदि प्रष्टा भगिनीभ्रातृगोत्राणामवस्थायाः प्रश्नं कुर्यात् । तदा तृतीयगृहरूपिणा ब्रूयात् । यदि तृतीयगृहे शुभरूपी भवेत्तथा स एव प्रथम १ दशमै १० । ११ कादशगृहेष्वन्वादेशं कुर्यात्तदा भ्रातृप्रभृतीनामवस्था समीचीना वाच्या तथा तेषां पदवी वर्धमानरूपा भवेत् । तेषां रूपतेजस्त्वं बहुतरं भवेत् । तथा भ्रातृप्रभृतिभ्यःप्रष्टुर्मनोऽभिप्रायाः सिद्धयन्ति। भ्रातृप्रभृतिप्रष्टॄणाम्मध्ये संमेलनं स्यात् । एवं यदि स एव तृतीयगृहस्य शुभरूपी षष्ठा ६ ऽष्टम ८ द्वादश १२ गृहेष्वाम्रेडितरूपो भवेत्तदा किंचिद्रोगित्वोपरि विचारांशो वर्त्तते भ्रातृप्रभृतीनि रोगग्रस्तानि भवंति वा प्रष्टा रोगग्रस्तो भवेत् । तथा भ्रातृप्रभृतीनामवस्था चिंतान्विता निषिद्धतरा स्यात् । अथ यदि तृतीयगृहे शुभरूपी भवेत्तथा स एव प्रथम १ दश १० मैकादश ११ गृहेष्वाम्रेडितरूपो भवेत्तदा शुभोक्तं फलं चात्र प्रतीपं वाच्यम् ।

अथ यदि कोऽपि पृच्छेन्निकटप्रवासार्थं वा स्थानांतरगमनार्थमितस्ततः प्रचलनार्थमित्यत आह ।

तदा प्रश्न रमलस्य प्रथमगृहरूपिणं तृतीयगृहरूपिणं च पश्येत् । यद्येतयोर्गृहयो रूपिणौ शुभौ स्यातां तदा निकटप्रवासकरणे तथा स्थानांतरगमने इतस्ततः प्रचलने च सम्यक्छुभं भविष्यति वा वर्त्तत इति वक्तव्यम् । यदि स एव रूपी पंचमैकादशगृहेऽन्वादेशं कुर्यात्तदा तस्मिन्निकटप्रवासादिकरणं बहुप्रसन्नतरं स्यादपरं मनोऽभिप्रायः सिद्धिं प्राप्नुयात् । अथ यदि तृतीयगृहे ऽशुभरूपी भवेत्तदा निकटप्रवासादिकरणं निषिद्धतरं वाच्यम् । यदि स एव रूपी पंचमैकादशगृहेऽन्वादेशं कुर्यात्तदा तन्निषिद्धतरं स्वल्पतरं वाच्यं स्याद्वा । इति ग्रन्थसंमतम् ।

अथ द्विस्थले गंतुमिच्छाऽस्ति कस्मिन् स्थले गच्छामीत्यत आह ।

यत्र सम्यग्भवेत्तत्र गच्छामीति द्रष्टव्यम् । तदा प्रश्नरमलस्य तृतीयगृहं नवमगृहं पश्येत् । यत्र तृतीयगृहं निकटप्रवासस्य ज्ञेयम् । तथा नवमगृहं दूरप्रवासस्य ज्ञेयम् । यत्र शुभरूपी स्यात्तत्स्थलं प्रतिगमनाय वक्तव्यम् । तत्र गते सम्यग्भविष्यति ।

अथ प्रवासं कर्त्तुमिच्छाम्यहं मार्गे निर्भयं वर्त्तते वा भयमित्यत आह ।

तत्रादौ प्रष्टुः प्रवासं पश्येत् स निकटे प्रवासं कर्त्तुमिच्छति वा दूरतः । अस्य निकटदूरयोर्गृहं तृतीयं ३ नवमं ९ पूर्वोक्तं मया । यद्यस्मिन् गृहे शुभनिर्गमो भवेत्तदा मार्गे भयं नो भवेदिति वाच्यम् । गमनार्थमाज्ञां कुर्यात् । यद्यशुभनिर्गमो भवेत्तदा मार्गे भयं स्यादिति वक्तव्यम् । अथ यदि तस्मिन्गृहे शुभप्रवेशी भवेद्वाशुभस्थिरो भवेत्तदा एवं वक्तव्यं कोऽप्येको निषेधकर्त्ता उत्पन्नो भविष्यति तस्य मार्गाऽवरोधकरणेन स्वायत्त्येन च प्रवासो नो भविष्यति । अथ यद्यशुभरूपी भवेत्प्रवेशिस्थिरयोर्मध्ये तदा प्रष्टारं भयान्वितं कुर्याद्यस्मात् प्रष्टा नो गच्छेत् । यदि यायात्तर्हि सर्ववस्तूनां

क्षयो भवेत् । अत एव नो यायात् । निषेधकरणं समीचीनम् । अथवा शुभरूपी भवेत्प्रवेशिस्थिरयोर्मध्ये यदि तदा तु ध्रुवमेव प्रष्टा प्रवासं नो करिष्यति परन्तु यदि प्रश्नरमलस्य प्रथमगृहे १ चतुर्थे४ गृहे च प्रवेशी भवेत्तदा तु ध्रुवं कदापि प्रवासं नो कुर्यात्प्रष्टा नात्र संदेहः । अथ केषु चिद्ग्रंथेषु एवं कथितं वर्त्तते ।

यदि कोऽपि पृच्छेत्प्रवासं करोम्यहं मार्गे निर्भयं वर्त्तते वा भयमित्यत आह ।

तदा प्रश्नरमलस्य नवमगृहरूपिणं पश्येत् । तेन चाज्ञां कुर्यात् । यदि लोहितः ⁝ स्यादथवाऽऽररूपी ⁝ भवेत्तदाऽऽततायिचौरादयो मार्गेषु स्थुरिति वदेत् । आततायिन इमे " अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः " ॥ १ ॥ अथ यदि तस्मिन्नवमगृहे निर्गमो भवेत्तदा मार्गे किंचिदपि भयं नो भवेदपि तु मार्गे बहुतरा प्रसन्नता स्यात् । यदि प्रवेशी भवेत्तदा । एवं विचारांशो वर्त्तते । काठिन्यं मार्गे तथा निषिद्धतरं वाच्यम् । यस्मिन्मध्ये महता कष्टेन गमनं भवेत् । मार्गे स्थलं स्थलं प्रति भयं भवेत् । यदि च स्थिरो भवेत्तदा मार्गे चिंताधिक्यं भयाधिक्यं चित्तोद्विग्नत्वं वाच्यम् । यदि द्विस्वभावो भवेत्तदा एवं विचारांशो वर्त्तते मार्गान्निवृत्तिस्यादपरं गमनागमनयोर्द्विविधत्वे पतेत् । परन्तु यदि द्विस्वभावेषु मंदगो ⁝ भवेत्तदा मार्गे निवृत्तेः कारणं रोगित्वेन वा निर्बलत्वेन वाच्यम् । मार्गे रोगित्वनिर्बलत्वे चोत्पन्ने सति मार्ग्गान्निवृत्तिः स्यात् । अथ केचिद्वदंति यदि मंदगो ⁝ नवमगृहे वाष्टमगृहेऽथवा पंचमदशमगृहे प्रश्नरमलस्याऽऽयाति तदा नौकायानं बहुसमीचीनं वाच्यम् । ईश्वरो वेत्ति ।

अथ प्रवासकरणं यन्मनसि स्थापितं वर्त्तते तत्र गच्छामि न वेत्यत आह ।

तदा प्रश्नरमलस्य तृतीयगृहरूपिणं पश्येत् । यदि निर्गमो भवेत्तदा अथवा द्विस्वभावो भवेत्तदा गमनं समीचीनं व-

र्त्तते गंतव्यामिति वाच्यम् । परन्तु यदि चतुर्थ ४ गृहे निर्गमो भवे-न्नान्यथा कस्मात् । गमनं तु भिन्नत्वरूपं वर्त्तते भिन्नस्य रूपिणो निर्गमद्विस्वभावस्तेषां मध्ये यद्येको निर्गमद्विस्वभावरूपी प्रश्नरमलस्य तृतीयगृहे ३ चतुर्थगृहे ४ चागतः स्यात्तदा ध्रुवं यायात् । गते सति बहुसमीचीनं स्यादिति वचनात् । यदि तृतीयगृहे चतुर्थगृहे च प्रवेशी स्थिररूपिणां मध्ये कोप्येको रूपी भवेत्तदा तु गमनमेव नो भवेत् । यदि गच्छेत्तर्हि नेष्टं वाच्यम् ।

अथ प्राचीनग्रन्थसम्मतं प्रवासिप्रश्न आह ।

यदि प्रश्नरमलस्य प्रथमगृहे तृतीयगृहे चतुर्थनवमगृहेषु निर्गमो भवेत्तथा भिन्नत्वरूपी द्विस्वभावोऽपि पतितः स्यात्तदा यायात् । गते सम्यग्वर्त्तते । यदि तेषु गृहेषु १,३,४,९ प्रवेशी भवेत्तथा संधिरूपः स्थिररूपी भवेत्तदा नो यायात् गते नेष्टम् । अथापरं यदि जिलई रमलो भवेत्तदा नो यायात् । यदि कुत्तरी रमलो भवेत्तदा तु यायात जिलई कुत्तरीति संज्ञा वक्ष्यमाणा वर्त्तते । ( अग्रे कथयिष्यामि ) सत्यम् ।

तत्र गमने मनोऽभिप्रायः सिद्धिं प्रयास्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य सप्तमगृहरूपिणं पश्येत् । यदि स रूपी तस्मिन्गृहे शुभरूपं संबंधं स्थापयति तदा तत्र गते सति मनोऽभिप्रायः सिद्धिं प्रयास्यतीति वाच्यम् । यदि तस्मिन्सप्तमगृहे स रूपी वसुरूपं संबंधं नो स्थापयति तदा तत्र गते सति कदापि मनोऽभिप्रायः सिद्धिं नो प्रयास्यतीति वाच्यम् । निषिद्धतरं वर्त्तते । शुभरूपिसंबंधस्तु पूर्वमुक्तो मया ।

अथ मद्दृष्टस्वप्नस्वरूपं फलं च ब्रूहीति प्रश्न आह ।

तदा तृतीयगृहरूपिणं पश्येत् । यदि शुभरूपी भवेत्तदा समीचीनोपरि विचारांशो वर्त्तते । स्वप्नं समीचीनं तथा तस्य फलमपि समीचीनं वाच्यम् । यद्यशुभरूपी भवेत्तदा निषिद्धतरोपरि विचारांशो वर्त्तते

तस्य फलं निषिद्धतरं वाच्यम् । अत्र स्वप्नस्य फलं तृतीयगृहेण ब्रूयात्तथा तस्य रूपं नवमगृहेण च । तदाह । यदि नवमगृहे शुभरूपी स्यात्तथा तृतीयगृहेऽशुभरूपी समागतः स्यात्तदा प्रष्टा यत्स्वप्नं दृष्टं तेन स्वप्नेन प्रष्टुर्मनसि म्लानता बहुतरा जाता परंतु तस्य स्वप्नस्य फलं समीचीनं वाच्यम् । एवं यदि नवमगृहे शुभरूपी स्यात्तथा तृतीयगृहेऽशुभरूपी समागतः स्यात्तथा एवं विचारांशो वर्त्तते । प्रष्टा यत्स्वप्नं दृष्टवान् रात्रौ तेन स्वप्नेन प्रष्टुर्मनसि प्रसन्नता वर्त्तते । परंतु तस्य स्वप्नस्य फलं निषिद्धतरं वाच्यम् । एवं यदि नवमगृहे ९ तृतीय ३ गृहे च शुभरूपी समागतः स्यात्तदा विचारांशो वर्त्तते । प्रष्टा यत्स्वप्नं दृष्टवान् तेन स्वप्नेन प्रष्टुर्मनसि प्रसन्नता वर्त्तते तया तस्य फलमपि समीचीनं वाच्यम् । एवं यद्युभयस्मिन्गृहे ३ । ९ अशुभरूपी भवेत्तदा विचारांशो वर्त्तते । प्रष्टा यत्स्वप्नं दृष्टवान् तेन स्वप्नेन प्रष्टुर्मनसि म्लानता वर्त्तते । तथा तस्य फलमपि निषिद्धतरं वाच्यम् । एवं तृतीयगृहात्स्वप्नस्य फलं तथा नवमगृहात्तस्य रूपं वक्तव्यमिति ।

प्रष्टुः स्वप्नफलं समीचीनं वर्त्तते वा नेति प्रश्न आह ।

तदा प्रश्नरमलस्य तृतीयगृहरूपिणं तृतीयगृहस्वामिना रूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं च प्रश्नरमलस्य प्रथमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा चाज्ञां कारयेत् । यदि शुभरूपी भवेत्तदा तस्य स्वप्नस्य फलं समीचीनं वाच्यम् । यद्यशुभरूपी भवेत्तदा तस्य स्वप्नस्य फलं निषिद्धतरं वक्तव्यम् । अपरत्र समुचितमेव वर्त्तते केन्द्रं पणफरापोक्लिमं च स्मरणं कारयेत् । येन बलत्वाऽबलत्वयोश्चाज्ञां कर्तुं शक्यते । यदि स रूपी केंद्रगृहे स्यात्तदा स्वप्ने न बलाधिक्यं वाच्यम् । पणफरगृहे चेत्तदाऽर्द्धबलत्वं वाच्यम् । आपोक्लिमगृहे चेत्तदा बलहीनत्वं वाच्यम् । अथ मयोच्यते यदिदानीं स्वप्नस्य फलाफलमुक्तमेतत्तु केषांचित्सामान्य-

संमतं ज्ञेयम्। अपरबहुप्रमाणतरं त्विदं वर्त्तते स्वप्नस्य फलाफलं सर्वं नवमगृहेण ब्रूयात्तदा सर्वं सत्यमेव फलं भवेत्। यथाऽधुना पूर्वोक्तं मया नवमगृहोपरि स्वप्नस्य फलाफलम्। नात्र संदेहः।

इति श्रीभयभञ्जनशर्मकृतौ रमलरहस्ये सारसंग्रहे तृतीयगृहस्य प्रश्नकथनं नाम तृतीयोऽध्यायः ॥३॥

---

## अथ चतुर्थोऽध्यायः।

तस्मिंश्चतुर्थोऽध्याये चतुर्थगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते। तत्रादौ चतुर्थगृहस्य विचारांशमाह। पितुर्विचारः। तथा पितुः स्थितेर्विचारः। सीम्नो विचारः। जीवनवृत्तिभूम्योर्विचारः। हद्दाया विचारः। क्षेत्रस्य वृक्षस्य च वृक्षरोपणस्य च विचारः। भूमिमध्ये यत्किंचिद्वस्तु द्रव्यादिकं स्थापितं वर्त्तते तस्य विचारः। यथा स्वरोदयेऽहिबलचक्रस्य विचारो वर्त्तते तथैवात्रापि कार्य्यावसाने किं भविष्यत्यस्य विचारः। प्रष्टुर्वयसो विचारः। इत्यादिविचारं चतुर्थगृहे विचारयेत् तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं पश्येत्। यदि शुभप्रवेशी भवेत्तदा प्रष्टु शुभावस्थोपरि विचारांशो वर्त्तते तथा प्रष्टुरायुषि शुभत्वं वाच्यम्। अपरकार्य्यावसाने समीचीनं वाच्यम्। तथा पिता स्वस्थान एव तिष्ठेत्। कुत्रापि स्थानं त्यक्त्वा गमनं नो कुर्यात्। परन्तु स्वायत्त्येन स्वेच्छया चापरजीवनवृत्तिभूम्या वर्द्धमानता स्यात्। तथा प्रष्टा पितुः सकाशात् फलं प्राप्नुयात्। परन्तु सुगमेन स्वायत्त्येन चैवं यावन्ति वस्तूनि चतुर्थगृहस्य विचारांशे तिष्ठन्ति सर्वेषामवस्था समीचीना वाच्या। अथ यदि चाशुभप्रवेशी भवेत्तदा शुभोक्तं फलं प्रतीपं वाच्यम् यथा पितुरवस्था निषिद्धतरा वाच्या तथा कार्य्यावसाने निषिद्धतरं फलं वक्तव्यम्। तथा पिता स्वस्थान एव तिष्ठेत परंत्वस्वायत्त्ये स्वेच्छया नो तिष्ठेत् तथा प्रष्टा पितुः सकाशात् फलं प्राप्नुयात्परंतु महता कष्टेन तथा काठिन्येन च। तथा प्रष्टुः पिता तस्य शुभत्वं नेच्छ-

तीति वक्तव्यम् । जीवनवृत्तिभूमीनां वर्द्धमानता स्यात्परंतु महता कष्टेन अथ यदि चतुर्थगृहे शुभनिर्गमो भवेत्तदा विचारांशो वर्त्तते । पिता स्वस्थानं त्यक्त्वा कुत्रापि गमनं कुर्यात् । परन्तु सुगमेन स्वायत्त्येन च । तथा प्रष्टा जीवनवृत्तिभूमिगृहादीनां विक्रयं कुर्यात् । परन्तु स्वायत्त्येन । तथा कार्य्यावसाने समीचीनं वाच्यम् । तथा प्रष्टुरायुषि शुभत्वं वाच्यम् । तथा प्रष्टा स्वपितुः सकाशात्फलं प्राप्नुयात् परंतु स्वल्पतरम् । अथ यदि चाशुभनिर्गमो भवेत्तदा विचारांशो वर्त्तते । पितुरवस्था समीचीना वाच्या । तथा प्रष्टुः सकाशात् पिता दूरतरं पतत् । परंत्वस्वायत्त्येनानायासेन ध्रुवम् । अवरजीवनवृत्तिभूमिगृहाणां परतो व्यस्तरूपं भवेत्सर्वं नष्टत्वं व्रजेत् । तथा जीवनवृत्तिभूमिगृहाणां स्वहस्ताद्गमनं भवेत्परन्तु स्वायत्त्येनानायासेन ध्रुवं शीघ्रतया । तथा प्रष्टुः कार्याऽवसाने निषिद्धतरं फलं वाच्यम् । एवं यावन्ति वस्तूनि चतुर्थगृहस्य विचारांशे तिष्ठंति सर्वेषामवस्था समीचीना वक्तव्या । अथ यदि चतुर्थगृहे शुभस्थिररूपी भवेत्तदा विचारांशो वर्त्तते पितुरवस्था यथास्थितरूपा वाच्या । तथा पिता स्वस्थान एव तिष्ठेत् परन्तु स्वायत्त्येनापरकार्य्यावसाने समीचीनं फलं वाच्यम् । तथा प्रष्टुरायुषि शुभत्वं स्थिरत्वं च वक्तव्यम् । अपरजीवनवृत्तिभूमिगृहादिकं स्वहस्ते तिष्ठेत् । एवं चतुर्थगृहविचारांशवस्तूनामागमनं प्राप्तिश्च तथा तेषां सिद्धत्वं स्थिरता स्यात् परंतु स्वायत्त्येन । अथ यदि वा शुभस्थिरो भवेत्तदा विचारांशो वर्त्तते । पितुरवस्था निषिद्धतरा वाच्या । तथा कार्य्यावसाने निषिद्धतरं फलं वाच्यम् । तथा प्रष्टुः परिणामेऽशुभं फलं स्यात् । अपरजीवन वृत्तिभूमिगृहाणामवस्था निषिद्धतरा स्यात् । तथा प्रष्टुः पिता उद्विग्नचित्तो भवेत् । वादविवादकलहभयादीनां कारणेन । अथवा कोऽपि पुरुषः प्रष्टुः पितोपरि कलहं कर्तुमिच्छति स पुरुषः प्रष्टुः पित्रा सार्द्धं कलहं कारयेत् । तथा

पितृप्रष्टोर्मध्ये विरोधत्वं वाच्यं न तु शुभत्वं कदापि स्यात् । तथा प्रष्टाऽपि स्वपितुः सकाशात्फलं न प्राप्नुयात् । एवं सर्वेषु विचारांशेषु निषिद्धतरं फलं वक्तव्यम् । अथ यदि चतुर्थगृहे शुभद्विस्वभावो भवेत्तदा विचारांशो वर्त्तते । पितुरवस्था समीचीना वक्तव्या । तथा कार्य्यावसानेऽपि समीचीनं वाच्यम् । तथा प्रष्टुः परिणामे च समीचीनं फलं वाच्यम् तथा प्रष्टुरायुषि शुभत्वं वक्तव्यम् । अपरस्त्व जीवनवृत्तिभूमिगृहादिकं कदापि विक्रीणीयात्कदापि गृह्णीयात् । एकावस्थोपरि नो तिष्ठेत् । परंतु स्वायत्त्येन सुगममार्गेण च एवं चतुर्थगृहविचारांशेषु सर्वेषु द्विविधत्वं फलं वाच्यम् । परंतु शुभत्वाश्रितम् । तथा वर्त्तमानावस्थातोऽवस्थांतरप्राप्तिः स्यात्सर्वेषां । अथ यदि चाशुभद्विस्वभावो भवेत्तदा विचारांशो वर्त्तते पितुरवस्था निषिद्धतरा स्यात् । तथा कार्य्यावसाने नेष्टं फलं वक्तव्यम् । प्रष्टुः परिणामेऽपि निषिद्धतरं फलं वाच्यम् । तथा प्रष्टुरायुषि नेष्टं फलम् । तथा स्वजीवनवृत्तिभूमिगृहादिकं कदापि विक्रीणीयात्कदापि मूलं गृह्णीयात् । परन्तु स्वायत्त्येन तथा जीवनवृत्तिभूमिप्रभृतीनां क्रये विक्रये द्रव्यादिकं क्षयत्वं व्रजेत् । अथ यदि चतुर्थगृहविचारांशेषु पितृप्रभृतीनामवस्थासुखदुःखादिकं भूतकालस्य तृतीयगृहरूपिणा ब्रूयात् । एवं भविष्यकालस्यावस्था कथनं तेषां पंचमगृहरूपिणा ब्रूयात् । वर्त्तमानकालस्य व्याख्यानं तु संप्रत्युक्तं मया । शुभे शुभावस्था वाच्या । अशुभे निषिद्धतरावस्था वक्तव्या यथा पूर्वोक्तं मया भूतभविष्यवर्त्तमानानां व्याख्यानम् । अथ प्राचीनग्रंथेष्वपि कथितं वर्त्तते । यदि स्वपितुरवस्थायाः प्रश्नं कुर्यात् । अथवा जीवनवृत्तिभूमीनां प्रश्नं कुर्याद्वा कार्य्याणां परिणामस्य प्रश्नं कुर्यात् तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं पश्येत् । यदि शुभरूपी भवेत्तदा पितुरवस्था समीचीना वाच्या । तथा जीवनवृत्तिभूमीनामवस्था समीचीना वक्तव्या । एवं कार्य्यावसानेऽपि शुभत्वं वक्तव्यम् ।

यदि स एवाशुभगृहेष्वन्वादेशं कुर्यात्तदा । तस्य रूपिणः शुभत्वं स्वल्पं भवेत् । यदि स एव शुभग्रहेष्वन्वादेशं कुर्यात्तदा तस्य रूपिणा शुभत्वं स्वल्पं वक्तव्यम् । तदा सर्वेषामवस्थाऽतीव शुभतरा वाच्या । अथ यदि चतुर्थगृहे अशुभरूपी भवेत्तदा शुभोक्तं फलं प्रतीपं वाच्यम् । यथा पितुरवस्था समीचीना वाच्या । तथा जीवनवृत्तिभूमीनामप्यवस्था निषिद्धतरा वक्तव्या । एवं कार्य्यावसानेऽपि नेष्टं फलं वाच्यम् ॥ यदि स एव शुभगृहेषु अन्वादेशं कुर्यात्तदा तस्य रूपिणः क्रूरत्वं बहुतरं वाच्यम् । यदि च शुभगृहेष्वन्वादेशं कुर्यात्तदा तस्य रूपिणः क्रूरत्वं बहुतरं स्वल्पं वाच्यम् । अथ यदि शुभाशुभाभ्यां मिश्रितरूपी चतुर्थगृहे पतितः स्यात्तदा तस्य रूपिणस्तस्मिन् गृहे स्थानादिबलत्वेन तथा शुभाशुभगृहाश्रितान्वादेशसंभवेन चाज्ञां कारयेत् ॥

अथ जीवनवृत्तिभूमिक्रयार्थप्रश्न आह ।

तदा प्रश्नरमलस्य चतुर्थगृहे पञ्चमगृहे च पश्येत्। यद्युभयोर्गृहयोः शुभरूपिणौ भवेत्तान्तदा जीवनवृत्तिभूमिक्रेता तां भूमिं क्रीणातु गृहीते सति बहुसमीचीनं भवेत् । भविष्यति वा । अपरं तस्या जीवनवृत्तिभूम्या आगमनेन बहुतरं फलं नानाप्रकारं प्राप्नुयात्प्रष्टा तथा सर्ववस्तूनां वर्द्धमानता स्यात् । अतएव ध्रुवं तां भूमिं क्रीणातु प्रष्टा । अथ यदि चतुर्थगृहे ऽशुभरूपी भवेत्तदा पंचमगृहे शुभरूपी भवेत्तदा सा जीवनवृत्तिभूमिर्या गृहीतुमिच्छति प्रष्टा सास्तव्यस्तरूपा वाच्या । परंतु तस्या भूम्या आगमनेन स्वहस्ते सुफलं प्राप्नुयात् । अथ यदि चतुर्थगृहे शुभरूपी भवेत्तथा पंचमगृहे चाशुभरूपी भवेत्तदा सा भूमिर्या ग्रहीतुमिच्छति प्रष्टा शुभरचिता रमणीयस्थला वाच्या।परंतु तस्या भूम्या स्वहस्ते चागमनेन क्षीयमाणत्वं द्रव्याणां तथा व्ययाधिक्यं स्यात् । अत्र तयोरूपिणोरन्वादेशं शुभाशुभगृहाश्रितमत्यावश्यकेन विलोकयेत् । यदि शुभरूपी अशुभगृहे-

ष्वन्वादेशो भवेत्तदा तस्य शुभत्वं स्वल्पं वाच्यम् । शुभगृहेषु शुभरूपिण अन्वादेशसंभवे बहुतरं शुभत्वं फलं वाच्यम् । एवमशुभरूपिणमपि शुभगृहे ऽन्वादेशे सति तस्याऽशुभत्वं स्वल्पं भवेदशुभगृहे शुभरूपी अन्वादेशं यदि कारयेत् तदा तस्य क्रूरत्वं वहुतरं वाच्यम् । एवं चतुर्थपंचमगृहाभ्यां जीवनवृत्तिभूमीनां स्वरूपावस्था वक्तव्या भवति ।

अथ ग्रामे वृक्षादिज्ञानमाह ।

तदर्थं वृक्षज्ञानार्थं प्रश्नरमलस्य दशमगृहरूपिणं पश्येत् । यदि शुभरूपी भवेत्तदा तस्यां भूमौ अमृतफलिनो वृक्षाः समीचीनाः संति तथा वहुतराः संति यदि स एव रूपी तस्मिन्दशमगृहे स्वगृहादिवलैः शुभावस्थां स्थापयति । तदा तस्यां भूमौ ये वृक्षाः संतु ते पुष्टा बलिनश्च तरुणा दृढ़सारा वक्तव्याः । यदि स एव रूपी तस्मिन्दशमगृहे स्वगृहादिबलैः किंचिद्बलं नो स्थापयति । अपि तु बलहीनावस्थां स्थापयति तदा तस्यां भूमौ ये वृक्षाः संति ते जीर्णाः क्षीणास्तथा बलहीना वक्तव्याः । यदि दशमगृहरूपी केंद्रगृहेषु १, ४, ७, १०, अन्वादेशं कुर्यात्तदा तस्यां भूमौ ये वृक्षाः संति ते नवीना आरोपिताः स्युः । यदि पणफरगृहेषु २, ५, ८, ११ अन्वादेशं कुर्यात्तदा ते वृक्षाः स्थविरा नातिप्राचीना मध्यमाश्च वक्तव्याः । अपरं तस्यां भूमौ चापरबहुवृक्षा आरोपणयोग्याः स्युः तेषामारोपणेच्छा वर्त्तते प्रष्टुर्मनसि वा भूमिस्थानां जनानां मनसि यदि आपोक्लिमगृहेषु ३, ६, ९, १२ अन्वादेशं कुर्यात्तदा तस्यां भूमौ ये वृक्षाः संति ते जीर्णाः स्युरिति वक्तव्यम् । अथ यदि दशमगृहेऽशुभरूपी भवेत्तदा ते वृक्षाः शुष्काः फलहीना वक्तव्याः । तथा तिक्तफलवृक्षा बहुतरा वक्तव्याः । तेषां वृक्षाणां पुष्टत्वजीर्णादिस्वरूपं केन्द्रप्रभृतिषु गृहेष्वन्वादेशसंभवेन च वक्तव्यम् । यथा पूर्वोक्तं मया । अथ तस्यां भूमौ जनानां स्वरूपमाह । तदर्थं जनानां

स्वरूपज्ञानार्थं प्रथमगृहरूपिणं पश्येत । यदि शुभरूपी भवेत्तदा तस्यां भूमौ ग्रामे च जनाः समीचीनाः स्युः । यदि स एव रूपी शुभगृहेष्वन्वादेशं कारयेत्तदा तस्यां भूम्यां जनाः सुधर्मिणः सत्यवादिनश्च वक्तव्याः । यदि चाशुभगृहेष्वन्वादेशं कुर्यात् तदा कुकर्म्मकर्तारो मिथ्यावादिनश्च वक्तव्याः । अथ यदि प्रथमगृहेऽशुभ रूपी भवेत्तदा तस्यां भूम्यां जना धूर्ताः कुकर्मकर्तारो भ्रष्टा वक्तव्याः । यदि स एवाशुभगृहेषु अन्वादेशं कुर्यात्तदा ते जनाः पिशुनाश्चौरा अनृतभाषिणो जीवहर्तारश्च वक्तव्यास्तथा निर्द्दयाः । यदि शुभगृहेषु अन्वादेशं कुर्यात्तदा ते जनाः केचित् सत्यवादिनः केचिदनृतभाषिणः केचिच्च धर्म्मात्मानः । केचित्कुकर्मकर्तारश्च स्युः ॥ अथ तस्यां भूमौ जलतृणानां स्वरूपमाह । तदर्थं प्रश्नरमलस्य सप्तमगृहरूपिणं पश्येत् । यदि शुभरूपी भवेत्तदा तस्यां भूम्यां जलतृणादिकं समीचीनं वक्तव्यम् । यदि स एव शुभगृहेषु अन्वादेशं कुर्यात्तदा तज्जलं मधुरं तथान्नपरिपाककरं स्वादिष्टं पौष्टिकं रोगहरं शीतलं सौंदर्यकरं वक्तव्यम् । तथैव तृणादिकमपि हरितं कोमलं रमणीयं पौष्टिकं वक्तव्यं यदि स एव रूपी अशुभगृहेषु अन्वादेशं कुर्यात्तदा तज्जलतृणादिकं गुणैर्मध्यमं नातिप्रशस्तं नातिनिषिद्धं वक्तव्यम् । अथ यदि सप्तमगृहे ऽशुभरूपी भवेत्तदा तस्यां भूम्यां जलतृणादिकं निषिद्धतरं वाच्यम् । यदि सएवाऽशुभगृहेषु अन्वादेशं कुर्यात्तदा तज्जलं क्षारं कृमियुतं दुर्गंधं म्लानरूपं क्षीणकरं विरूपोत्पादकं रोगकरं तप्तं वक्तव्यम् । तथैव तत्तृणादिकमपि शुष्कं कठोरं तथोद्धृतं क्षीणकरं वक्तव्यम् । यदि स एव रूपी शुभगृहेषु अन्वादेशं कुर्यात्तदा तज्जलतृणादिकं गुणैर्मध्यमं नातिशुभ्रं नातिनेष्टं वक्तव्यम् । नात्र संदेहः ।

अहमेकं गृहं ग्रहीतुमिच्छामि तत्समीचीनं भविष्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं चतुर्थगृहरूपिणं च पश्येत् ।

यद्युभयस्मिन गृहे शुभरूपिणौ भवेतां तदैवं विचारांशो वर्त्तते । भोः पृच्छक तद्गृहं समीचीनं वर्त्तते गृहीते सुफलं दास्यति ग्राह्यं यदि द्वयोर्मध्ये चैकोपि रूपी पंचमगृहे अन्वादेशं कारयेत्तदा विचारांशो वर्त्तते। तस्मिन् गृहे प्रसन्नता बहुतरा स्यात्। यदि दशमैकादशगृहे ऽन्वादेशं कुर्यात्तदा विचारांश एवं वर्त्तते तद्गृहे गृहीते सति जीवनवृत्तिभूमीनां वर्धमानता स्यात् । तथा मनोभिप्रायाः सिद्ध्यंति । एवं यदि द्वौ रूपिणौ शुभगृहेषु अन्वादेशं कुरुतां तदा तयोः शुभत्वं द्विघ्नं वक्तव्यम् । तथैकः शुभगृहेषु अन्वादेशं कुर्यात् तदा तयोः शुभत्वं स्वल्पं वक्तव्यम् । मिश्रिते मिश्रितं फलं वक्तव्यम् । अथ यदि प्रश्नरमलस्य प्रथमगृहे १ चतुर्थ ४ गृहे वा शुभरूपिणौ भवेतां तदा विचारांश एवं वर्त्तते । भोः पृच्छक तद्गृहं निषिद्धतरं वर्त्तते । गृहीते सति नेष्टफलं दास्यत्यत एव नो ग्राह्यम् । यदि द्वयोर्मध्ये चैकोपि षष्ठगृहे अन्वादेशं कुर्यात्तदा विचारांश एवं वर्त्तते तद्गृहे गृहीते सति चित्तोद्विग्नता म्लानता च बहुतरा स्यात् । यदि तृतीया ३ ष्टम ८ द्वादश १२ गृहेष्व ऽन्वादेशं कुर्यात्तदा तद्गृहे गृहीते सति जीवनवृत्तिभूमीनां क्षीयमाणता स्यात्तथा । मनोऽभिप्राया नो सिद्ध्यंति । एवं यदि तौ रूपिणावशुभगृहेषु अन्वादेशं कुर्यातां तदा तयोरशुभत्वं द्विघ्नं वक्तव्यम् । यदि शुभगृहे अन्वादेशौ भवेतां तदा तयोरशुभत्वं स्वल्पं वाच्यम् । मिश्रे मिश्रं फलं वाच्यम् । अथ यदि तयोरूपिणोर्मध्ये चैकोपि रूपी कुत्रापि अन्वादेशं न कुर्यात्तदा पृथक् २ गृहं पश्येत् । यत्र यत्र शुभरूपी स्यात्तस्य तस्य गृहस्य विचारांशतुल्यं फलं प्रष्टारं प्रति वक्तव्यम् । तद्यथोदाहरणमुत्प्रेक्षते प्रश्नरमलस्य द्वितीयगृहे शुभरूपी वर्त्तते । तदा प्रष्टुर्द्रव्यादिकं समीचीनं वर्त्तते । एवं तृतीयगृहे शुभरूपी चेत्तदा भगिनीभ्रातॄणामवस्था समीचीना वाच्या तथा प्रष्टुः प्रचलनगमनादिकं समीचीनं वक्तव्यम् । अनेनैव प्रकारेण शेषगृहाणां

शुभरूपियुतानां फलं वक्तव्यम् । यत्र यत्र शुभरूपी तत्र तत्र शुभं फलम् । एवं यत्र यत्राऽशुभरूपी तत्र तत्र नेष्टं फलं वक्तव्यम् । इति रमलार्णवग्रंथसंमतं समाप्तम् ।

अथ प्राचीनग्रंथेष्वपि कथितं वर्तते तदेवाह ।

यदि प्रष्टा स्वकार्य्याणां परिणामस्य प्रश्नं कुर्यात्तदा प्रश्नरमलस्य प्रथमगृहरूपिणं चतुर्थगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत्तथैव चतुर्थगृहरूपिणं चतुर्दशगृहरूपिणा गुणयेत्ताभ्यां य उत्पन्नो भवेत्तं चापि भिन्नं स्थापयेत् । पश्चा-द्भिन्नस्थानाभ्यामेकरूपिणं निष्कास्य तेन चाज्ञां कुर्यात् । यदि स शुभरूपी भवेत्तदा कार्यावसाने समीचीनं फलं वाच्यम् । यद्य-शुभरूपी भवेत्तदा कार्यावसाने निषिद्धतरं फलं वक्तव्यम् । अपरं यदि स एव रूपी शुभगृहेष्वन्वादेशं कुर्यात्तदा मित्रेभ्यः सुखं प्राप्नुयात्प्रष्टा । तथा द्रव्यादीनां वर्द्धमानता स्यात्कार्य्या-वसाने । यद्यशुभगृहेष्वन्वादेशं कारयेत्तदा दुष्टेभ्यः सकाशा-द्दुःखं प्राप्नुयात्प्रष्टा तथा दुष्टानामेव कारणेन वस्तूनां क्षीयमा-णता स्यान्नात्र संदेहः ।

अथ प्रष्टा स्वमित्रेण सार्द्धं मित्रत्वं स्थापयति वा दुष्टत्वमित्यत आह ।

तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं पश्येत् स कस्मिन् गृहे अन्वादेशरूपो वर्त्तते । तेन चाज्ञां कारयेत् । तथाहि यदि पंचम ५ नवम ९ गृहे चान्वादेशं कुर्यात्तदा प्रष्टा स्वमित्रेण सार्द्धं संपूर्णमित्र-त्वं स्थापाति । यदि तृतीयैकादशगृहेऽन्वादेशं कुर्यात्तदा प्रष्टा स्वमि-त्रण सार्द्धमर्द्धमित्रत्वं स्थापयति । यदि सैव रूपी सप्तमगृहेऽन्वादेशं कुर्यात्तदा प्रष्टा स्वमित्रेण सार्द्धं संपूर्णदुष्टत्वं स्थापयति यदि दशम १०गृहेऽन्वादेशं कुर्यात्तदा प्रष्टा स्वमित्रेण सार्द्धमर्द्धदुष्टत्वं स्थापयति। अथ यदि प्रथमगृहे १ द्वितीय २ षष्ठा ६ ष्टम ८ नवम ९

द्वादश १२ गृहेष्वन्वादेशं कुर्यात्तदा प्रष्टा स्वमित्रेण सार्द्धन्नातिदुष्टत्वन्नातिमित्रत्वं समानरूपं स्थापयति । नात्र संदेहः ।

अथ मित्रेण सार्द्धम्ममावस्था कीदृशी स्यादिति प्रश्न आह ।

तदा प्रश्नरमलस्य प्रथम गृहरूपिणं चतुर्थगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन चाज्ञां कारयेत् । तथाहि यदि स शुभरूपी भवेत्तदा विचारांश एवं वर्त्तते पित्रा सार्द्धं समीचीनाऽवस्था स्यात् । अशुभश्चेत्तदा व्यत्ययं फलं वाच्यम् ।

अथ पितृवृत्तिभूमिक्षेत्रेभ्यः कीदृक्फलं तथा कार्यावसाने किं स्यादित्याह ।

तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं पश्येत् । यदि शुभरूपी भवेत्तथा चतुर्थगृहस्वामी प्रश्नरमलेषु कुत्रापि स्वगृहादिबलैः स्फुटकिरणश्चेदथवा शुभरूपी निरीक्षिते वा चतुर्थगृहस्वामी प्रश्नरमलस्य प्रथमगृहे समागतः स्यात्तदा विचारांश एवं वर्त्तते । पितुः सकाशात्सुखं प्राप्नुयात्तथा फलं भाग्योदयं च प्राप्नुयात प्रष्टा । एवं जीवनवृत्तिभूमिभ्यस्तथा क्षेत्रेभ्यः स्थानेभ्यश्च शुभं फलं सुखं च प्राप्नुयात् । तथा कार्यावसानेऽपि समीचीनं फलं वाच्यम् । नान्यथा ।

परदेशे वा कुत्र शुभमित्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं चतुर्थगृहस्यरू पिणं च पश्येत् । यद्युभयस्मिन् गृहे शुभरूपी भवेत्तदा स्वदेश एव बलिष्ठत्वं भाग्योदयत्वं च स्यात् । समीचीनं वर्त्तत अत एव स्वदेश एव तिष्ठेत् । अथवा सप्तम ७ गृहरूपी अशुभो भवेत्तदान्यदेशमेव समीचीनम् । अथवा यदि तस्मिन्नभयस्मिन् गृहे १, ४ वा शुभरूपिणौ भवेतां तथा सप्तमगृहेऽपि शुभरूपी भवेत्तदा स्वदेशाद्विदेशं समीचीनं यत्र गते मनोऽभिप्रायाः सिद्ध्यंति । अत एव प्रवासं कुर्यात् । अथ यद्युभयस्मिन् गृहे चैकप्रकृतिकः। रूपी भवेदपि त्वेकः । शुभ एकश्चाशुभस्तदा स्वदेशे विदेशे च समानं फलं वाच्यम् । नात्र संदेहः।

अत्रैवास्माकं शुभमन्यत्र वेत्यत आह ।

तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं दशमगृहरूपिणं च पश्येत् कस्माच्चतुर्थगृहं प्रथमस्थलस्य तथा दशमगृहं द्वितीयस्थलस्य यत्र गंतुमिच्छतीति वचनात् । तदा द्रष्टव्यं कुत्र शुभरूपी।यत्र शुभ-स्तत्रैव समीचीनं फलं वाच्यम् । चतुर्थगृहे शुभरूपिणि सति तदा प्रथम एव स्थानं समीचीनं यत्र तिष्ठति । यदि दशमगृहे शुभरूपी भवेत्तदा द्वितीयस्थानं समीचीनं यत्र गन्तुमिच्छति। अथ यद्युभय-स्मिन्गृहे ४, १० शुभरूपिणौ भवेतां तदोभयस्मिन् स्थले समीचीनं वक्तव्यम् । एवमुभयस्मिन् गृहे शुभरूपिणौ यदि भवेतां तदोभयस्मिन् स्थले नेष्टं फलं वाच्यम् । परन्तु यदि चतुर्थगृहे निर्गमो भवेत्तदा द्वितीयस्थाने गमनं कुर्यात्प्रष्टा । शुभे सुगमेन स्वायत्त्येन च । अशुभे काठिन्येनास्वायत्त्येन च । एवं द्विस्व-भावरूपेऽपि गमनं वाच्यम् ॥ अपरप्रवेशिस्थिररूपिभ्यां कदापि गमनं स्वस्थानाद्वितीस्थानं प्रति न स्यात् ॥ ज्ञातव्यं भो मित्र चतुर्थगृहं स्वप्रथमस्थानस्य वर्त्तते तथा दशमगृहे १० द्वितीयस्थानस्य ज्ञेयम् यत्र गंतुमिच्छति ॥ अत्र मयोच्यते द्वयोरुपरि विचारयेत् ॥ नात्र संदेहः ।

अथ यदि कोऽपि पृच्छेज्जीवनवृत्तिभूमिर्मम हस्ते वा गमिष्यति वा नागमिष्यतीत्यत आह ।

तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं पश्येत् । यदि प्रवेशी भवेद-थवा यो रूपी चैनं पश्यति स प्रवेशी भवेत्तदा बलेन हस्ते भूमिराग-च्छेत् । बलसाध्या सा जीवनवृत्तिभूमिः । यदि स एव दृष्टिकर्त्ता प्रवेशी रूपी चतुर्थगृहात्तरवीयगृहे ४, १० वा मुकाविलागृहे ७ स्यात्तदा नेष्टफलदः ॥ यो भूमिं ग्रहीतुमिच्छति: तस्यैकवादी पुरुष उत्पन्नो भवेत् । तदा पश्येद्द्वयोर्मध्ये को बलवान् ॥ यदि चतुर्थगृहस्वामी स्वगृहादिबलैः स्फुटकिरणो भवेत्तदा तज्जी-

वनवृत्तिभूमिक्रयं निवृत्तिरूपं भवेत् । परन्तु प्रथमगृहस्वामी तथा चतुर्थगृहस्वामी चैतौ द्वौ प्रश्नरमलेषु कुत्रापि संमिलितौ यदि स्यातां कोऽर्थः । अग्रपृष्ठस्थौ । यथैकः पंचमगृहे द्वितीयः षष्ठगृहे अथवा तयोः स्वस्मिन्नवलोकनं पश्येत् । दुष्टत्वावलोकनेन मिलितौ वा मित्रत्वावलोकनेन भवेत्तदा द्रष्टव्यम् मित्रत्वेन संमिलितौ यातौ वा दुष्टत्वेन । यदि मित्रत्वेन संमिलितौ स्यातां तदा सुगमेन स्वायत्त्येन च तद्भूमिक्रयं निवृत्तिरूपं स्यात् । यदि दुष्टत्वेन संमिलितौ भवेतां तदा काठिन्येनास्वायत्त्येन च तद्भूमिक्रयं निवृत्तिरूपं स्यात् । अथ यदि प्रथमगृहस्वामी चतुर्थगृहे पतितस्तथा चतुर्थगृहस्वामी प्रथमगृहे समागतः स्यात्तदा । यादृशमिच्छेत्तादृशमेव स्यात् । अयं प्रकारः सर्वप्रश्नेषु कार्य्यआयाति तत्र प्रथमगृहं मनोऽभिलषितगृहं च पश्येत् । यथोक्तविधिना ऽऽज्ञां कुर्यान्नात्र संदेहः ।

अथ मम स्थितिः पित्रा सार्द्धं समीचीना वा पृथगित्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि प्रश्नरमलस्य प्रथमगृहरूपी तथा चतुर्थगृहस्वामी एतौ द्वौ रूपिणौ स्वस्मिन्मित्रत्वेन सम्मिलितौ स्यातां रूपी चोत्पन्नरूपेषु वा दृष्टिविभागेषु तदा पित्रा सार्द्धं स्थितिः समीचीना वाच्या । यदि दुष्टत्वेन सम्मिलितौ स्यातां तदा पितुः सकाशात् पृथक्स्था स्थितिः समीचीना वक्तव्या । यदि न मित्रत्वेन नो दुष्टत्वेन पश्यतस्तदा द्वावेव समानौ वक्तव्यौ । यथा पित्रा सार्द्धं स्थितिस्तथैव पितुः सकाशात् पृथक्स्था स्थितिरिति द्वे समानरूपे वक्तव्ये । नात्र संदेहः ।

अथ पितुर्द्रव्यादिषु मम निमित्तता वर्त्तते वा नेत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहे रूपिणं पश्येत् । यदि स शुभरूपी भवेत्तथा सप्तमगृहस्य रूपी शुभो भवेत्तथा पंचमगृहस्वामी रूपी स्वगृहादिबलैः शुभावस्थको भवेत्तथैव प्रश्नरमलस्य चतुर्थगृहरूपी बलहीनो भवेत्तथा प्रष्टुर्निमित्तं पितृद्रव्यादिषु ध्रुवं वर्त्तते परंतु यदि

पंचमगृहस्वामी· स्त्रीरूपी प्रथमदशमैकादशगृहेषु चान्वादेशं कुर्या· तदा निःशेषं सर्वं पितृद्रव्यादिकं ध्रुवमेव प्राप्नुयात् प्रष्टा । यदि चाष्टमगृहेऽन्वादेशं कारयेत्तदा । पितृद्रव्यं बहु स्वल्पं प्राप्नुयात् अपरं चतुर्थगृहे तथा पणफरगृहे २ सप्तमगृहे च यदि अन्वादेशं कुर्यात्तदा नातिस्वल्पतरं नातिबहुतरं पितृद्रव्यं प्राप्नुयात् । यदि चापोक्लिमगृहे ३, ६, ९, १२, ऽन्वादेशं कुर्यात्तदा स्वल्पतरं वा किंचिदपि नो प्राप्नुयात् । परन्तु यदि चापोक्लिमगृहे बलहीनत्वेनाऽन्वादेशो भवेत्तदा तु ध्रुवमेव किंचिदपि पितृद्रव्यं नो प्राप्नुयात् । नात्र संदेहः ।

अथ मन्दिरं विरचितुमिच्छामि कीदृशं वर्त्तत इत्यत आह ।

उक्तं च अजमूदाग्रन्थेषु । तदा चतुर्थगृहरूपिणं तथा षष्ठगृहरूपिणं तथाष्टमगृहरूपिणो यः साक्षीभूतो वर्त्तते तथैवाष्टम ८ गृहरूपिणं च पश्येत् यदीमे त्रयः शुभा भवंति तदा हर्म्यकरणं समीचीनं वाच्यम् यद्यशुभा भवन्ति तदा हर्म्यकरणं नेष्टम् मिश्रिते मिश्रितं फलं वाच्यम् ।

अथ मम प्रथमभर्ता शुभः स्याद्द्वितीय इति प्रश्न आह ।

तत्र प्रथमगृहं तस्याः स्त्रियो ज्ञेयम् तदा चतुर्थगृहं प्रथमभर्तुर्ज्ञेयन्तथैव दशमगृहं द्वितीयभर्त्तुर्ज्ञेयम् यत्र गन्तुमिच्छति सा तथा प्रश्नरमलस्य प्रथमगृहरूपिणं चतुर्थगृहरूपिणा गुणयेदाभ्यां य उत्पन्नो भवेत्तं चापिःभिन्नं स्थापयेत् पुनः प्रश्नरमलस्य प्रथमगृहरूपिणं दशमगृहरूपिणा गुणयेदाभ्यां य उत्पन्नो भवेत्तं च भिन्नं स्थापयेत् तदा तौ द्वौ रूपिणौ द्रष्टव्यौ यः शुभस्तत्रैव यायात् यदि द्वावपि शुभौ स्यातां तदा द्रष्टव्यम् प्रश्नरमलेषु द्वयोर्मध्ये को बलिष्ठो वर्त्तते तत्रैव यायात् यदि द्वौ चाशुभौ स्यातां तदा तस्मात्प्रथमभर्ता एव समीचीनो नात्र संदेहः ।

अथ मम दुहितॄणां कदा विवाहो भविष्यतीति प्रश्न आह ।

तदा ज्येष्ठाकनिष्ठाक्रमेण प्रथमदुहितरं पंचमगृहेण तथा द्वितीयां षष्ठगृहेण तथैव तृतीयां सप्तमगृहेण ब्रूयात् ॥ तथाहि ॥ यस्याः स्थाने निर्गमः समागतः स्यात्तस्या एव प्रथमपाणिग्रहणं भवेत् । शुभे सुगममार्गेण स्वायत्त्येन च सानंदेन पाणिग्रहणं स्यात् एवमशुभे काठिन्येनास्वायत्त्येन महता कष्टेन विवाहः स्यात् एवमेव द्विस्वभावेऽपि फलं वक्तव्यम् परंतु कतिपयदिनोपरि अथ प्रवेशिस्थिराभ्यां स्थिरत्वं पाणिग्रहणे वक्तव्यम् शुभे परिणयः स्यादशुभे कदापि पाणिग्रहणं न स्यान्नात्र संदेहः ।

अथास्मिन्भूमितले द्रव्यं स्थापितं वर्त्तते वा नेत्यत आह ।

तदा तस्मिन् भूमितले द्रव्याशा जनैः श्रुता स्याद्वा स्वयं जानाति यत्र तत्स्थाननिमित्ताय रमलं पातयेत् । उक्तं च ॥ निधिर्निवर्त्तनैकस्थः संभ्रान्तो यत्र भूतले । तदुद्देशं समाश्रित्य रमलं पातयेद्बुधः । सप्तहस्तेन दंडेन त्रिंशद्दंडं निवर्त्तनम् । तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् ताभ्यां य उत्पन्नो भवेत्तं पश्येत् यदि स प्रवेशी भवेद्वा मंदगो ⁝ भवेत्तदा तस्मिन् भूतले द्रव्यं स्थापितं वर्त्तते एवं यदि स शुभाद्विस्वभावो भवेत्तदापि तस्मिन्भूमितले द्रव्यं वर्त्तते परन्तु नो तावत्परिमितं यावत्परिमितस्याऽऽशां स्थापयति प्रष्टा केचिद्रमलाचार्य्याः प्रवेशिनामपि शुभं गृह्णंति बहुतरा नो गृह्णंति । अपरं यदि स निर्गमो भवेद्वा स्थिरो भवेत्तदा तु तस्मिन् भूतले किंचिदपि द्रव्यं नास्ति अथ रमलार्णवपुस्तकेष्वपि कथितं वर्त्तते तदाह यद्भूमिस्थनिधिनिमित्ताय रमलं पातितं स्यात्तदा तस्य प्रश्नरमलस्य तृतीय ३ चतुर्थ ४ पंचम ५ दशम १० गृहेषु पश्येत् यदीमे सर्वे प्रवेशिनः स्युस्तदा विचारांश एवं वर्त्तते तस्मिन्भूमितले ध्रुवं द्रव्यं वर्त्तते नात्र संदेहः । अपरं यदि ते निर्गमाः स्युस्तदा तस्मिन् भूमितले किंचि-

दपि द्रव्यं नास्ति यदि ते शुभद्विस्वभावाः स्युस्तदा तस्मिन् भूमितले द्रव्यं वर्त्तते परन्तु ततः किंचिद्द्रव्यं केनापि गृहीतं स्यात् । यदि चाशुभद्विस्वभावाः स्युस्तदा तु नास्त्येव एवं यदि ते स्थिरास्युस्तदापि नास्त्येव शुभश्चेद्राशुभोथ तेषु गृहेषु ३, ४, ६, १० चैकः प्रवेशी एको निर्गम एकश्च स्थिर एको द्विस्वभावो वा स्यात्तदापि नास्त्येव यदि मिश्रितरूपाः स्युस्तदाऽऽधिक्योपरि

| पूर्व | पश्चिम |
|---|---|
| उत्तर | दक्षिण |

फलं वाच्यम् परन्तु सूक्ष्मतरं द्रव्यं वाच्यम् नान्यथा नात्र संदेहः।अथ यदा ज्ञानं जातमत्र द्रव्यं वर्त्तते तदा तस्य स्थानस्य चतुर्भागं कुर्यात् तद्यथा एका ऊर्द्ध्वाधो द्वितीया तिर्यग्रेखा कार्या एकं चतुर्थभागं कृत्वा पुनरपि रमलं पातयेत् तदाऽस्य रमलस्य चतुर्थगृहे को रूपी समागतो वर्त्तते तं पश्येत् स कस्या दिशो वर्त्तत इति द्रष्टव्यम् यस्या दिशः स स्यात्तस्यां दिशि भूमिस्थं द्रव्यं वक्तव्यम् तथाहि यदि स वह्निमुखो भवेत्तदा पूर्वदिशि । यदि वायुमुखो भवेत्तदा उत्तरदिशि । यदि जलमुखो भवेत्तदा पश्चिमादिशि । यदि भूमुखो भवेत्तदा दक्षिणदिशि द्रव्यं वाच्यम् । एतद्वह्निमुखप्रभृतिरूपिणां संज्ञा पूर्वोक्ता मया तथाप्यत्र स्पष्टतरेण कथयिष्यामि । एवं तस्य स्थानस्य चतुर्दिशां मध्ये चैकां दिशं ज्ञात्वा यदि तत्र बहुविस्तारितस्थान भवेत्तदा तस्यापि कोष्ठकस्य वूर्ववच्चतुर्भागं कुर्यात् । तदुद्देशं समाश्रित्य पुनरपि रमलं पातयेत् । तस्य रमलस्य चतुर्थगृहे ४ यो रूपी समागतः स्यात्तेन वह्निमुखप्रभृतिसंज्ञान्वितेन प्रागुक्तवद्दिशा वक्तव्या । यदि च विस्वरितस्थानं नो स्यात्तथा तु दिग्ज्ञानार्थमेकवारमेव रमलपातनं समीचीनमिति प्राचीना वदन्ति ।

अथ प्राचीनग्रंथोक्तदिग्ज्ञानार्थमाह ।

केचिद्वदंति यत्र भूमितले निधिः संभ्रांतरूपः स्यात्तस्य स्थान-

स्य पूर्ववच्चतुर्भागं कृत्वा तत्र रमलज्ञो गत्वा पश्चिमाभिमुखस्तिष्ठेत् दिगुद्देशं समाश्रित्य रमलं पातयित्वा दिशं ब्रूयात् । तथाहि । तस्य रमलस्य तृतीय ३ रूपं पंचम ५ दशम १० गृहरूपिणं पश्येत् त्रयाणां मध्ये स्वगृहादिबलैः को बलिष्ठो वर्त्तते तथा कस्य बलिष्ठ-साक्षीभूतः प्रश्नरमलेषु तिष्ठति तस्यैव दिशा वक्तव्या यथा तृतीय-गृहरूपिणा तस्य स्थानस्य पश्चिमाभिमुखक्रमेण वामांगे याम्य-दिशि तद्द्रव्यं ब्रूयात् । एवं पंचमगृहरूपिणा तस्य स्थानस्य दक्षि-णांगे सौम्यदिशि तद्वक्तव्यम् । दशमगृहरूपिणा च तस्य स्थानस्य संमुखे पश्चिमदिशि तद्द्रव्यं वाच्यम् । यदैषां मध्ये कोऽपि बलिष्ठो नो भवेत्स्वगृहादिसाक्षीभूतैस्तदा तस्य स्थानस्य पूर्वदिशि कोष्ठके वक्तव्यम् । एवं यदैकवारकृतेन तस्य स्थानस्य चतुर्थांशकोष्ठकं कस्यां चिद्दिशि प्राप्तं तदा तस्यापि कोष्ठकस्य चतुर्भागं पूर्ववत्कार-येत्तदुद्देशं समाश्रित्य पुनरपि रमलं पातयित्वा प्रागुक्तवत्प्रकारं विचारयेत्तावद्यावद्द्रव्यस्थानं प्राप्नुयात् वारंवारमेवमेवं कर्तव्यं याव-द्भूमिस्थं द्रव्यं न प्राप्नुयात् ।

अथ पश्चिमदेशीयरमलाचार्य्यदिग्ज्ञानप्रकारांतरमाह ।

दिगुद्देशं समाश्रित्य रमलं पातयेद्बुधः । तस्य रमलस्य चतुर्थ-गृहरूपिणं षष्ठ ६ गृहरूपिणा गुणयेत् ताभ्यां य उत्पन्नो भवेत्तेन वह्निमुखप्रभृतिसंज्ञान्वितेन दिशं ब्रूयात्तस्य स्थानस्य चतुर्थांशरूपं वारंवारमेवमेवं कर्त्तव्यम् यावद्द्रव्यं नो प्राप्नुयात् । अथ केचि-द्रमलाचार्य्या वदन्ति प्रश्नरमलस्य चतुर्थगृहरूपिणं चतुर्दशगृहरू-पिणा गुणयेत् ताभ्यां य उत्पन्नो भवेत्तेन वह्निमुखप्रभृतिसंज्ञान्वितेन दिशं ब्रूयात् । अथ यद्यपि दिशां रूपिणः । पूर्वोक्तास्तथाप्यत्र प्रसं-गाद्व्यक्तद्वारेण तानाह तत्रादौ वह्निमुखाः पूर्वदिशो ज्ञेया वायुमुखा उत्तरदिशो ज्ञेया जलमुखाः पश्चिम-दिशो ज्ञेया भूमुखा दक्षिणदिशो ज्ञेयाः प्रयमदिगर्थरमल-

पातनेषु वह्निमुखप्रभृतिना दिशं ब्रूयात्पश्चात्तस्यामपि दिशि स्थानज्ञानार्थं वारद्वितीयादिरमलपातनेषु कोणकरूपिस्तस्याधिपः कोणकं ब्रूयात् । अत्रेदमपि ज्ञातव्यं तेषां मध्ये वाग्मी केवलः पूर्वदिशि एवं लोहितः केवल उत्तरदिशि ॥ विधुरूपिणः केवल पश्चिमदिशि ॥ तथा सौरिः केवलो दक्षिणदिशि तथैवोष्णगुरूपी पूर्वस्योत्तरदिशि ॥ तथा पातरूपी पूर्वस्य पश्चिमादिशि वक्ररूपी पूर्वस्य दक्षिणदिशि ॥ एवं बोधनः उत्तरस्य पश्चिमदिशि ॥ दैत्यार्चितः उत्तरस्य दक्षिणदिशि तथा कविरूपी उत्तरस्य पूर्वदिशि

पूर्व आग्ने. दक्षिण
ईशा. नैर्ऋ.
उत्तर वायव्य पश्चिम

एवं सूरिरूपी पश्चिमस्य दक्षिणदिशि ॥ तथा आररूपी पश्चिमस्य पूर्वदिशि तथैव तीक्ष्णांशु स्तथैव शीतांशुः पश्चिमस्योत्तरदिशि ॥ एवं मंदगो दक्षिणस्य पूर्वदिशि ॥ दक्षिणस्योत्तरदिशि । तथैव सौम्यरूपी दक्षिणस्य पश्चिमदिशि । एषां प्रयोजनम् । यथा द्रव्योत्पाटनेऽत्र कथितं तथैव चौरादिषु प्रवासिनो विचारेषु च ज्ञातव्यम् । सर्वत्रैव कार्य्यआयाति यत्र यत्र दिगपेक्षा स्यात्तत्रतत्र सर्वत्रैव विचारयेदेवमेव । अपरसर्वेष्वपि पुस्तकेष्वस्मिन् स्थले दिग्ज्ञानेऽस्तव्यस्तरूपिणो व्याख्यानं कृतं वर्त्तते । तत्र बहुप्रमाणयुतं विश्वसितं परीक्षितं च तथा रमलार्णवपुस्तकस्य संमतेन सदृशं सिद्धांततरमिदं प्रकारं ज्ञेयमधुना यदुक्तं मया । श्रीपरमेश्वरः सम्यक् प्रकारेण जानाति । नात्र संदेहः ।

अथ द्रव्यस्थानलक्षणमाह ।

येन रूपिणाऽस्तिनास्त्योर्म्मध्ये द्रव्यमस्तीति ज्ञानं जातं तमेव रूपिणं प्रश्नरमलेषु पश्येत् । यदि स वह्निमुखेन मिलितो भवेत्कोर्थस्तस्माद्रूपिण अग्रे वह्निमुखः समागतः स्यात् । यथा द्रव्य-

सूचकरूपी सप्तमगृहे। स वह्निमुख अष्टमगृहे पतितस्तदा तद्द्रव्यं वह्निनिकटे वक्तव्यम्। यथा महानसादौ। अपरं यदि स द्रव्यसूचकरूपी वायुमुखेन तद्वन्मिलितः स्यात्तदा तद्द्रव्यं प्रासादस्य च्छत्रमध्ये वर्त्तत इति वक्तव्यम्। अथवा कस्मिंश्चिदुच्चस्थाने स्यात्। अथवा चतुष्पदचर्ममध्ये स्यात्। वा ऊर्णपटमध्ये स्यात्। अथवा लोकभाषया। अतलसमध्ये स्यादेवं विधेष्वपरेषु पटेषु वाच्यम्। अथवा केषांचिच्चतुष्पदानामुदरमध्ये स्यादेतत्सर्वं स्थानं वायुमुखेन मिलितेन वक्तव्यम्। अपरं यदि स द्रव्यसूचकरूपी जलमुखेन प्राग्वन्मिलितो भवेत्तदा तद्द्रव्यं जलनिकटे वक्तव्यम्। यथा कुंभस्थानादौ वापीकूपतडागादौ च। अथवा जलमध्ये स्यात्। जलस्पर्शेन तिष्ठति। अथवा मूलसमुद्भवेषु वस्तुषु तद्द्रव्यं वाच्यम्। तृणादिकाष्ठपर्य्यंतं मूलम्। अपरं यदि स द्रव्यसूचकरूपी प्रश्नरमलेषु भूमुखेन मिलितः स्यात्तदा तद्द्रव्यं भूमितले वक्तव्यम्। अथवा भित्तिमध्ये स्यात् अथवा क्वचिदंधकारस्थाने वर्त्तत इति वक्तव्यम्। अथ यदि वह्निमुखप्रभृतिरूपी शुभो भवेत्तदा द्रव्यं प्राप्नुयाद्भूमिस्थम्। यद्यशुभो भवेत्तदा तु नो प्राप्नुयात्।नात्र संदेहः।

अथ तस्य स्थानस्य दीर्घत्वविस्तारितत्वात्तलस्थगर्तानां ज्ञानमाह।

अत्र रमलाचार्या दीर्घत्वं पटपरिमाणकारकदंडेन वदंति। उक्तं च। चतुर्विंशतिसंख्याभिरंगुलीभिर्य्यथा करः। तद्वद्धस्तद्वयेनैव दंडो वस्त्रादिमानके ॥ १ ॥ तथांगुष्ठकनिष्ठिकोर्द्ध्वैर्मानैस्तस्यद्रव्यस्थलस्य विस्तारो वक्तव्यः। तथैव तलस्य गर्तमंगुलीभिर्वाच्यम्। तथैषां ज्ञानं प्राचीनग्रंथेषु सम्यक् प्रकारेण कथितं वर्त्तते। तदेवाह। प्रश्नरमलस्य प्रथमगृहादिषोडशपर्य्यंतेषु रूपिणां वह्निबिंदून् गणयेत्। तेन रमलपातनेन द्रव्यसूचकरूपी चोत्पन्नस्तस्य प्रश्नरमलस्य। एवं वह्निबिंदुसमूहं संख्यांकं कृत्वा प्रथमगृहादिषु प्रत्येकं दापयेत्। यत्रावसानमंकानां स्यात्तस्मिन्नेव गृहे पश्येत्। को रूपी

समागतो वर्त्तते । तथा तस्मिन्रूपिणि केवलाः कति बिन्दवः संतीति द्रष्टव्यम् । तथा स एव रूपी कतिस्थलेष्वन्वादेशरूपो वर्त्तत इत्यपि द्रष्टव्यम् । सर्वेषां वह्निबिंदूनां तत्त्वक्रमेण संख्यांकं कारयेत् । तत्संख्यांकसंमतस्य द्रव्यस्थानस्य दीर्घत्वं वक्तव्यम् । यथोपर्य्युक्तं मया । तथा हि तत्त्वगणना । वह्नेरेकं १ वायोर्द्वयम् २ जलस्य त्रयम् ३ पृथिव्याश्चत्वारः ४ एवं प्रश्नरमलस्य प्रथमगृहादिषोडशगृहपर्य्यंतं वायुवह्निसंख्याभिः केवलरूपिभिस्तस्य द्रव्यस्थानस्य विस्तारं ब्रूयात् । तलस्थगतं परिमाणं तु पृथ्वीबिंदुसमूहे केवलरूपसंख्याभिर्ब्रूयाद्दीर्घत्वोक्तप्रकारवत् । नात्र संदेहः एतत्सर्वं रमलविद्याया लघुपुस्तकेषु द्रव्योत्पाटनप्रकरणेषु यत्कथितं वर्त्तते तेषां रहस्यतरसिद्धांतो ज्ञेयः सम्पूर्णः ।

अथ यमनाधीशरमलाचार्य्यो रमलार्णवपुस्तकेष्वधिकमाह तदाह ।

तस्याऽऽनयनं सम्यग् ज्ञातं मया । तदाह यमनाधीशरमलाचार्य्यः । अस्मिन् द्रव्योत्पाटनविधौ विचारद्वयमत्यावश्यकं वर्त्तते । तयोर्मध्ये चैकं त्विदम् । द्रव्यमस्ति वा नास्ति अथाऽस्तिनास्त्योर्ज्ञानमाह । तदुद्देशं समाश्रित्य रमलं पातयेत् । तस्य प्रश्नरमलस्य षष्ठगृहरूपिणमष्टमगृहरूपिणं च पश्येत् । यदि द्वावेव प्रवेशिनौ स्यातां तथा । तस्मिन्न गृहे प्रकृतिक्रमेण स्वस्थानं स्थापयतस्तदा विचारांश एवं वर्त्तते तस्मिन् भूमितले द्रव्यं वर्त्तते । यत्र द्रव्याशां स्थापयति प्रष्टा । अपरं यदि तौ निर्गमरूपौ स्यातां तदा द्रव्यं नास्ति तस्मिन् भूतले । यदि स्थिररूपौ स्यातां तदापि द्रव्यं नास्ति। यदि च शुभद्विस्वभावरूपौ स्यातां तदा तु द्रव्यमस्ति परंतु यावत्परिमितस्याशा वर्तते तावत्परिमितं नास्ति ।

अथ प्रकारांतरमाह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । यदि जिलईरमलो भवेत्तदा तस्मिन्न भूतले द्रव्यमस्ति । यदि कुत्तरी रमलो भवेत्तदा तस्मिन्न

भूतले द्रव्यमस्ति । यदि कुत्तरी रमलो भवेत्तदा तु नास्त्येव । तत्र जिलई कुत्तरीतिसंज्ञामाह । यदि त्रयोदशगृहे समबिंदुरूपी युग्मकेवल सहितैः समागतः स्यात्तदा तस्य प्रश्नरमलस्य रमलजिलाईति संज्ञा ज्ञेया । तथा चतुर्बिंदुरूपी शीतांशुः । अथवा षड्बिंदुरूपी कश्चित् । वाऽष्टबिंदुरूपी सौम्यः । एवं विधसमबिंदुरूपिणि त्रयोदशगृहे चागते सति तस्य प्रश्नरमलस्य रमलजिलाईति संज्ञा स्यात् । अथ यदि त्रयोदशगृहे विषमबिंदुरूपी पतितः स्यात्तदा तस्य प्रश्नरमलस्य नाम रमलकुत्तरी । यथापंचबिंदुरूपी वा सप्तबिंदुरूपी कश्चित् । एवं विधविषमबिंदुरूपिणि त्रयोदशगृहे समागते सति तस्य प्रश्नरमलस्य रमलकुत्तरीति संज्ञा स्यात् । जिलाईरमले द्रव्यमस्ति भूतले यत्र द्रव्याशां स्थापयति प्रष्टा । कुत्तरीरमले नास्ति नात्र संदेहः ॥ श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ।

अथ प्रकारांतरमाह ।

यदि संपूर्णप्रश्नरमलेषु षोडशगृहपर्य्यंतेषु सुवाई ७ समानी ८ रूपिणः समागताः स्युरथवा मातृगृहेष्वेव । सुवाई । समानी । रूपिणः पतिता भवन्ति तदा यत्र द्रव्याशां स्थापयति तत्र द्रव्यं वर्त्तते । यद्येवं न स्यात्तदा तु नास्त्येव । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । यदि द्वितीयगृहे चतुर्थगृहे च । प्रवेशिनौ भवेतां तदा भूमिस्थद्रव्यमस्ति । एवं शुभद्विस्वभावरूपेऽपि वक्तव्यम् परन्तु स्वल्पमेव । यदि निर्गमौ भवेतां द्वितीयचतुर्थगृहे तदा तु नास्त्येव । एवं स्थिररूपेऽपि वाच्यम् । एवं विविधप्रकारेण द्रव्यसंभवं द्रव्याभावं च विज्ञाय पश्चादपरविचारं निरीक्षेत् । इति द्रव्योत्पाटनविधौ प्रथमविचारः ।

अथ द्वितीयविचारमाह ।

इदं भूमिस्थं द्रव्यं प्रकटं भवेद्वा न इत्यत आह । पूर्वोक्तस्य प्रश्न-रमलस्य द्वितीयगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तस्य रूपिणोऽष्टमगृहरूपिणा सार्द्धं संबंधं प्रकृतिस्वभावं च पश्येत् । तदाह । क्रमाणां मध्ये तथा चक्राणां मध्ये द्वौ रूपिणौ संबंधप्रकृतिस्वभावैः समानरूपौ यदि स्यातां तथा वह्निमुखादि-प्रकृतिभिः समानरूपौ वा प्रवेश्यादिस्वभावैः समानरूपौ यदि तौ द्वौ रूपिणावथवोभयस्मिन् रूपिणि वह्निस्थाने वह्निबिंदुः स्यात्तथा वायुस्थाने वायुबिंदुर्जलस्थाने जलबिंदुर्भूमिस्थाने भूबिंदुरथवा स्थानांतरे वह्न्यादयो बलिष्ठा भवंति तथा ध्रुवं बिन्दुविदीर्णं कुर्य्युः । एवं विधसंबंधप्रकृतिस्वभावैस्तौ द्वौ रूपिणौ समानरूपौ यदि स्यातां तदा चैवं वक्तव्यम् भूमिस्थं द्रव्यं प्रकटं भवेत् । यद्येवं नास्ति तदा केन बलेन भूमिस्थं द्रव्यं याचते प्रष्टा इदानीं समयो नास्ति समयान्तरे भूमिस्थद्रव्यस्य चिंतनं कर्तव्यम् । भोः पृच्छक नात्र संदेहः ।

अथास्मिन् स्थले प्राचीनग्रन्थसम्मतमाह ।

रमलस्य द्वितीयगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तस्य रूपिणोऽष्टमगृहरूपिणा सार्द्धं संबंधं प्रकृति-स्वभावं च पश्येत् । यथा यद्युभयस्मिन् रूपिणि वह्निस्थाने वह्नि-बिंदुस्तथा वायुस्थाने वायुबिंदुः जलस्थाने जलबिंदुर्भूमिस्थाने भूमिबिंदुर्य्यदि स्यादथवा स्थानांतरे वह्न्यादयो बलिष्ठाः स्युस्तथा बिंदुं विदीर्णं कुर्य्युस्तदा विचारांश एवं वर्तते भूमिस्थं द्रव्यं प्रकटं भवेत् । यदि तौ रूपिणौ संबंधं प्रकृतिस्वभावैः समानरूपौ नो स्यातां तदा केन प्रकारेण भूमिस्थं द्रव्यं याचते प्रष्टा । कदापि नो प्राप्नुयाद्द्रव्यं नात्र संदेहः ।

अथ रमलार्णवग्रंथसम्मतमाह ।

रमलस्य द्वितीयगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तस्य रूपिणोऽष्टमगृहरूपिणा सार्द्धं संबंधं प्रकृतिं स्वभावं च पश्येत् । तथाहि । यदि क्रमाणां मध्ये तथा चक्राणां मध्ये च तौ द्वौ रूपिणौ संबंधप्रकृतिस्वभावैः समानरूपौ यदि स्यातां यथा वह्निस्थाने वह्निबिंदुर्वायुस्थाने वायुबिंदुर्जलस्थाने जलबिंदुर्भूमिस्थाने भूमिबिंदुरथवा स्थानांतरे वह्न्यादयो बलिष्ठाः स्युस्तदा ध्रुवं बिन्दुं विदीर्णं कुर्युस्तदा विचारांश एवं वर्तते । भूमिस्थं द्रव्यं प्रकटं भवेत् । नान्यथा । अथ मयोच्यते यदेतत्सर्वं ज्ञानं जातमस्मिन् भूतले द्रव्यमस्ति तस्य द्रव्यस्य प्रकटत्वमपि निकटं वर्त्तते तदा तस्मिन् स्थानोपरि चतुरस्रकोष्ठकं कुर्यात् कीदृशं यस्य चत्वारः कोणकाश्चतुर्दशदिक्षु संबद्धाः स्युः । तथाहि । अथ दिग्ज्ञानार्थं पुनरपि रमलं पातयेत् । अस्य रमलस्य तुलागृहरूपिणं पश्येत् । यस्या दिशः स रूपी स्यात्तद्दिशः

| पूर्व | दक्षिण |
|---|---|
| उत्तर | पश्चिम |

कोष्ठकं ग्राह्यम् । यथा वह्निमुखश्चेत्तदा पूर्वदिशः कोष्ठकं गृह्णीयात् । वायुमुखश्चेत्तदोत्तरदिशः । जलमुखश्चेत्तदा पश्चिमदिशः । भूमुखश्चेत्तदा दक्षिणदिशः कोष्ठकं गृह्णीयात् । एवं तस्य स्थानस्य त्रिभागं तिरस्कृत्य चतुर्थांशं गृह्णीयात् । अथ पुनरपि तस्य चतुर्थांशस्यापि पूर्ववच्चतुर्भागं कुर्यात् अत्र पुनरपि रमलं पातयेत् । अस्यापि रमलस्य तुला १५ गृहे रूपिणं पश्येत् । अनेन रूपिणा तस्मिन्चतुर्थांशके तस्या दिशः कोणकं ब्रूयात् ।एवं तस्य चतुर्थांशस्यापि चतुर्थांशं ज्ञात्वा पुनस्तत्रापि चतुर्भागं कुर्यात् । पूर्ववत्पुनरपि रमलं पातयेत् ।

| पू. शून्यं. | द. । ६<br>। |
|---|---|
| शून्यं. उत्तर | शून्यं.<br>प. ५ |

अत्रापि तुलागृहे १५ रूपिणं पश्येत् । अनेन रूपिणा तस्य

सूक्ष्मचतुर्थांशस्यापि तच्चतुर्थांशं ब्रूयात् । एवं वारं वारं तावत्कर्तव्यम् ॥ यावदंगुष्ठकनिष्ठिकाविस्तारितपरिमितं शेषं तिष्ठेत् । पश्चात् खनित्वा द्रव्यं गृह्णीयात् । नात्र संदेहः । तद्यथोदाहरणे । तस्य स्थानस्य दिग्ज्ञानार्थं रमलपातनं कृतं मया । यदास्य तुला १५ गृहे द्रष्टव्यं तत्र सौम्यो वर्त्तते ⁝ अयं रूपी दक्षिणदिशो वर्त्तते । अत एव तद्दिशः कोष्ठकं गृहीतं मया

| | | | |
|---|---|---|---|
| १ २ | ३ ४ | ५ ६ | ७ ८ |
| ९ | १० | ११ | १२ |
| १३ | | १४ | |
| १५ | | १६ | |

त्रिकोष्ठकं तिरस्कृत्य तस्यापि कोष्ठकस्य चतुर्भागाः कृता मया । पूर्ववदत्रापि पूर्वदिशादिस्थापनं कृतम् । अत्र स्थानज्ञानार्थं पुनरपि रमलपातनं कृतं मया तथा हि द्रष्टव्यम् । अस्य रमलस्य तुलागृहे द्रष्टव्यं मया तत्र तीक्ष्णांशुः ⁝ स्थितः । तस्य स्थानात्तु दक्षिणस्योत्तरदिशि कथितं वर्त्तते । अत एव तस्यापि कोष्ठकस्य भागत्रयं तिरस्कृत्य चतुर्थांशं दक्षिणस्योत्तरदिशि गृहीतं मया एवं पुनरपि तस्यापि चतुर्थांशस्य चतुर्भागं कुर्यात् । पुनरपि रमलं पातयित्वा तस्य रमलस्य तुला १५ गृहरूपिणा तस्यामपि ब्रूयात् एवं वारं वारं तावत्कर्तव्यम् । यावन्मनोऽभिलषितद्रव्यस्य स्थानं नो प्राप्नुयात् । एवमंगुष्ठकनिष्ठिकाविस्तृतस्थानं चतुरस्रं प्राप्य खनयेद्द्रव्यग्रहणार्थम् । नात्र संदेहः । अथ दिग्ज्ञानार्थं प्राचीनरमलाचार्य्याः प्रकारांतरेण वदन्ति । दिग्ज्ञानार्थं रमलं पातयेत् । तत्र प्रथम १ पंचम ५ नवम ९ त्रयोदश १३ गृहरूपिणा युग्मकेवलं मिश्रितं बिंदुसमूहं कुर्यात् । एतानि गृहाणि १,५,९,१३, वह्निमुखसंज्ञकानि ज्ञेयानि । एवं द्वितीय २ षष्ठ ६ दशम १० चतुर्दश १४ गृहरूपिणां युग्मकेवलं मिलित्वा

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|
| ९ | | १० | | ११ | | १२ | |
| १३ | | | | १४ | | | |
| | | १५ | | १६ | | | |

| पू. | शू. | द. शू. |
|---|---|---|
| शून्यं | धनं | शून्यं |
| शून्यं उत्तर | | शून्यं पश्चिम |

बिंदुसमूहं कुर्यात् । एतानि गृहाणि २,६,१०,१४वायुमुखसंज्ञकानि ज्ञेयानि । एवं पुनरपि तृतीय ३ सप्तमै७कादश११पंचदश१५गृहरूपिणां युग्मकेवलमिश्रितबिंदुसमूहं कुर्यात् । एतानि गृहाणि ३, ७, ११, १५ जलमुखसंज्ञकानि ज्ञेयानि । एवं चतुर्थां ४ अष्टम८द्वादश १२ षोडश १६ गृहरूपिणां युग्मकेवलमिश्रितं बिंदुसमूहं कुर्यात् । एतानि गृहाणि४,८,१२,१६भूमुखसंज्ञकानि ज्ञेयानि।एतद्वह्निमुखप्रभृतिसंज्ञा गृहाणां पूर्वोक्ता मया स्पष्टतरेणैव।एवं वह्निमुखप्रभृतिगृहस्थितानां रूपिणां पृथक् पृथग्बिंदुसमूहं कृत्वा विलोकयेत् । एषां मध्ये य आधिक्यतरो भवेत्तदुक्तादिशि तद्द्रव्यं वक्तव्यम् । यथा । वह्निः पूर्वे वायूत्तरादिशि । जलं पश्चिमदिशि । भूमिर्दक्षिणदिशि । एवं विधिना तस्य स्थानस्य भागत्रयं त्यक्त्वा चतुर्थांशं गृह्णीयात् । पुनरपि तस्य चतुर्थांशस्यापि पूर्ववच्चतुर्भागं कृत्वा पुनरपि रमलं पातयेत् । तस्य रमलस्य वह्निमुखप्रभृतिगृहरूपिणां बिंदुसमूहं पृथक् पृथक् कृत्वाऽऽधिक्येन तस्यामपि दिशि पूर्ववत्स्थानं द्रव्यस्य ब्रूयात् । एवं पुनः पुनस्तावत्कर्तव्यं यावद्द्रव्यस्थानं नो प्राप्नुयात्। एवं यत्पलायमानवस्तुनस्तथा चौरहृतवस्तुनो गुप्तवस्तुनश्च ज्ञाने दिशं ब्रूयात् । एवं यदा तस्मिन् संपूर्णस्थाने द्रव्यस्थाने ज्ञाते तदा पश्चात्तस्य स्थानस्य दीर्घत्वविस्तरितत्वतलस्य गर्त-

स्थानां विचारं कुर्यात् । अत्र रमलाचार्या एकमेकं प्रति चैकैकं प्रकारकं कथितवन्तः । अहं तु तेषां मध्ये यः सुगमप्रकारो वर्त्तते तमेव कथयिष्यामि । तदाह । प्रश्नरमलस्य षोडशगृहपर्य्यंतस्य षोडशगृहरूपिणां रेखाणां केवलबिंदुसहितं वह्निबिंदुसमूहं कुर्यात् । एवं युग्मकेवलमिश्रितं वह्निबिंदुसमूहं कृत्वा षोडशभिर्भजेत् । शेषांकान् प्रथमगृहादिषु दापयेत् । यस्मिन् गृहे संख्या पूर्णतां यायात् । तस्य गृहस्य रूपिणं गृहीत्वा वक्ष्यमाणचक्रे पश्येत् । तथा तिर्य्यक्पंक्तौ गृहांकसमे रूपिसंमुखे कोष्ठकांकं गृह्णीयात् । ताभिरेव संख्याभिस्तस्य द्रव्यस्थानस्य दीर्घत्वं ब्रूयात् । एवं संपूर्णरमलस्य वायुबिंदुसमूहं युग्मकेवलमिश्रितं कुर्यात् । षोडशाभिर्भक्ते शेषांकान् प्रथमगृहादिषु दत्त्वा यत्र संख्या पूर्णतां यायात्तस्य गृहस्य रूपिणं गृहीत्वा चक्रं पश्येत् । तद्गृहांकसमूहे रूपिसंमुखे कोष्ठकांकं गृह्णीयात् । ताभिरेव संख्याभिस्तस्य द्रव्यस्थानस्य विस्तरितत्वं ब्रूयात् । एवं संपूर्णरमलस्य युग्मकेवलमिश्रितं जलभूम्योर्बिन्दुसमूहं कुर्यात् । तस्मिन्समूहे षोडशभि १६ र्भक्ते शेषांकान् प्रथमगृहादिषु दत्त्वा यस्मिन्गृहे संख्या पूर्णतां यायात्तस्य गृहस्य रूपिणं गृहीत्वा चक्रे पश्येत् । तद्गृहांकसमे रूपिणं संमुखे कोष्ठकांकं गृह्णीयात् । ताभिरेव संख्याभिस्तस्य द्रव्यस्थानस्य तलस्थगर्तत्वं ब्रूयात् । एवं द्रव्यार्थं विविधविचारं विचार्य्य भूमितलाद्द्रव्यं गृह्णीयात् । नात्र संदेहः । इति द्रव्योत्पाटनविधिः ।

अथ ममायुर्दायः कतिवर्षपरिमितो वर्त्तत इत्यत आह ।

तदा प्रश्नरमलस्य चतुर्थगृहरूपिणं[1] पश्येत्[2]।तथा स एव रूपी कुत्राप्यन्वादेशो वर्त्तते वा नास्तीत्यपि पश्येत्। अन्वादेशरूपेण स्थानब-

---

१ प्रथमगृहरूपिणम् । २ गुणयेत्तंरुपिणम् ।

लात्पृष्टरायुर्दायो वक्तव्यः । एवं रूपिणामुत्तममध्यमनिकृष्टायुर्दाय-ध्रुवांकैः प्रष्टुः शेषायुर्दायो वक्तव्यः । तथाहि । यदि केन्द्रगृहेषु

| ०/०/—/० * | ०/—/—/— | —/०/०/० | —/—/०/— | ०/—/०/० | ०/०/०/० | —/०/—/— | —/—/—/० | ०/०/—/— | ०/—/—/० | —/०/०/— | —/—/०/० | ०/०/०/— | ०/—/०/— | —/—/—/— | —/०/—/० | गृ. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | १० | ११ | २ | ३ | १ | ११ | १४ | १५ | ६ | ७ | ८ | ९ | १० | ११ | १ |
| ३१ | १२ | १६ | ३० | १० | ९ | १२ | १० | ११ | १२ | ७ | १२ | १३ | १४ | १५ | १६ | २ |
| १२ | २ | ३ | १२ | ४ | ५ | ९ | ६ | ३ | ७ | ८ | ९ | १० | ११ | १३ | १३ | ३ |
| ११ | ९ | २९ | १० | १५ | १२ | ३ | १ | ७ | ९ | १३ | २ | १० | १३ | १३ | १४ | ४ |
| ९ | १३ | १ | ३ | २ | ३ | ५ | १८ | ७ | ९ | ३ | ६ | १० | ११ | ११ | १३ | ५ |
| ७ | २८ | १४ | ७ | १४ | १५ | १८ | ७ | ९ | १० | ११ | १४ | ३ | ३० | ३० | ८ | ६ |
| १ | ७ | ३० | ७ | ४ | ३ | ५ | ४ | १७ | ५ | ७ | ६ | ७ | ८ | ४ | ९ | ७ |
| २७ | ११ | ४ | १८ | १८ | १ | ४ | ८ | ९ | ११ | १६ | १३ | ५ | ४ | ५ | ७ | ८ |
| २ | १ | ३ | १२ | १८ | ५ | ११ | १६ | १२ | ५ | ६ | ७ | ५ | ११ | १२ | ९ | ९ |
| २ | २९ | १९ | १२ | १० | १७ | १३ | ४ | १४ | ७ | ७ | ९ | ८ | ७ | ८ | १० | १० |
| ७ | ८ | ५ | ९ | १ | ९ | १६ | ६ | १० | ८ | १२ | १३ | ८ | ४ | ४ | १७ | ११ |
| १५ | १ | २२ | २० | १२ | १२ | १३ | १४ | १५ | ५ | १९ | १६ | ७ | १८ | ११ | १० | १२ |
| २ | २ | ४ | ७ | ५ | १२ | १५ | ६ | ७ | १८ | ७ | १९ | ८ | ९ | ८ | ११ | १३ |
| १४ | ४ | ३ | ११ | २ | १ | ११ | ३२ | १९ | ९ | ५ | १८ | १२ | ५ | ६ | ११ | १४ |
| १२ | ९ | ७ | ५ | ४ | ३ | ८ | १० | ७ | ८ | १० | १९ | १२ | ५ | ६ | ९ | १५ |
| ५ | ७ | ३ | ६ | ९ | १० | १२ | १४ | १२ | ११ | १० | ११ | ९ | ४ | ७ | २१ | १६ |

१, ४, ७, १०, अन्वादेशं कुर्यात्तदा रूपिणमुत्तमायुर्दायवर्षैः प्रष्टुः शेषायुर्दायो वाच्यः । यदि पणफरगृहेषु २, ५, ८, ११, अन्वादेशं

| ०/—/—/— | —/०/—/० | ०/—/०/— | —/—/—/— | ०/०/—/० | ०/—/—/० | —/—/—/० | —/०/—/— | —/—/०/— | ०/०/—/— | —/०/०/— | ०/०/०/— | ०/—/०/० | —/०/०/० | —/०/—/० | ०/०/०/० | रूपिणः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८६ | १२ | ६६ | १६ | ८० | ४८ | ५७ | ४८ | ८४ | १२ | १६ | ६६ | ४० |  | ८६ | ८६ | उत्तमायुः |
| ४३ | ३२ | ४० | ४३ | ४० | ४३ | २५ | ३२ | २२ | २२ | ४० | ३९ | ३५ |  | ४२ | ३२ | मध्यमायुः |
| १२ | १९ | ९ | ३० | ३० | ३ | १२ | ३० | १२ | २० | १३ | ८ | ८ |  | २० | २० | कनिष्ठायुः |

कुर्यात्तदा रूपिमध्यमायुर्दायवर्षैः प्रष्टुः शेषायुर्दायो वाच्यः । यदि आपोक्लिमगृहे ३, ६, ९, १२ अन्वादेशं कुर्यात्तदा रूपिकनिष्ठायु-र्दायवर्षैः प्रष्टुः शेषायुर्दायो वाच्यः । अथ यदि स चतुर्थगृहरूपिणि

* ५।६।१४।१५। १६ एतेषु कोष्ठेषु यथाक्रमममंतानि ⋮ ∸ ÷ ⩧ ≣ चिह्नानि ज्ञेयानि ।

कुत्राप्यन्वादेशरूपी नो भवेत्तदा तमेव चतुर्थगृहरूपिणं पश्येत् । तथाहि । यदि स रूपी चतुर्थगृहे स्वस्थानादिबलं बहुतरं स्थापयति तदा तस्य रूपिणः श्रेष्ठायुर्दायवर्षैः प्रष्टुः शेषायुर्दायो वक्तव्यः । यदि स्वगृहादिबलं मध्यमं स्थापयाति तदा तस्य रूपिणो मध्यमायुर्दायवर्षैः प्रष्टुः शेषायुर्दायो वाच्यः । यदि तस्मिश्चतुर्थगृहे स रूपी किंचिद्बलं नो स्थापयति । तदा कनिष्ठायुर्दायवर्षैः प्रष्टुः शेषायुर्दायो वाच्यः । यथा पूर्वोक्तं मया रूपिणां बलाबलम् । अथवा तस्य प्रश्नरमलचतुर्थगृहरूपिणाधिपतिगृहं विचिंतयेत् । गृहोक्तवयः क्रमं चौरादीनां वक्तव्यम् । उक्तं च । कुमारिकां बालशशी बुधश्च वृद्धां शनिः सूर्यगुरू प्रसूताम् । स्त्री कर्कशां भौमसितौ विधत्ते त्वेवं वयः स्यात्पुरुषेषु चैवम् । एषु पुंरूपिणि वयःक्रमाधिपतिः पुरुषो वाच्यः स्त्रीरूपिणि सति वयोध्रुवस्वामिनी स्त्री वाच्या । नात्र संदेहः ।

अथ कोऽपि रमलाचार्य्यो रमलार्णवनामग्रंथेषु प्रष्टुः शेषायुर्दायज्ञानार्थं कथितवांस्तदाह ।

तत्र यदि कोऽपि पृच्छेन्मम शेषायुर्दायः कतिपरिमितो वर्त्तत इत्यत आह तदुद्देशं समाश्रित्य रमलं पातयेत् । तस्मिन् प्रश्नरमले अबजदक्रमेण कति रूपिणः स्वगृहे तिष्ठंतीति पश्येत् । तेषां सर्वेषां रूपिणां रेखारहितानां बिंदूनामबजदमतेन संख्यांकं गृह्णीयात् । तावत्संख्यः प्रष्टुः शेषायुर्दायो वक्तव्यः । यथा वह्नेरेकम् १ वायोर्द्वयम् २ जलस्य त्रयम् ३ पृथिव्याश्चत्वारः ४ केवलबिंदूनां गणना ग्राह्या न तु रेखाणां कदाचित् । अथ यदि प्रश्नरमलेष्वेकोऽपि रूपी अबजदक्रमेण स्वगृहे नो भवेत्तदा प्रश्नरमलस्य प्रथमगृहादिचतुर्थगृहपर्य्यंतेषु चतुर्णामेव रूपिणामबजदमतेन संख्यांकं गृह्णीयात् । तावत्संख्यैर्वर्षैः प्रष्टुः शेषायुर्दायो वा गतायुर्दायो वाच्यः । अथ चतुर्थं ४

गृहप्रभृत्यष्टम ८ गृहपर्य्यंतस्थितानां रूपिणामबजदमतेन संख्यांकं गृह्णीयात्। तावत्संख्यैर्वर्षैः प्रष्टुः शेषायुर्दायो वक्तव्यः।

अथ गृहज्ञानार्थमबजदक्रमः।

अनेनैव क्रमेण ये रूपिणः प्रश्नरमलेषु स्वगृहे स्युस्तेषामेव संख्यांकं गृह्णीयात्। तया संख्यया प्रष्टुः शेषायुर्दायो वक्तव्यः। नात्र संदेहः।

अथ प्रकारांतरमाह।

तदुद्देशं समाश्रित्य रमलं पातयेत्। तस्याष्टमगृहरूपिणं पश्येत्। तस्य रूपिणो विजदहमतेन संख्यांकं गृह्णीयात् यथा वह्निस्थाने वकारस्य द्वयं २ वायुस्थाने जकारस्य सप्त ७ जलस्थाने दकारस्य चत्वारः ४ भूमिस्थाने हकारस्याष्टौ ८ एवं केवलबिंदूनां संख्यांकं गृहीत्वाऽष्टमगृहध्रुवांकेन योजयेत्। युक्ते सति यावत्संख्यं भवेत्तावदेव प्रष्टुः शेषायुर्दायो वक्तव्यः। तद्यथोदाहरणे उत्प्रेक्षतेऽष्टमगृहे शीतांशुः समागतः ⁝ अस्य विजदहमतेन संख्या चैकविंशतिपरिमिता २१ अत्राष्टमगृहध्रुवांक २४ युक्ते जातं पंचचत्वारिंशत् ४५ परिमितम्। एतावदेव प्रष्टुः शेषायुर्दायो वक्तव्यः। नात्र संदेहः।

अथ मम गतायुर्दायः कतिपरिमितो यात इत्यत आह।

तदा प्रथमगृहरूपिणमष्टमगृहरूपिणा गुणयेत्। ताभ्यां य उत्पन्नो भवेत्तं भिन्नं स्थापयेत्। एवं चतुर्थगृहरूपिणा गुणयेत्। आभ्यां य उत्पन्नो भवेत्तं स्थापयेत्। भिन्नस्थयोर्द्वयोरूपिणोः केवलबिंदूनां विजदहमतेन संख्यांकं गृह्णीयात्। एवं संख्यांकं भिन्नं स्थापयेत्। पुनस्तथैव विजदहमतेन रमलतुलारूपिणः केवलबिंदोः संख्यांकं गृह्णीयात्। अनेन पूर्वोक्तं भिन्नस्थं संख्यांकं गुणयेत्। गुणितसमूहसंख्यांकं यावत्परिमितं स्यात्तावानेव प्रष्टुर्गतायुर्दायो वक्तव्यः। नात्र संदेहः। इति प्राचीनरमलाचार्य्यग्रंथस्य संमतम्

अथ मम मृत्युः कया रीत्या भविष्यतीत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत्। तस्य प्रश्नरमलस्य प्रथमगृहरूपिणं १ चतुर्थ ४ गृहरूपिणा गुणयेत् ताभ्यां य उत्पन्नः स्यात्तं पश्येत्। यदि शुभनिर्गमो भवेत्तदा तस्य मृत्युरनायासेन स्यात्। यद्यशुभनिर्गमो भवेत्तदा कृशशरीरो भूत्वा मृत्युं प्राप्नुयात्। यदि शुभप्रवेशी भवेत्तदा सुखपूर्वं मृत्युं प्राप्नुयात्। यद्यशुभप्रवेशी भवेत्तदा महता कष्टेन मृत्युं प्राप्नुयात्। यदि शुभाशुभस्थिरो भवेत्तदाऽधुना मृत्युर्नो भविष्यतीति वाच्यं स्थिरत्वे मृत्युः पतेत् । यदि द्विस्वभावो भवेत्तदा मृत्युर्द्विविधत्वे पतेत्। परंतु कतिपयदिनव्यतीते सति मृत्युः स्यात् ।

अथ केन प्रकारेण मृत्युर्भविष्यतीत्यत आह ।

तदा लिसानुलअमररूपिणं पश्येत्। तदाह। प्रश्नरमलस्य चतुर्थं ४ गृहरूपिणमष्टम ८ गृहरूपिणा गुणयेत्। य उत्पन्नस्स्यात्तस्य नाम लिसानुलअमर इति कथयंति रमलज्ञाः। यदि स प्रथमगृह आम्रेडितरूपो भवेत्तदा शरीरादीनां कारणेन मृत्युः स्यात्। यदि चाम्रेडितरूपो द्वितीयगृहे भवेत्तदा द्रव्यादीनां कारणेन मृत्युः स्यात्। एवमाम्रेडिते तृतीयगृहे सति भगिनीभ्रातृस्वगोत्रस्वकुटुंबादीनां कारणेन मृत्युः स्यात् ॥ एवमग्रेऽपि षोडशगृहपर्य्यंते मृत्युकारणं वक्तव्यम्। अथ यदि तस्मिन् प्रश्नरमले लोहितरूपी ⠿ प्रकर्षं कुर्यात् तदा तीक्ष्णाग्रशस्त्रेण मृत्युभयं भवेत् ॥ यथा खड्गादयो नात्र संदेहः। अथ प्राचीनग्रंथेषु कथितम् ।

अथ द्वयोर्मनुष्ययोः स्वस्मिन्संमेलनमास्ति वा नेत्यतं आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तस्य चतुर्थगृहरूपिणं पश्येत्। यदि स प्रवेशी भवेत्तदा विचारांश एवं वर्त्तते तयोर्मनुष्ययोः स्वस्मिन्संमेलनं यातम् । यदि निर्गमो भवेत्तदा संमेलनं नो यातं स्यात् । यदि स्थिरो भवेत्तदाद्यापि संमेलने स्थिरत्वं वर्त्तते ।

यदि द्विस्वभावो भवेत्तदाद्यापि संमेलने द्विविधत्वं वर्त्तते । शुभे स्वायत्त्येनानायासेन सुगमेन संमेलनं वाच्यम् । अशुभेऽस्वायत्त्येन महता कष्टेन काठिन्येन च संमेलनं वक्तव्यम् । नात्र संदेहः ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे चतुर्थगृहस्य प्रश्नकथनन्नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पंचमोऽध्यायः ।

अस्मिन् पंचमाऽध्याये पंचमगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते। तत्रादौ पंचमगृहस्य विचारांशमाह । संतानस्य विचारः पुत्रो भविष्यति वा कन्यकेत्यस्य विचारः । दृष्टिलग्नपुरुषमित्राणां विचारः । दृष्टिलग्नस्त्रियाश्च विचारः । तन्मित्रं वर्त्तते वा नेत्यस्य विचारः आश्चर्यवस्तुनो विचारः । जीवनवृत्तिभूमिवृक्षाणां फलस्य विचारः । शुभ्रनूतनवस्तुनो विचारः । प्रेष्यपुरुषस्य विचारः । सर्ववृत्तांतानां विचारः । प्रवासिनः पत्रिकाया विचारः । नीतिकर्तुः पत्रस्य विचारः । नूतनवध्वा विचारः । गृहमंगलस्य विचारः । प्रसन्नताया विचारः । स्वांगलग्नपटस्य विचारः । नृपदत्तस्य पटस्य विचारः । इत्यादिविचारं पंचमगृहे विचारयेत् । तेषां मध्ये संतानस्य विचारो द्विविधः । एकस्त्वयम् । मदपत्यानि भविष्यंति वा ना।अथ द्वितीयः। प्रत्यक्षस्थितानां मम बालकानामवस्था समीचीना वर्त्तते वा निषिद्धतरा । तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत् । यदि स शुभप्रवेशी भवेत्तदा प्रष्टारं प्रति वक्तव्यम् । बालकानामवस्था समीचीना वर्त्तते चेति तथा पंचमगृहे । यावन्तो विचारांशाः संति तेषामवस्था समीचीना वाच्या । इमे स्वस्थान एव तिष्ठेयुः । परंतु स्वायत्त्येन सुगममार्गेण च । एभ्यः प्रष्टा फलं प्राप्नुयात् । तथा ते सदैव प्रष्टुराज्ञातत्पराः स्युः पुत्रादयस्तथा पुत्रादिभ्यः शुभं फलं प्राप्नुयात् प्रष्टा । अथ यदि कोऽपि पृच्छेदयं प्रवासिनो वृत्तांतः सत्यो वर्त्तते वाऽनृतस्तदा वक्तव्यम् वृत्तांतः सत्यो वर्त्तते ।

अथ वृत्तांतः समीचीनो वर्त्तते वा नेष्ट इत्यत आह ।

तदा द्रष्टव्यं पंचमगृहरूपी कतिस्थानेष्वन्वादेशरूपो वर्त्तते । तथा कस्मिन् स्थाने शुभगृहे वाऽशुभगृहेऽन्वादेशरूपो वर्त्तते इत्यपि द्रष्टव्यम् । यदि शुभगृहेऽन्वादेशरूपो वर्त्तते तदा समीचीनवृत्तांतो वर्त्तते । यदि चाशुभगृहेऽन्वादेशरूपो भवेत्तदा स वृत्तांतो निषिद्ध एव वक्तव्यः । अथ यदि कुत्राप्यन्वादेशरूपो नो भवेत्तदा तमेव पंचमगृहरूपिणं पश्येत् । यदि स शुभरूपी भवेत्तदा वृत्तांतः समीचीनो वाच्यः । अशुभश्चेत्तदा त्वशुभमेव वृत्तांतः समागतो वक्तव्यः ।

अथ कति वृत्तांता इत्यत आह ।

यदि कुत्राप्यन्वादेशरूपो नो भवेत्पंचमगृहरूपी तदा त्वेकवृत्तांतो वर्त्तत इत्यपि वक्तव्यम् । यद्येकस्थानेऽन्वादेशरूपो भवेत्तदा वृत्तांतद्वयं वाच्यम् । यदि द्विस्थलेऽन्वादेशरूपो भवेत्तदा वृत्तांतत्रयं वाच्यम् । यदि त्रिस्थलेऽन्वादेशः स्यात्तदा वृत्तांतचतुष्टयं ब्रूयात् । यदि चतुःस्थलेऽन्वादेशः स्यात्तदा पंचपरिमितं वृत्तांतं वक्तव्यम् । अत्र यावत्परिमितोऽन्वादेशः शुभगृहेषु स्यात्तावत्परिमितवृत्तांतः शुभो वक्तव्यः । अशुभगृहेषु चान्वादेशश्चेत्तदा तावत्परिमितवृत्तांतो निषिद्धतरो वाच्यः ।

अथ मत्तः संतानोत्पत्तिर्भविष्यति वा नेत्यत आह ।

यदि पंचमगृहरूपी शुभप्रवेशी भवेत्तदा वक्तव्यं प्रष्टारं प्रति संतानोत्पत्तिर्भविष्यति । परंतु सुगममार्गेण स्वायत्त्येन च नान्यथा ।

अथ मत्तः कति बालका भविष्यंतीत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत्स कति स्थलेष्वन्वादेशरूपो वर्त्तते । तावत्परिमिता बालका वक्तव्याः । पुरुषगृहेऽन्वादेशे सति पुत्रा वाच्याः । स्त्रीगृहेऽन्वादेशश्चेत्कन्यकास्तावत्परिमिता वक्तव्याः । अथवा तेषामन्वादेशरूपिणां संख्यानु-

क्रमसंमतेन संख्यांकं गृह्णीयात् । तावत्संख्या बालकानां वक्तव्या । अथ यदि कुत्रापि पंचमगृहरूपी अन्वादेशरूपो न स्यात्तदा तमेव पंचमगृहरूपिणं न पश्येत्तस्य गृहं कुत्र वर्त्तते । तस्माद्गृहात्पंचमगृहपर्यंतं गणयेत् । तावत्संख्यां बालकानां ब्रूयात् । अत्र पुरुषगृहेऽन्वादेशे पुत्रास्तावत्परिमिता वाच्याः । स्त्रीगृहेऽन्वादेशे सति तावत्परिमिताः कन्यका वक्तव्याः । क्लीबगृहेऽन्वादेशश्चेत्तदा तावत्परिमिताः क्लीबरूपा वाच्याः बलिष्ठे रूपिणि स्थानादिबलेन पुष्टास्ते बालका वाच्याः । बलहीने रूपिणि क्षीणास्ते वक्तव्याः । नात्र संदेहः । अथ यदि पंचमगृहे रूपिणः प्रश्नरमलस्याशुभप्रवेशी भवेत्तदा प्रत्यक्षस्थितानां पुत्राणां कन्यकानां चावस्था निषिद्धतरा वाच्या । तथा दृष्टिर्लग्नमित्राणामवस्था निषिद्धतरा वक्तव्या । तथा यावंतो विचारांशा पंचमगृहे तिष्ठंति सर्वेषामवस्था निषिद्धतरा वक्तव्या । अत्र पितृद्रव्यादिविचारांशो वर्त्तते । तस्याप्यवस्था निषिद्धतरा वक्तव्या । अपरेभ्यः प्रष्टा निराशो भवेत् पुत्रादिभ्यः । अपराज्ञा यां बालका नो तिष्ठेयुः । यदि तिष्ठेयुस्तर्हि पितुरायत्त्ये नो भवेयुः । ते बालकास्तदेव कार्य्यं कुर्य्युर्येन पिता सदा क्रुद्धरूपस्तिष्ठेत् । अथ यदि बालको न भूतः स्यात्तस्य प्रश्नं कुर्यात्तदा वक्तव्यं प्रष्टारं प्रति । संतानोत्पत्तिर्भविष्यति परंतु काठिन्येन । अपरं त एव बालकाः कुकर्म्मिणः भविष्यंति । तथा काठिन्यकर्मकुशला भविष्यंतीति वक्तव्यम् । यथा मृत्तिकायाः कर्म्म । एवमन्यदपि । अत्रापि प्रवासिनो वृत्तांतो बालकानां संख्यादिकं च पूर्ववद्वक्तव्यम् । परंत्वत्र काठिन्येनेति चाधिक्ये ज्ञेयम् । नात्र संदेहः अथ यदि पंचमगृहे शुभनिर्गमो भवेत्तदा बालकादीनामवस्था समीचीना वक्तव्या । तथा ते नीरोगाः पुरुषाः स्युः । अत्र यावन्ति वस्तूनि पंचमगृहस्य विचारांशे तिष्ठंति सर्वेषामवस्था समीचीना वक्तव्या इमे बालकादयः प्रष्टुः सकाशाद्दूरतरे भवेयुः परंतु स्वायत्त्येन

मित्रपक्षेप्येवं वाच्यम् । तथा बालकेभ्यो मित्रेभ्यश्च प्रष्टा स्वल्पफलं प्राप्नुयात् । स्वजीवनवृत्तिभूमिभ्यः किंचिन्मधुरफलं प्राप्नुयात्प्रष्टा अपरं पितृद्रव्यादिके स्वल्पव्ययो भवेदिति वक्तव्यं प्रष्टारं प्रति । अथ संतानोत्पत्तिर्नो भूता स्याद्यदि तस्याः प्रश्नं कुर्यात्तदा प्रष्टारं प्रति वक्तव्यम् । संतानोत्पत्तिर्भविष्यति । परंतु सुगममार्गेण स्वायत्त्येन च अपरं कस्य चिद्वस्तुनस्तिरस्कारं कुर्यात्स्वेच्छया प्रष्टा।परंतु याचेत न । अपरं यदि कुतश्चिद्वृत्तांतस्यागमनं शृणुयात्तर्हि सत्यो वर्त्तते । तस्य वृत्तांतस्य शुभत्वानिषिद्धत्वे शुभाशुभगृहाश्रितेनान्वादेशरूपेण ब्रूयात् । यथा पूर्वोक्तं मया । वृत्तान्तसंख्यापि पूर्ववद्वक्तव्या । अत्र बालकानां संख्यापि पूर्ववद्वक्तव्या नात्र संदेहः । अथ यदि पंचमगृहरूपी अशुभनिर्गमरूपो भवेत्तदा बालकादीनां प्रत्यक्षस्थितावस्था निषिद्धतरा वाच्या । ते सरोगायुषः स्युस्तथा मित्रादीनामप्येवं वाच्यम् इमे पुत्रादयः प्रष्टुः सकाशाद्दूरतरे भवेयुः परन्त्वनायासेनास्वायत्त्येन च। ध्रुवं क्रोधादिकारणेन च प्रष्टुः सकाशाद्दूरतरं व्रजेयुस्ते तथा प्रष्टुस्ते पुत्रादयः केनापि कारणेन पलायमाना भवेयुः ते पुत्रादयः प्रष्टारं प्रति कठोरवाक्यं ब्रूयुः । अपरं तथा पितृकोशगृहं स्वभूमिमधुरफलं च क्षीयमाणरूपं भवेत् । कोर्थोऽस्तव्यस्तता स्यात् । तेषां मध्ये प्रष्टा किंचिदपि न प्राप्नुयात् । अथ यदि कुतश्चिद्वृत्तांतस्यागमनं शृणुयात्तर्हि मिथ्यारूपं वाच्यम् । अथ संतानोत्पत्तिर्नो भवेत् यदि तस्य प्रश्नं कुर्यात् तदा प्रष्टारं प्रति वक्तव्यम् सन्तानोत्पत्ति र्नो भविष्यतीति । परंत्वेकदोषेण । अपरं तथा प्रष्टुर्भाग्य एव संतानोत्पत्तिर्नास्तीति च । उक्तं च ॥ "उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः ॥ विकसति यदि पद्मं पर्वताग्रे शिलायां न चलति नराणां भाविनी कर्मरेखा" ॥ १ ॥ अथ यदि पंचमगृहे शुभ स्थिररूपी भवेत्तदा प्रत्यक्षस्थितानां

बालकादीनां मित्रादीनां चावस्था समीचीना वक्तव्या तथा ते नीरोगायुषः संति । पुत्रमित्रादिभ्यः प्रष्टा सुखं प्राप्नुयात् । परन्तु बहुविलंबेन स्थिरतया च । तथा प्रष्टुः पितृकोशगृहस्यावस्था समीचीना वाच्या । एवमेवावस्थोपरि तिष्ठेत् । एवं भूमिफलस्याप्यवस्था समीचीना वक्तव्या । अपरं यावन्ति वस्तूनि पंचमगृहस्य विचारांशे तिष्ठंति सर्व्वेषामवस्था समीचीना वक्तव्या । अथ यदि सन्तानोत्पत्तेः प्रश्नः स्यात्तदा सन्तानोत्पत्तिर्नो भविष्यतीति प्रष्टुर्मनसि सदा सन्तानस्य तृष्णैव तिष्ठेत् । इतिवक्तव्यम् अथ यदि कुतश्चिद्वृत्तांतस्यागमनं शृणुयात्तर्हि सत्योवर्त्तते।यदि तस्मिन् पंचमगृहे सौम्यरूपी ≡ वा बोधनो ⁞ भवेत्तदा बुधादिने वृत्तांतस्यागमनं स्यान्नात्र संदेहः । अत्रापि वृत्तांतस्य संख्या पूर्ववद्वक्तव्या।अथ यदि पंचमगृहेऽशुभस्थिररूपी भवेत्तदा प्रत्यक्षास्थितानां बालकादीनां मित्रादीनां चावस्था निषिद्धतरा वाच्या । इमे त्रासभयाभ्यां विषण्णमनसः स्युः।अथवा केषांचिदुपरि ते पुत्रादयःस्वांशप्रसंगेन वा ऋणप्रसंगेन विवादं कुर्य्युर्वा तेषां पुत्रादीनामुपरि केऽपि चान्ये स्वांशऋणहेतोर्विवादं कुर्य्युः । यदि च स्थिराणां मध्ये लोहितरूपी ≡ पंचमगृहे स्यात्तदा तु ध्रुवमेवैतत्सर्वं भवेत् । अपरं प्रष्टुर्निषिद्धतरं वर्त्तते । अत एव संयमं कुर्यात्प्रष्टा । तथा पुत्रादिभ्यः फलं नो प्राप्नुयात् । तथैव प्रष्टुर्भूमिवृक्षफले पितृद्रव्येऽपि चौरादीनां भयं स्यात् पितृद्रव्यकोशस्वभूमिवृक्षफलादिकाः क्षीयमाणा अस्तव्यस्तरूपाः स्युः । अथ यदि कुतश्चिद्वृत्तान्तस्यागमनं शृणुयात्तर्हि सत्योवर्त्तते । एवं यावंति वस्तूनि पंचमगृहस्य विचारांशे तिष्ठंति सर्वेषामवस्था निषिद्धतरा वाच्या । नात्र संदेहः । अथ यदि पंचमगृहे शुभद्विस्वभावरूपी भवेत्तदा प्रष्टा सदैव सन्तानोत्पत्तौ द्विविधचित्तस्तिष्ठेत् । परन्तु परिणामे सन्तानोत्पत्तिः स्यात्।तथा प्रत्यक्षास्थितानां पुत्रमित्रादीनामवस्था समीचीना वाच्या । अपरं तेभ्यः-

प्रष्टा मध्यमं फलं प्राप्नुयान्नातिबहुतरं नातिलघुतरमिति । परन्तु स्वायत्त्येन सुगममार्गेण च । तथा मित्रपक्षादपि मनसि किंचिद्द्विविधत्वं भवेत् । परंतु परिणामे भव्यम् । तथैव पितृद्रव्यं स्वभूमिफलं चागमने गमने च भवेत् । कोऽर्थो द्वयोरपि प्राप्ती भवेताम् । परन्तु स्वायत्त्येन । अथ यदि कुतश्चिद्वृत्तांतस्यागमनं शृणुयात्तर्हि स वृत्तांतः सत्यो वर्त्तते नतु मिथ्यारूपः। एवं यावन्ति वस्तूनि पंचमगृहस्य विचारांशे तिष्ठंति सर्वेषामवस्था निषिद्धतरा वाच्या। नात्र संदेहः । अथ यदि पंचमगृहेऽशुभद्विस्वभावरूपी भवेत्तदा पुत्रादीनां मित्रादीनां चावस्था निषिद्धतरा वाच्या । तथा ते सरोगायुषः स्युरपरं ते पुत्रादयः कस्मिंश्चित् कठिनकर्म्मणि विषण्णमनसः स्युः । तथा ते सदैव भयान्वितास्तिष्ठेयुः । अपरं समयंसमयं प्रत्यनेकचिन्तां कुर्य्युस्ते पुत्रादयः परन्तु स्वायत्त्येन । तथैव ते पुत्रादयः प्रष्टुर्निषिद्धवांछिताः स्युः प्रष्टा तेभ्यः किंचिदपि फलं न प्राप्नुयात् । अपरं पितृद्रव्यादीनां स्वभूमिफलानामप्यवस्था निषिद्धतरा वाच्या।अथ यदि संतानोत्पत्तिर्नो भूता स्यात्तस्याः प्रश्नं कुर्यात्तदा प्रष्टारं प्रति ब्रूयात् संतानोत्पत्तिर्नो भविष्यतीति । कुतः सन्तानदर्शनदुर्लभमिति वचनात् । अथ यदि कुतश्चिद्वृत्तांतस्यागमनं शृणुयात्तर्हि सत्यवृत्तांतो नास्ति । अथ केषुचित्पुस्तकेष्वेवं कथितं वर्तते । द्वौ मंदगा ∸ रूरूपिणौ ⁝ द्विस्वभावेष्वशुभावप्यस्मिन्पंचमगृहे शुभफलं दत्तः कस्मात् । अस्मिन् गृहे मंदगः प्रकृतिसंबंधं स्थापयति तथाररूपी संख्याक्रमं स्थापयतीति वचनात् । अनयोः फलमाह । पंचमगृहे प्रत्यक्षस्थितानां पुत्रादीनां मित्रादीनां चावस्था शुभतरा वाच्या । कुतश्चिच्छुभवृत्तांतप्राप्तिः स्यात । तथा कुतश्चिन्नूतनाश्चर्य्यवस्तुन आगमनं भवेत् । अथ यदि संतानोत्पत्तिर्नो भूता स्यात्तस्य प्रश्नं कुर्यात्तदा प्रष्टारं प्रति वक्तव्यम् । संतानोत्पत्तिर्भविष्यति परंतु नो जीविष्यति । नात्र संदेहः । अथ केष्वपि ग्रंथेष्वेवं कथितं वर्त्तते ।

अथ यदि कोऽपि पृच्छेन्मत्तः संतानोत्पात्तिर्भविष्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं सप्तमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं पंचमगृहरूपिणा गुणयेत् । आभ्यामुत्पन्नरूपिणं पश्येत् । यदि प्रवेशी भवेदथवा मंदगो वा विधुरूपी भवेत्तदा प्रष्टारं प्रति वक्तव्यं नूनं बालकोत्पत्तिर्भविष्यति । नतु शेषेषु रूपिषु कदापि संतानोत्पत्तिः स्यान्नात्र संदेहः ।

अथ सा स्त्री सगर्भा वर्त्तते वा नेत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं षष्ठगृहरूपिणं च पश्येत् । यदि द्वावपि प्रवेशिरूपौ स्यातामथवा चैकादशगृहे मंदगरूपी भवेत्तदा नारी गुर्व्विणीति निगद्यते नान्यथा ।

अथ पुत्रो भविष्यति वा कन्यकेत्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं सप्तमगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तं च पंचमगृहरूपिणा गुणयेत् आभ्यामुत्पन्नरूपिणं पश्येत् । यदि स पुरुषरूपी स्यात्तदा गर्भे पुत्रसंभवो वाच्यः । यदि च स्त्रीरूपी तदा कन्यका भविष्यतीति वक्तव्यम् । नात्र संदेहः ।

अथ मम भार्यायां कति बालका भविष्यन्तीत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत् । स कतिस्थलेष्वन्वादेशरूपो वर्त्तत इत्यपि द्रष्टव्यम् । यावन्तोऽन्वादेशरूपिणःस्यु स्तावन्त एव बालका भविष्यन्तीति वक्तव्यम् । यदि कुत्राप्यन्वादेशरूपो नो भवेत्तदा तमेव पंचमगृहरूपिणं पश्येत् । पूर्वोक्तन्यासानां मतेन तस्य रूपिणो गृहं कुत्र वर्त्तत इति पश्येत् । तस्माद्गृहात्पंचमगृहपर्य्यन्तस्य संख्यां कुर्यात्सा संख्या बालकानां स्यात् । यथा स्पष्टतरमेव पूर्वोक्तं मया । नात्र संदेहः । अथ यदि कोऽपि बालकेभ्यो मित्रेभ्यश्च तथा परं पंचमगृहविचारांशेभ्यो यत्किंचिद्याचते वा संस्थापयेत्तां प्राप्नुयाद्वा नेत्यत आह । तदा प्रथमलिसानुलअमररूपिणं पश्येत् ।

तथाहि । प्रश्नरमलस्य प्रथमपंचमाभ्यां य उत्पन्नो भवेत्तस्य नाम प्रथमलिसानुलअमर इति तं दृष्ट्वा वदेत् । यदि स प्रवेशी भवेत्तदा तु प्राप्नुयात् । यदि निर्गमरूपो भवेत्तदा नो प्राप्नुयात् । यदि स्थिररूपो भवेत्तदा संप्रति स्थिरत्वं वर्त्तते । द्विस्वभावरूपश्चेत्तदा प्राप्तौ द्विविधत्वं वाच्यम् । सर्वत्रैव शुभे सुगममार्गेण स्वायत्त्येन परिणामं वदेत् । अशुभे काठिन्येनास्वायत्त्येन कदापि नास्तीति वाच्यम् । नात्र संदेहः ।

अथ मम पुत्रादयो दुष्टत्वेन वा हितत्वेन तिष्ठंतीत्यत आह ।

तदा पंचमगृहरूपिणमन्वादेशं पश्येत् । कुत्र वर्त्तत इति । यदि सोऽन्वादेशो दुष्टत्वं दृष्ट्वा पंचमगृहरूपिणं पश्यति तदा दुष्टत्वं वाच्यम् । यदि मित्रत्वदृष्ट्या पश्यति तदा मित्रत्वं वक्तव्यम् । यथा पूर्वोक्तं मया रूपिणां दृष्टिर्ज्ञानाध्याये । अथ चेति बोद्धव्यम् । यदि स अन्वादेशः शुभगृहे स्यात्तदा मित्रत्वं वाच्यम् ।यद्यशुभगृहे स्यात्तदा दुष्टत्वं वक्तव्यम् । नात्र संदेहः ।

अथ मम पुत्रादयः परिणामे कीदृशा भविष्यंतीत्यत आह ।

तदा लिसानुलअमरसानिरूपिणं पश्येत् । तथाहि । यः प्रश्नरमलस्य प्रथमगृह १ पंचदश १५ गृहरूपिभ्यामुत्पन्नो भवेत्तस्य नाम निसानुलअमरसानीति । यदि स शुभरूपी भवेत्तदा परिणामे बालकादयः । समीचीनाः कुलनायका भविष्यंति । यद्यशुभरूपी भवेत्तदा परिणामे बालकादयो निषिद्धरूपाः कुलनाशकर्त्तारो भविष्यंति । नात्र संदेहः ।

अथेयं स्त्री सुखप्रसूता भविष्यति वा नेत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि प्रथमगृहस्वामी तथा पंचमगृहस्वामी चैतौ द्वौ रूपिणौ शुभगृहे स्यातां तदा तु ध्रुवमेव सा स्त्री सुखप्रसूता स्यात्तथा बालकेन सह जीवेत् । यदि तौ रूपिणावशुभगृहे स्यातां तदा स्त्री कष्टप्रसूता स्यात्परन्तु परिणामे बालकेन

सह नो जीवेत्। अत्र प्रथमगृहस्वामी तस्याः स्त्रिया ज्ञेयः। पंचमगृहस्वामी च बालकस्य प्रश्नरमलेषु यः शुभगृहे स्यात्तस्य शुभत्वं ब्रूयादशुभगृहस्थितेनाऽशुभत्वं वक्तव्यम्। यदि तौ रूपिणौ प्रश्नरमलेषु कुत्रापि नो स्यातां तदा बालकोत्पत्तिर्नो स्यात् गर्भे तु रोगादिकं वाच्यम्। नात्र संदेहः।

अथ बालस्य जन्म झटित्येव भविष्यति वा विलंबेनेत्यत आह।

तदा प्रश्नरमलेषु पश्येत्।यदि पंचमगृहस्वामी केन्द्रगृहाणां मध्ये प्रथमगृहे वा दशमगृहे स्यात्तदा झटित्येवप्रसवो भविष्यतीति वक्तव्यम् यदि पंचमगृहस्वामी सप्तम ७ गृहेस्यात्तदा किंचित् स्थिरतया प्रसवो भविष्यति। यदि चतुर्थ गृहे स्यात्तदा सप्तमोक्ताद्द्विघ्नस्थिरतया प्रसवो भविष्यतीति वक्तव्यम्। अथ यदि पंचमगृहस्वामी पणफरगृहेषु२,५, ८, ११, स्यात्तदा नातिविलंबेन नातितूर्णेन प्रसवो भविष्यति। अथ यदि आपोक्लिमगृहेषु ३, ६, ९, १२,स्यात्तदा बहुस्थिरत्वेन प्रसवो भविष्यतीति वाच्यम्। नात्र संदेहः।

अथास्मिन् गर्भेऽयमर्भको जारजातो वर्तते वा शुद्धमातृपितृभ्यामित्यत आह।

यदि पंचमगृहे ५ तथा दौहित्रगृहे ९, १०, ११, १२, अथवा मुसल्लसगृहे भौमस्य १, ३, ८, कुजरूपी भवेत्तथैव पंचमगृहरूपिणं यदि भौमस्यैव रूपी निरीक्षेत। तदाऽयमर्भको जारजात इति वक्तव्यम्। एवं यदि पंचमगृहे ५ तथा दौहित्रगृहे ९, १०, ११, १२, वा शनिराहुकेतूनां मुसल्लहगृहे राहुकेतुशनीनामेव रूपिणः स्युस्तथैव दैत्यार्चितो ⁝ बोधनश्च ⁝ यदि स्यात्तथा पंचमगृहं प्रति।दृष्टिकर्तारो ये त एव रूपिणो यदि स्युस्तदाऽयमर्भको मिश्रितः कोऽर्थः किंचिज्जारजातकः किंचिच्छुद्धमातृपितृभ्यां समुत्पन्नः। अर्थाद्द्विपुंसोर्बीजप्रक्षेपादुत्पन्न इति भावः। शेषग्रहाणां रूपिणश्चेत्तदा शुद्धमातृपितृभ्यां समुत्पन्नः।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य मातृगृह १, २, ३, ४, रूपिणां वह्निबिंदूनुत्थाप्य चैकं रूपिणं कुर्यात् । तथैव दुहितृगृह ५, ६, ७, ८, रूपिणां वह्निबिंदूनुत्थाप्यैकं रूपिणं कुर्यात् । एतौ द्वौ रूपिणौ पश्येत् । यदि तावेकप्रकृतिकौ स्यातां तदाऽयमर्भकः शुद्धमातृपितृभ्यां समुत्पन्न इति वक्तव्यम् । यदि तौ भिन्नप्रकृतिकौ स्यातां तदा जारजातको नात्र संदेहः ।

अथ प्रकारांतरमाह ।

यदि केंद्रगृहे १, ४, ७, १०, पंचमगृहे च शुभरूपी भवेत्तदा शुद्धमातृपितृभ्यां समुत्पन्नोऽयं जातकः । यद्यशुभरूपी भवेत्तदा जारजातकः । यदि कोऽपि शुभः कोप्यशुभो भवेत्तदाऽऽधिक्यापरिचयाज्ज्ञां कुर्यात् । नात्र संदेहः ।

अथ पुत्रो भविष्यति वा कन्यकेत्यत आह ।

तदा प्रश्नरमलस्य नवम ९ दशम १० गृहरूपिभ्यामेकरूपिणमुत्पादयेत् । एवं पंचमैकादशगृहरूपिभ्यामेकं रूपिणमुत्पादयेत् । अनयोर्द्वयोरेकरूपिणं कुर्यात् । तं पश्येत् । यदि स पुरुषरूपी भवेत्तदा पुत्रजन्म वाच्यं स्त्रीरूपी चेत्कन्यका वक्तव्या।यदि स क्लीबरूपी भवेत्तदा क्लीबप्रसवो भविष्यतीति वक्तव्यम् । अथवा द्वौ बालकौ स्यातामेकः पुत्र एका कन्यका । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य पंचमगृह ५षष्ठ ६ गृहरूपिभ्यामेकं रूपिणमुत्पादयेत् । यदि स पुरुषरूपो भवेत्तदा पुत्रजन्म । स्त्रीरूपी चेत्तदा कन्यका वाच्या । नात्र संदेहः ।

अथार्भकस्य जन्म दिने भविष्यति वा रात्रावित्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं पश्येत् । यदि स दिवारूपी

भवेत्तदा दिने जन्म भविष्यतीति वाच्यं निशारूपी चेत्तदा रात्रौ जन्म भविष्यतीति। नात्र संदेहः।

अथ दिने वा रात्रौ वा कदा जन्म भविष्यतीत्यत आह।

तदा प्रश्नरमलेषु पश्येत् प्रथमगृहस्वामी प्रथमगृहात्कतिगृहोपरि समागतो वर्त्तते। तावत्संख्ये मुहूर्त्ते व्यतीते जन्म भविष्यतीति वक्तव्यम्। अत्र प्रथमा द्वादशगृहपर्य्यंतेष्वेव गणना कार्य्या। उक्तं च। दिनस्य यो द्वादशको विभागो रात्रेस्तथा तद्धिमुहूर्तमानमिति। त्रयोदशादयस्तु केन्द्रगृहेषु बद्धाः सन्तीति पूर्वोक्तं मया। अथ यदि प्रथमगृहस्वामी प्रश्नरमलेषु कुत्रापि नो समागतःस्यात्तदा दिने प्रत्यूषसमये रात्रौ च संध्यायां गोधूलिकायां जन्म भविष्यतीति वक्तव्यम्। नात्र संदेहः।

अथ कस्मिंल्लग्ने जन्म भविष्यतीत्यत आह।

तदा प्रश्नरमलस्य नवमगृहरूपिणं पश्येत्। तस्य रूपिणो यो राशिः स्यात्तदेव लग्नं भविष्यतीति वाच्यम्। नात्र संदेहः।

अथास्यार्भकस्यायुर्दायः कतिपरिमितो वर्त्तत इत्यत आह।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत्। यद्यशुभरूपी भवेत्तदा वर्षमेकं स जीवति। अपि तु वर्षमध्य एव मृत्युं प्राप्नुयात्। यदि पंचमगृहे शुभरूपी भवेत्तदा पंचमगृहप्रभृतिद्वादशपर्य्यंतेषु शुभरूपिणां संख्याकं गृह्णीयात्। संख्याक्रममतेनैवं संख्यासमूहं कृत्वा पश्चात्पंचमगृहरूपिबिंदुसंख्याभिर्न्यूनं कुर्यात्। शेषसंख्याऽर्भकस्यायुर्दायः स्यात्। अत्र पंचमगृहबिंदुसंख्या तु यथा—शीतांशुश्चतुर्बिंदुकः। ⁞ वाग्मी सप्तबिंदुकः ⁝ एवं सर्वेषां बिंदुसंख्या ज्ञातव्या। नात्र संदेहः।

अथायमर्भको दीर्घायुर्यशस्वी भाग्यवान् भविष्यति वा नेत्यत आह।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत्। यदि शुभरूपी भवेत्तथा पंचमगृहस्वामी केन्द्रगृहाणां मध्ये प्रथम १ दशम १० गृहे

स्यादथवा चैकादश ११ गृहेऽन्वादेशरूपी भवेत्तदा स अर्भकः प्रतापी भाग्यवांश्च स्यादपरं गुरुत्त्वमहत्त्वादिभिः प्रसिद्धो भवेल्लोके तथा यशोन्वितश्च । अथ यदि शेषकेंद्रगृहयोः ४, ७, मध्ये पंचमगृहस्वामी स्यात्तदा तस्मात्किंचिन्न्यूनं फलं वाच्यम्। अथ यदि पणफरगृहेषु २,५,८,११,पंचमगृहस्वामी स्यात्तदा सामान्यफलं नातिश्रेष्ठं नातिनेष्टं यथा नातिधनाढ्यो नातिदरिद्रःनातियशस्वी नातिकुयशा नातिप्रसिद्धो नातिगुप्तः।एवमन्यदपि । अथ यदि पंचमगृहस्वामी आपोक्लिमगृहेषु ३, ६, ९, १२, समागतः स्यात्तदा सर्वमनिष्टं फलं वाच्यम् । यथा सोऽर्भकः कुयशा दरिद्रः क्षुद्रश्च लोलुपः स्यात्तथोद्विग्नचित्ताश्चिंताग्रसितो महत्वरहितश्च । एवमन्यदपि अथ प्रश्नरमलस्य पंचमगृहे शुभो भवेत्तदा जीवेन्न तर्हि फलं को भुंक्ते । वर्षैकेनैव मृत्युं प्राप्नुयात् सः । नात्र संदेहः ।

अथ प्रेषकहस्ते वचनप्रेषणं कीदृशं वर्त्तत इत्यत आह ।

यदि प्रश्नरमलस्य पंचमगृहे शुभो भवेत्तथा पंचमगृहस्वामी च प्रश्नरमलेषु बलिष्ठो भवेत्तदा प्रेषकहस्ते देशांतरं प्रति वचनप्रेषणं समीचीनं वर्त्तते । अत एव प्रेषितव्यम् । अथ यदि पंचम गृहेऽशुभो भवेत्तथा पंचमगृहस्वामी अपि प्रश्नरमलेषु निर्बलः स्यात्तदा व्यत्ययं फलं ब्रूयात् ।

अथ योगांतरमाह ।

यदि पंचमगृहस्वामी वा प्रथमगृहस्वामी शुभगृहेषु समागतः स्यात्तत्रापि केंद्रगृहेषु १, ४, ७, १० तदा प्रेषकहस्ते पत्रिकाप्रेषणं समीचीनं वर्त्तते प्रेषणीयम् । यद्यशुभगृहेषु स्यात्तत्रापि आपोक्लिमगहेषु ३, ६, ९, १२, तदा समीचीनं त्विदं वर्त्तते निषेधं कुर्यात् प्रेषणे दोषः पणफरगृहेषु २, ५, ८, ११, मध्यमं फलं

वाच्यम्। कतिपयदिनोपरि प्रेषयितव्यमिति वाच्यम् । तत्र गते शीघ्रतया तं पुरुषं नो प्राप्नुयाद्यत्र गन्तुमिच्छति । नात्र संदेहः ।

अथ प्रेष्यहस्ते पत्रं प्रेषितं मया स तदादाय तत्र गमिष्यति वा नेत्यत आह ।

तदा प्रश्नरमलेषु पश्येत्।यदि प्रथमगृहस्वामी पञ्चमगृहस्वामिना सार्द्धं शुभगेहेषु समागतः स्यात्तदा समीचीनं वर्त्तेत इतिवक्तव्यम् । यदि पंचमगृहस्वामी केंद्रगृहेषु १, ४, ७, १०, स्यात्तदा यत्र गंतुमिच्छति तत्र झटित्येव प्राप्नुयात् यदि तु केंद्रगृहाणां मध्ये प्रथमगृहे दशमगृहे च स्यात्तदा त्वतिशीघ्रतया तत्र प्राप्तो भवेत् । शेषकेन्द्रगृहयो ७, १०, मध्ये किंचित्स्थिरतया प्रेषकस्तत्र प्राप्तः स्यात्। अथ यदि पंचमगृहस्वामी पणफरगृहेषु २, ५, ८, ११, समागतः स्यात्तदा नातिशीघ्रतया नातिस्थिरतया तत्र प्राप्तो भवेत् । अथ यदि पंचमगृहस्वामी आपोक्लिमगृहे, ३, ६, ९, १२ शुभगृहेषु च समागतः स्यात्तदा यस्मै पत्रिका प्रेषिता स एव पत्रिकां नो गृह्णीयात्। प्रेषकस्तु नैराश्यमवलम्ब्य स्वगृहं प्रत्यागच्छेत्।अथ यदि पंचमगृहस्वामिनं पंचमगृहरूपिणं च कोऽपि रूपी नावलोकयेदावश्यकेन प्रथमगृहरूपी पंचमगृहस्वामिनं यदि नेक्षते तदा प्रेषितपत्रं तूर्णदूतश्च तत्र नो प्राप्तं स्यान्मार्गमध्य एवास्तव्यस्तद्रूपं नष्टं च भवेत् । यदि मित्रत्वदृष्ट्या पंचमगृहस्वामिनं पंचमगृहरूपिणं चान्ये रूपिणः पश्यंति तदा सुगमेन शीघ्रतया च स पत्रिकां तूर्णदूतं च गृह्णीयात् । यस्मै प्रेषितं वर्त्तते।यदि रूपिणः पंचमगृहस्थं तथा पंचमगृहस्वामिनं च दुष्टत्वदृष्ट्या पश्यंति तदा सा पत्रिका महत्काठिन्येन पतेत्तथैवप्रेष्यो मध्य एव क्लेशं प्राप्नुयात् । पश्चान्महता कष्टेन पत्रिका तत्र प्राप्ता स्यात् । परंतु यदि प्रथमगृहेऽशुभो भवेत् । आवश्यकेनैव पंचमगृहे शुभरूप्यपेक्षितः । यतः परिणामे कार्य्यसिद्धिः स्यान्नात्र संदेहः ।

अथ पुत्रादीनामवस्था कीदृशी वर्त्तत इत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत् । यदि स शुभरूपी भवेत्तदा पुत्रादीनामवस्था समीचीना वाच्या । यदि तस्यान्वादेशः शुभगृहेषु स्यात्तदा स्वास्थ्यं कुशलत्वं भाग्योदयश्च पंचमगृहविचारांशश्च स्यात्तथा ते पुत्रादयः सुखान्वितास्स्युः । यदि तस्यान्वादेशोऽशुभगृहेषु स्यात्तदा रोगित्वं चोद्विग्नचित्तपरिखेदत्वं पुत्रादीनां स्यात् । यदि उभयस्मिन्नपि शुभाशुभगृहे तस्यान्वादेशः स्यात्तदाऽऽधिक्योपरि चाज्ञां कुर्यात् । एवं यावन्ति वस्तूनि पंचमगृहस्य विचारांशे तिष्ठंति सर्वेषामवस्था शुभा नेष्टा च वक्तव्या।नात्र संदेहः ।

अथ मत्तः सन्तानोत्पत्तिर्भविष्यति वा नेत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत् । यदि शुभप्रवेशी भवेत्तथा स एव चैकादश ११ चतुर्दश १४ पंचदश १५ गृहेष्वन्वादेशरूपो भवेत्तदा ध्रुवं संतानोत्पत्तिर्भविष्यतीति वक्तव्यम् । प्रष्टारं प्रति स एव यदि प्रथम १ गृहे दशम १० गृहेऽन्वादेशरूपो भवेत्तथापि तदेव फलं वाच्यम् । अथ यदि प्रथमगृहरूपिणः । प्रकृतिसदृशरूपी । पंचमगृहे समागतः स्यात्तथा स एव शुभगृहेष्वन्वादेशरूपो भवेत्तदापि संतानोत्पत्तिर्भविष्यतीति वक्तव्यं प्रष्टारं प्रति । नात्र संदेहः । अथ यद्यशुभप्रवेशी पंचमगृहे समागतस्तस्याऽन्वादेशस्तथैव स्यात्तदा किंचित्काठिन्येन संतानोत्पत्तिर्भविष्यतीति वक्तव्यम् । अथ यदि पंचमगृहे शुभनिर्गमो भवेत्तथैव तस्याऽन्वादेशश्च स्यात् तदा वयसि गते महता कष्टेन नानायत्नेन संतानोत्पत्तिर्भविष्यतीति वक्तव्यम् । अथ यदि पंचमगृहे शुभनिर्गमो भवेत्तथा तस्यान्वादेशोऽशुभगृहेषु स्यात्तदा कदापि संतानोत्पत्तिर्नो भविष्यतीति वक्तव्यम् । एवं यदि चैकादश ११ चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु निर्गमो भवेत्तदा कदापि संतानोत्पत्तिर्नो भविष्यतीति वक्तव्यम् । यद्यपि गर्भसंभवो भवेत्तथापि

पतनं प्राप्नुयात्। यथा कथंचन बालकोऽपि भवेत्तदा जीवेन्न। नात्र संदेहः। अथ पंचमगृहे मिश्रितस्थिरद्विस्वभावरूपिणां फलं साक्षीभूतसदृशं वक्तव्यम्। शुभे साक्षीभूते शुभं फलमशुभे साक्षीभूतेऽशुभं फलं वाच्यम् साक्षीभूतं त्वन्वादेशरूपादिकम्। नात्रसंदेहः।

अथ पुत्रो भविष्यति वा कन्यकेत्यत आह।

तदा प्रश्नरमलस्य प्रथमगृहे पंचमगृहे च पश्येत् यद्युभयस्मिन् गृहे पुरुषरूपी भवेत्तथा तस्यान्वादेशेष्वपि प्रश्नरमलेषु स्यात्तदा पुत्रोत्पत्तिर्भविष्यतीति वक्तव्यं यद्युभयस्मिन् गृहे स्त्रीरूपी भवेत्तदा तस्यान्वादेशः प्रश्नरमलेषु बहुस्थाने स्यात्तदा कन्यका-भविष्यतीति वाच्यम्। अत्र वह्निमुखास्तथा वायुमुखा रूपिणः पुरुषरूपा ज्ञातव्याः।एवं भूमिमुखास्तथा जलमुखा रूपिणः स्त्रीरूपा ज्ञेयाः। अथ केचिद्वदंति। यदि प्रश्नरमलेषु निर्गमा बहुतराः स्युस्तदा पुत्रोत्पत्तिः स्यात्। यदि च प्रवेशिनो बहुतराः स्युस्तदा कन्यका स्यान्नात्र संदेहः। अथ केचिद्वदंति। प्रश्नरमलस्य षोडशरूपिणां पृथक् पृथग्वह्नयादिबिंदून् रेखाबिंदुयुतान् गणयेत्। यदि वह्निवाय्वोर्बिंद्वाधिक्यं तदा पुत्रोत्पत्तिः स्याद्यदिजलपृथिव्यो बिंद्वाधिक्यं चेत्तदा कन्यका स्यान्नात्र संदेहः। अत्र सर्वेषां सिद्धांत एक एव।

अथायमर्भको जीविष्यति वा नेत्यत आह।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत्। यदि स शुभरूपी भवेत्तथा तस्यान्वादेशो दशमैकादशगृहेषु स्यात्तदा सोऽर्भको जीवेत्। इति वाच्यं एवं सर्वेषु शुभगृहेषु शुभरूपिणामन्वादेशरूपेण फलं वाच्यम्। यदि पंचमगृहेऽशुभरूपी भवेत्तथा तस्यान्वादेशः षष्ठा ६ ष्टम ८ द्वादश १२ गृहेषु स्यात्तदा सोऽर्भको नो जीवेदिति वक्तव्यम्। एवं यदि दैत्यार्चितः ⁘ पंचमे भूत्वा षष्ठाष्टम ६, ८, द्वादश १२ गृहेष्वन्वादेशरूपं कुर्यात्। तदापि तथैव फलं

वाच्यम्। एवं सर्वेष्वशुभगृहेष्वशुभरूपिणामन्वादेशरूपेण फलं वाच्यम्। अत्र पुत्रजीवनप्रश्नविधौ बहुनिषिद्धतरद्वादशगृहं वर्त्तते। नात्र संदेहः।

अथ प्रेष्यस्य प्रेषितपत्रिकायाश्च वृत्तं कीदृशं वर्त्तत इत्यत आह।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं पश्येत्। यदि स शुभरूपी भवेत्तथास्यान्वादेशो दशमैकादश १०, ११ गृहे स्यात्तदा स प्रेषकः सत्यवादी वर्त्तते तथा स एव तव सकलवृत्तांतं तत्र प्राप्तं करिष्यतीति प्रष्टारं प्रति ब्रूयात्। तथैव स प्रेष्यः कार्यं कृत्वा प्रत्युत्तरं गृहीत्वा स्वस्थानं प्रत्यागच्छेत्। यदि प्रथमगृहरूपी कुत्राप्यन्वादेशरूपी न भवेदपि तु दशमैकादश १०, ११ गृहे शुभरूपी पतितः स्यात्तदा तदेव फलं वाच्यम्। नात्र संदेहः। अथ यदि प्रथमगृहेऽशुभो भवेत्तथा तस्यान्वादेशः षष्ठा६ष्टम८द्वादश१२षोडश१६गृहेषु स्यात्तदा स प्रेष्योऽनृतवादी वर्त्तते। तथा स एव तव कंचिदपि वृत्तांतं तत्र नो प्राप्तं करिष्यतीति प्रष्टारं प्रति ब्रूयात्। शेषमखिलं प्राग्वत्। अत्र केवलप्रथमगृहरूपिणा शुभाशुभरूपेण प्रेष्यस्य सत्यानृतं ब्रूयात्। तथा तस्यान्वादेशरूपेण पत्रिकावृत्तांतयोः प्राप्तिरप्राप्तिश्च वक्तव्या।

अथ प्रकारांतरमाह।

प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत्। यदि शुभो भवेत्तदा प्रेषकः सत्यवादी भवेत्तथा विश्वासी च। यद्याशुभो भवेत्तदा प्रेषकोऽनृतभाषी वर्त्तत इति वाच्यम्। एवमस्य पंचमगृहरूपिणोऽन्वादेशो यदि शुभगृहेषु स्यात्तदा प्रेषको विश्वासी तथा परांशानिष्टो वक्तव्यः। कोऽर्थः परांशं नो ग्रहीतुमिच्छतीति। यद्यशुभगृहेष्वन्वादेशरूपो भवेत्तदा प्रेषकोऽविश्वासी परांशग्राहकश्च वक्तव्यः। नात्र संदेहः। अथ यदि दशमैकादश १०, ११, गृहे शुभो भवेत्तदा प्रेषको यत्र गतो वर्त्तते वा गन्तुमिच्छति यदर्थं गच्छति तत्कार्यं कृत्वा प्रत्यागच्छेत्।

यदि दशमैकादश १०, ११ गृहेऽशुभरूपी भवेत्तदा कार्य्यमकृत्वा स्वगृहं प्रति निवृत्तरूपो भवेत् । नात्र संदेहः ।

अथ प्रेष्यः शुभवृत्तांतमानयिष्यति न वा किञ्च सोऽनृतवाग्वा सत्यवागित्यत आह ।

तदा प्रश्नरमलस्य पंचम ५ सप्तम ७ गृहरूपिणं पश्येत् यद्युभयस्मिन्गृहे शुभो भवेत्तदा प्रेषकः सत्यवादी वर्त्तते तथा शुभवृत्तांतमानयिष्यतीति वक्तव्यम् । यदि पंचमगृहे शुभरूपी सप्तमगृहे त्वशुभरूपी स्यात्तदा प्रेषकः शुभवृत्तांतमानयिष्यति परन्तु सोऽनृतभाषी वर्त्तते । यदि पंचमगृहेऽशुभरूपी सप्तमगृहे शुभरूपी स्यात्तदा स प्रेषकः सत्यवादी वर्त्तते परन्तु निषिद्धवृत्तांतमानयिष्यति । यद्युभयस्मिन्गृहेऽशुभरूपी भवेत्तदा प्रेष्योऽप्यनृतभाषी तथा निषिद्धवृत्तांतमप्यानयिष्यति नात्र संदेहः । यदि सप्तमनवमैकादश ७, ९, ११, गृहरूपिणः प्रश्नरमलेष्वन्वादेशरूपं कुर्युस्तथा चतुर्दश १४ गृहे शुभरूपी भवेत्तदा प्रेषकः सत्यवादी परांशाऽग्राहकश्च वक्तव्यः । विपर्य्यये विपर्य्ययं फलं वाच्यम् । अथ केचिद्वदंति वृत्तांतसंख्याकं पंचमगृहरूपिणो ब्रूयात् यथा पंचमगृहरूपी प्रश्नरमलेषु यावत्स्थानेऽन्वादेशरूपं कुर्यात्तावत्संख्यो वृत्तांतो वक्तव्यः।शुभगृहाश्रिते शुभतरः। अशुभगृहाश्रिते निषिद्धतरश्च । तथाहि । यदि तस्यान्वादेशः प्रथम १ तृतीय ३ सप्तम ७ नवम ९ गृहेषु स्यात्तदा शुभवृत्तांतमागमिष्यति । यद्यशुभगृहे षष्ठा ६ ष्टम ८ द्वादश १२ प्रभृतिषु तस्यान्वादेशः स्यात्तदा निषिद्धवृत्तांतस्यागमनं भवेत् । मिश्रिते मिश्रितं फलं वाच्यम् । यदि तेष्वशुभगृहेषु षष्ठगृहे । पंचमगृहरूपी अन्वादेशरूपं कुर्यात्तदा वृत्तांतो निषिद्धतरो वाच्यः । तथा पुत्रमित्रादयः क्लेशं प्राप्नुयुः रोगग्रस्ताश्च जायंते । अथ यदि पंचमगृहरूपी प्रश्नरमलेषु कुत्राप्यन्वादेशरूपो नो भवेत्तदेवमेव वृत्तांतं ब्रूयात् । शुभे शुभोऽशुभे निषिद्धतरो वाच्यः ।

अथ मया चेकमपूर्ववस्तु प्रेषितं तत्तत्र प्राप्तं वा नेत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत् । यदि प्रवेशी भवेत्तदा वक्तव्यं तत्र प्राप्तम् । शुभे सुगमेन शीघ्रतया विना परिश्रमेण च । अशुभे काठिन्येन विलंबेन परिश्रमेण च अथ यदि निर्गमो भवेत्तदाऽद्यापि तत्र नो प्राप्तम् । शुभे परिणामे प्राप्तं भवेत् । अशुभश्चेत्तदा तु कदापि नो प्राप्तं भविष्यतीति वाच्यम् । स्थिरे स्थिरत्वं द्विस्वभावे द्विविधत्वं फलं वाच्यम् । अत्रावश्यकं पंचमगृहरूपिणोऽन्वादेशरूपं शुभाशुभगृहेषु पश्येत् । शुभे शुभं फलमशुभेऽशुभफलं वाच्यम् । नात्र संदेहः ।

अथैतयोर्मित्रयोर्मध्ये मित्रत्वं वर्त्तते वा नेत्यत आह ।

तदा प्रथमगृहरूपिणं पश्येद्यत्प्रष्टुर्वर्त्तते । तथा पञ्चमगृहरूपिणं पश्येद्यन्मित्रस्य वर्त्तते । यद्युभयगृहस्य रूपिणौ स्वस्मिन् मित्रत्वेन प्रश्नरमलेषु सम्मिलितौ स्यातां तदा द्वयोर्मध्ये मित्रत्वं वर्त्तते वा स्यादिति वाच्यम् ॥ यदि दुष्टत्वेन तौ रमलेषु संम्मिलितौ स्यातां तदा दुष्टत्वं वाच्यम् । यदि मित्रत्वदुष्टत्वाभ्यां सम्मिलितौ नो स्यातां तदा नातिमित्रत्वं नातिदुष्टत्वं तयोर्मध्ये वाच्यम् । एतन्मित्रत्वदुष्टत्वसंमेलनं तु रूपिणां विभागेपूक्तं मया।अथ यदि पंचमगृहस्वामी केन्द्रगृहाणां मध्ये प्रथम १ दशम १० गृहे समागतः स्यात्तदा तन्मित्रमंतःकरणेन संमिलितमस्ति । तथा मित्रत्वं कर्त्तुं स्वेच्छां स्थापयेत् । यदि केन्द्रगृहाणां मध्ये चतुर्थ ४ सप्तम ७ गृहे समागतः स्यात्तदा तन्मित्रमन्तःकरणेन किंचित् संमिलितं वर्त्तते । अथ यदि पंचमगृहस्वामी पणफरगृहेषु १, ५, ८, ११, समागतः स्यात्तदा तन्मित्रं मध्यमं स्नेहं स्थापयति यदि आपोक्लिमगृहेषु २, ६, ९, १२, पतितः स्यात्तदा तन्मित्रं किंचिदपि स्नेहं नो स्थापयति । नात्र संदेहः ।

अथ मित्रयोर्मध्य कस्स्नेहाधिक्यं स्थापयतीत्यत आह ।

तथा केंद्रगृहरूपिणां तथा पणफररूपिणां वह्निबिन्दून्गणयेत्। उभयोर्बिन्द्वोः समूहं कृत्वा विलोकयेत्। यदि केंद्रगृहरूपिणां वह्निबिंदवोऽधिकाः स्युस्तदा प्रष्टुरुपरि तन्मित्रस्य स्नेहाधिक्यं वर्त्तते। यदि पणफरगृहरूपिणो वह्निबिंदवोऽधिकाः स्युस्तदा प्रष्टुर्मित्रस्य स्नेहाधिक्यमस्ति उभयोर्बिन्दवः समानरूपाः स्युस्तदा द्वयोः स्नेहमित्रत्वे वा समत्वे समरूपे वर्त्तते नात्र संदेहः।

अथ ग्रन्थान्तरमतेन शत्रुमित्रज्ञानमाह ।

तदा प्रश्नरमलेष्वेकादशगृहरूपिण अन्वादेशरूपं पश्येत्। यदि तस्यान्वादेशो मित्रत्वगृहेषु स्यात्। तदा तन्मित्रं वर्त्तते वा स्यात्। यदि च दुष्टत्वगृहेष्वन्वादेशो भवेत्तदा तन्मित्रं दुष्टत्वं स्थापयति। वा स्यात् । एवं यदि कुत्राप्यन्वादेशरूपो नो भवेत्तदा नातिमित्रो नातिदुष्टः। तथाहि मित्रत्वगृहाणि ५, ९, ३, ११,। दुष्टत्वगृहाणि ४, ७, १०, १२, श्रीपरमेश्वरः सम्यक्प्रकारेण जानाति ॥ नात्र संदेहः।

अथ द्वयोर्मनुष्ययोर्मध्ये मित्रत्वं भविष्यति वा दुष्टत्वमित्यत आह ।

तदा केन्द्रगृहरूपिणां तथा पणफरगृहरूपिणां रेखाकेवलयुतान्वह्निबिंदून् पृथक् पृथग्गणयेत् । यदि केन्द्रग्रहाणां वह्निबिंदूनामाधिक्यन्तदा प्रष्टा स्नेहं बहुतरं स्थापयिष्यति परन्तु तन्मित्रं नो स्थापयिष्यति । यदि पणफरगृहाणां वह्निबिंदवोधिकास्तदा तन्मित्रं स्नेहं बहुतरं स्थापयिष्यति परंतु प्रष्टा नो स्थापयिष्यति। यदि द्वयोर्बिंदवः समानरूपाः स्युस्तदा द्वयोरपि मित्रत्वं समानं वाच्यं नात्र संदेहः ।

अथानयोर्मैत्री तिष्ठेद्वा नेत्यत आह ।

तदा तृतीयै ३ ·कादश ११ पंचम ५ नवम ९ गृहेषु पश्येत्। यदि चैषां चतुर्णां रूपिणस्तथा तेषां स्वामिनश्च प्रथमगृह-

रूपिणा सार्द्धमथवा प्रथमगृहस्वामिना सार्द्धं प्रश्नरमलेषु दृष्ट्या-दिविचारेण मित्रत्वं स्थापयन्ति तदा द्वयोर्मित्रत्वं तिष्ठेत । तथा द्वावपि तस्यां मित्रत्वावस्थायां बहुवर्षाणि तिष्ठताम् विपर्य्यये विपर्य्ययं फलं वाच्यम् । नात्र संदेहः ।

अथ स्त्रीपुंसयोः सुरतस्य प्रश्न आह ।

तदा प्रश्नरमलेषु शुक्रभौमयो रूपिणं पश्येत। यद्येतौ निकटस्थौ कोऽर्थ एकस्मादेको द्वितीयो भवेत्तदा स्त्रीपुंसयोर्म्मध्ये सुरतं बहुतरं बहुकालं भवेदिति वाच्यम् । यदि तौ मित्रत्वेन मिलितौ स्यातां तदा सानंदेन प्रसन्नताभिश्च सुरतं वाच्यम् । यदि तौ दुष्टत्वेन मिलितौ स्यातां तदा महता कष्टेन कलहेन च सुरतं वाच्यम् । यदि शुक्रभौमयो रूपिणामस्य चतुर्थ४ दशम १०स्थानात्कश्चिद्रूपी दुष्टत्वदृष्ट्या पश्येत् । तदा स्त्रीपुंसयोर्म्मध्ये कदापि कदापि कलहो भवेत् । यदि सप्तमस्थानात्कश्चिद्रूपी दुष्टत्वदृष्ट्या पश्येत् । तदा स्त्रीपुंसयोर्मध्ये सदैव कलहः स्यात् । यदि भौमरूपिष्वशुभरूपी भवेत्तदा स्त्रीपक्षात्कलहादिकं स्यादिति वाच्यम् । नात्र संदेहः ।

अथ मां प्रति दृष्टिलग्नपुरुषः प्रीतिं स्थापयति वा नेत्यत आह ।

तदा प्रश्नरमलस्य पंचमगृहरूपिणं पश्येत । यदि शुभनिर्गमो भवेत्तदा दृष्टिलग्ननारी नरो वा प्रीतिं स्थापयिष्यति स्थापयति चेति वक्तव्यम् । परंतु यदि प्रथमगृहेऽशुभरूपी भवेत्तदा प्रष्टा तस्याग्रे हीनमर्यादको वर्त्तते वा भविष्यतीति वाच्यम्।अथ यदि पंचमगृहे-ऽशुभनिर्गमो भवेत्तदा प्रष्टा व्यतीतकार्य्याणामुद्विग्नत्वं स्थापयतीति वाच्यम् । तथा बहुतरां स्पृहां प्रष्टा स्थापयति । संमेलनस्येच्छां स्थापयति परंत्विदं कदापि न स्यात । अथ यदि पंचमगृहे शुभ-प्रवेशी भवेत्तदा मित्रेण सह संमेलनं यातं स्यादिति वाच्यम् । तथा प्रष्टुर्वर्द्धमानता स्यात् । अथ यद्यशुभप्रवेशी भवेत्तदा बहुशोकत्व बलहीनत्वं च स्यात प्रष्टमित्रयोर्म्मध्ये । अथ यदि पंचमगृहे शुभ-

स्थिरो भवेत्तदा चित्तोद्विग्नताया मोक्षं तथा प्रीतिहानिरुद्विग्नचित्त-परिखेदितश्च स्यात् । परंतु स्वस्यैव कारणेन । यद्यशुभःस्थिरो भवेत्तदा कार्य्याणां मध्ये स्वेच्छामयत्वोद्विग्नचित्तत्वपरिखेदितत्वं बलहीनत्वं स्थिरत्वं च स्यात । परंत्वन्येषां कारणेन । अथ यदि पंचमगृहे शुभद्विस्वभावो भवेत्तदा कदापि मित्रत्वं कदापि दुष्टत्वं च स्यात् । यद्यशुभद्विस्वभावो भवेत्तदा मित्रत्वे तथान्यकार्य्येषु च द्विविधत्वं च बलत्वं मिथ्यावादमनृतकथनं च स्यात् । तथैनं त्यक्त्वा द्वितीयं संमिलितो भवेत् परिणामनिषिद्धं कारयेत् । परंतु दुष्टानां कारणेन । तथा प्रष्टा शोकातुरो भवेत् । यदि पंचमगृह-स्वामी प्रश्नरमलेषु बलहीनो भवेत्तदा तु ध्रुवमेव सर्वं स्यात् । तथा प्रष्टा चोद्विग्नचित्तः परिखेदितो भवेत् । नात्र संदेहः । अथैषां पूर्वोक्तप्रश्नानां बहुस्फुटतरेण व्याख्यानं कुर्वन्ति केचित्तदाह ।

अथैतयोर्मित्रत्वं ममाभिप्रायसिद्धिश्च भविष्यति न वेत्यत आह ।

तदा प्रष्टृगृहरूपिणं तथाभिप्रायगृहरूपिणं च पश्येत्तदाभिप्रायप्रष्टृगृहम् ।प्रश्नरमलस्य प्रथमगृहं प्रष्टृज्ञेयम्।तथा यदि कोऽपि संतानानां प्रश्नं कुर्यात्तदा पंचमं ५ गृहं पश्येत् । यदि मित्राणां प्रश्नं चेत्तथापि तत्रैव पश्येत् । यदि दृष्टिलग्नानां प्रश्नं कुर्यात्तदा चैकादशगृहे पश्येत्। यदि धर्म्मभार्य्यायाः प्रश्नं चेत्तदा सप्तमगृहेऽवलोकनं कुर्यात् । भोगपत्नीनां तु चतुर्थगृहात् । एवं सर्वाभिप्रायाणां शेषाणां गृहं विज्ञाय फलं ब्रूयात् । तत्फलरूपिणां शुभाशुभाभ्यां तथा तेषां विचारांशैश्च वक्तव्यमिति । तदाह । यदि स शुभरूपी भवेत्तदा विचारांशः सुखोपरि विश्रामोपरि तथा प्रीत्युपरि वर्त्तते । यद्यशुभ-रूपी भवेत्तदा विचारांशः परिश्रमोपरि तथा क्रोधोपरि । तथा निश्चयोपरि वर्त्तते । एवं शुभाशुभयोः फलं ब्रूयात् ।

अथ रूपिणां विचारांशमाह ।

तत्रादौ वाग्मिनो ☳ विचारांशो विरक्तोपरि तथा प्रीतिहान्यु-

परि वर्त्तते । अथोष्णगुरूपिणो ≡ विचारांशः पंडितंमन्योपरि तथा यः शुभकर्म्म स्वल्पं कृत्वा स्वात्मानं बृहत्तरं मन्येत तस्योपरि तथा यः सर्वेभ्यः स्वात्मनि बलाधिक्यं जानीयात्तस्योपरि विचारांशो वर्त्तते । तथाऽनिच्छोपरि अरुच्युपरि विचारांशो ज्ञेयः । अथ तीक्ष्णांशुरूपिणो ≡ विचारांशो मनसो विश्रामोपरि । तथा मनोऽभिलषितासिद्धयर्थमग्रे सहायदातारं ज्ञात्वा याचकस्य याच्यमानो याचको भवेदित्यस्योपरि विचारांशो वर्त्तते । तथा स्वल्पद्रव्यादिकं शीघ्रतया भवेदस्योपरि विचारांशः । अथ सूरिरूपिणो ≡ विचारांशो मनसो निश्चितत्त्वोपरि कार्यसिद्धिर्य्याता स्यादथवा ध्रुवं जानीयादिदं कार्य्याधिकं कदापि सिद्धिं नो प्रयास्यतीत्याभ्यां कृत्वा । अत एव शीघ्रत्वं नो करोति । अथ कविरूपिणो ≡ विचारांशः पुष्टत्वोपरि प्रसन्नावस्थोपरि प्रसन्नतोपरि मित्रादिभ्यः सकाशात् । तथास्य स्पृहा तस्योपरि सदा तिष्ठेदस्योपरि विचारांशः । तथा मित्रदृष्टिलग्नादिभ्यः सकाशान्मनोऽभिलषितासिद्धिं प्रयाति चास्योपरि विचारांशो वर्त्तत अथ सौरिरूपिणो विचारांशो बहुस्वेच्छोपरि तथा क्रोधोपरि वर्त्तते । तथाऽनायासेन नैराश्येन च मनोऽभिलषितं सिद्धिं प्रयातीत्यस्योपरि विचारांशो वर्त्तते । अथ वक्ररूपिणो विचारांशो व्यतीतकर्म्मणोद्विग्नचित्तोपरि खेदितोपरि वर्त्तते । तथा बहुस्वेच्छाबहुस्पृहा संमेलनकारणेन स्यादस्योपरि विचारांशो वर्त्तते। अथ पातरूपिणो ≡ विचारांशो बहुतूर्णोपरि तथा अबन्धेजोपरि तथा क्रोधोपरि वर्त्तते । तथा अनिश्चयोपरि । अथ लोहितस्य ≡ विचारांशश्चित्रोपरि नानाविचारोपरि तथा मनसो म्लानोपरि तथा क्रोधोपरि वर्त्तते । अथ सौम्यस्य ≡ विचारांशो बहुचित्तोपरि तथा स्पर्द्धोपरि तथा आश्चर्यतोपरि चकितोपरि विस्मयोपरि वर्त्तत एवमेव बोधनस्यापि ≡ विचारांशो ज्ञेयः परन्तु स्पर्द्धत्वं स्वल्पं वाच्यम् । अथ शीतांशोः ≡ विचारांशो निश्चितोपरि तथा

रक्तोपरि वर्त्तते । तथा यदर्थं प्रश्नं पृच्छति प्रष्टा स पुरुषो द्विविध-चित्तो भवेत् । किमर्थम् । तेन सार्द्धं प्रतिष्ठेद्वा नेति विचारे । अथ दैत्यार्चितस्य ⁛ विचारांशश्चित्तोपरि तथा नानाविचारोपरि तथा बहुस्वेच्छोपरि तथा सदा क्रोधोपरि वर्त्तते । अथ विधो ⁝ विचारांशो मनसः प्रसन्नतोपरि हष्टिलग्नमित्राणां पक्षात् ।तथा तेभ्यो बहु-प्रसन्नता स्यात्।एवं विचारांशे रूपिणां फलं रमलेषु मनोऽभिलषित-गृहाश्रितं ब्रूयात् ।अत्रावश्यकं प्रष्टुर्म्मनोऽभिलषितरूपिणोऽन्वादेश-रूपं विलोकयेत् । कस्मिन्गृहे वर्त्तत इति । यदि मित्रत्वगृहे तस्य रूपिणोऽन्वादेशरूपो भवेत्तदा प्रष्टुर्मनोऽभिलषितयोर्मध्ये मित्रत्वं वाच्यम् । यदि दुष्टत्वगृहेऽन्वादेशो भवेत्तदा दुष्टत्वं ब्रूयात् । तदा प्रष्टुर्मनोऽभिलषितयोर्मध्ये मित्रत्वगृहाणि ३, ५, ६, ११ तथोभयो-र्दुष्टत्वगृहाणि ४, ७, १०, १२ यद्यत्र मनोऽभिलषितगृहरूप्य-न्वादेशरूपो भवेन्मित्रत्वगृहेषु तदा प्रष्टा मनोऽभिलषितेन सार्द्धं मित्रत्वं स्थापयति । यदि मनोभिलषितगृहरूपी मित्रत्व-गृहेष्वन्वादेशरूपो नो मनो भवेत्तदा मनोऽभिलषितः प्रष्ट्रा सार्द्धं मित्रत्वं स्थापयति । एवं यदि दुष्टगृहेष्वन्वादेशो भवेत्तदा प्रष्टा मनोऽभिलषितेन सार्द्धं दुष्टत्वं स्थापयति।यद्यन्वादेश एव कुत्रापि नो भवेत्तदा मनोऽभिलषितः प्रष्ट्रा सार्द्धं दुष्टत्वं स्थापयति । शेष-गृहे १, २, ६, ८, ष्वन्वादेशे सति मध्यमं फलं वाच्यम् । नाति-मित्रत्वं नातिदुष्टत्वं नात्र संदेहः ।

अथ ग्रन्थांतरसम्मतमाह ।

यदि सन्तानार्थं पृच्छेत्तदा पंचमगृहाद्ब्रूयात् । अथ यदि पौत्रार्थं पृच्छेत्तदा नवम९ गृहाद्ब्रूयात् । कस्मात्पञ्चमात्पंचमं वर्त्तत इति वचनात् । अथ यदि जनकार्थं पृच्छेत्तदा चतुर्थगृहाद्ब्रूयात् । यदि पितामहस्य प्रश्नं कुर्यात्तदा सप्तमगृहाद्ब्रूयात् । कस्मात् । चतुर्थाच्चतुर्थकं वर्त्तत इति वचनात्।अथ यदि मात्रंशसंभवानां भगि-

नीभातॄणां प्रश्नं कुर्यात्तदा द्वितीयगृहाद्ब्रूयात् । कस्मात् । मातृगृहा १० त्पंचमं वर्त्तत इति वचनात् । यद्यशक्तामित्रदृष्टिलग्नानां प्रश्नं कुर्यात्तदा पंचमगृहादथवा चैकादशगृहाद्ब्रूयात् । अथ केचिद्वदंति पंचमगृहादेकादशगृहसंबंधेन सह फलं ब्रूयात् । अथ यदि पृच्छेत् मित्रं करिष्यामि वा न तदा षष्ठगृहाद्ब्रूयात् । एवं या भार्य्या तस्मात्पुरुषात्पृथक्स्थाऽभूद्यदि तस्याः प्रश्नं कुर्यात्तदापि षष्ठगृहाद्ब्रूयात् । अथ यदि विवाहितस्त्रियाः प्रश्नं कुर्यात्तदा सप्तमगृहाद्ब्रूयात् । अथ यां स्त्रियं विवाहितां करिष्याति यदि तदर्थं प्रश्नं पृच्छेत्तदाष्टमगृहाद्ब्रूयात् । अथ यदि नूतनकार्य्यस्य प्रश्नं कुर्यात्तदा चैकादश११ गृहाद्ब्रूयात् । अथ यदि चायं चतुष्पदक्रयं करिष्यति तस्य प्रश्नं कारयेत्तदा त्रयोदशगृहाद्ब्रूयात् । एवं सर्व्वेषां प्रश्नं ब्रूयात् । नात्र संदेहः ॥

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे पंचमगृहस्य प्रश्नकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ।

तस्मिन्षष्ठाध्याये षष्ठगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादौ षष्ठगृहस्य विचारांशमाह । दासीदासानुचराणां विचारः कर्तव्यः तथा नीचजातीनां विचारः कर्त्तव्यः । तथा शोकादीनां विचारः । साक्षिकरणस्य विचारः । रोगिणां विचारः । सगर्भायाःस्त्रिया विचारः । स्पर्द्धाया विचारः । कुकर्म्मणो विचारः । अगम्यागमनस्य विचारः । कुत्सितकार्य्यस्य विचारः । बंधगतपुरुषाणां विचारः । कठोरवस्तुनो विचारः । स्त्रीतिरस्कृतपुरुषस्य विचारः । तथा पुरुषतिरस्कृतायाः स्त्रिया विचारः । यो गुप्तस्थाने तिष्ठति तस्य विचारः । वशीकरणादिप्रयोगस्य विचारः । भेदः प्रकटो भविष्यति वा नेत्यस्य विचारः । स्वभेदा गुप्ताः सन्ति वा नेत्यस्य विचारः । पितुः स्थानांतरे प्राप्तिः स्याद्वा नेत्यस्य विचारः । भ्रातॄणां स्थितिः स्याद्वा नेत्यस्य

विचारः। चतुष्पदानां विचारः। यथा गर्दभादयः तेषां चतुष्पदानां चरणतले खुराग्रे द्विधाकरणं नो भवेत्तेषां विचारः।इत्यादिविचारं षष्ठ-गृहे विचारयेत्।यद्येषां मध्ये रोगिणोऽवस्थायाः प्रश्नं कुर्यात्तदा षष्ठ-गृहे पश्येत्। यदि वह्निमुखो भवेत्तदा पित्तजः क्लेशो वाच्यः।उष्णत्वेन रोगा उत्पन्ना यदि वायुमुखो भवेत्तदा वायुना वा रुधिरेण क्लेशो जात इति वाच्यम्।यदि जलमुखो भवेत्तदा जलमध्येन श्लेष्मजं क्लेशं वाच्यम्। अत्र कफाधिक्यं वाच्यम्। यदि भूमुखो भवेत्तदा श्लेष्म-शुक्राभ्यां जनितः क्लेशो वाच्यः। अथवा शयनतरात् क्लेशो वाच्यः। अथ यदि षष्ठगृहे प्रवेशी भवेत्तदा क्लेशस्याधिक्यता वाच्या। यदि निर्गमो भवेत्तदा क्लेशस्य स्वल्पत्वं वाच्यम्। यदि स्थिरो भवेत्तदा क्लेशस्य स्थिरत्वं वाच्यम्। यदि द्विस्वभावो भवेत्तदा चैकस्मिन् दिने शुभमेकस्मिन् दिने नेष्टमिति फलं ब्रूयात्। अत्र सर्वत्रैव यदि शुभो भवेत्तदा यत्नकरणं हितं स्यादिति वाच्यम्। अशुभश्चेत्तदा कोऽपि यत्नो हितकरो नो भवेत्।

अथात्र कश्चिद्विशेष उच्यते।

यदि षष्ठगृहे लोहितो ⁝ भवेत्तदा क्लेशे रुधिरवायुक्षतानामा-धिक्यता वाच्या। यदि मंदगो ⁝ भवेत्तदा विचारांशः शोथो-परि तथास्थिस्फोटनोपरि वर्त्तते तथैव वाच्यम्। अत्र रोगि-णो वर्त्तमानावस्थां षष्ठगृहरूपिणो ब्रूयात्। एवं रोगिणो भूतका-लस्यावस्था पंचमगृहाद्वाच्या। तथा रोगिणो भविष्यकालस्यावस्था सप्तमगृहाद्वक्तव्या नात्र संदेहः।

अथ रोगिणो भैषजमौषधं कीदृशं वर्त्तेत इत्यत आह।

तदा षष्ठाच्चतुर्थगृहे कोर्थो नवमगृहरूपिणं पश्येत्। यदि शुभ-रूपी भवेत्तदा भैषजमौषधं हितकरं स्यात्। अशुभश्चेत्तदा भैषजमौषधं हितकरं न वाच्यम्। एवं यदि मिश्रितरूपी भवेत्तदा मध्यमहितकरं वाच्यम्।

औषधेन स्वास्थ्यं भविष्यति वा नेत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यदि शुभनिर्गमो भवेत्तदा भैषजौषधेन स्वास्थ्यं भविष्यति परन्तु सुगममार्गेण । यद्य-शुभो भवेत्तदा काठिन्येन स्वास्थ्यं वाच्यम् । यदि सप्तमगृहे प्रवेशी भवेत्तदा क्लेशस्याधिक्यता स्यादिति वाच्यम् । न तु भैषजौषधादिभिः स्वास्थ्यं स्यात् । यदि स्थिरो भवेत्तदा भैषजौ-षधेन बहुदिनोपरि स्वास्थ्यं स्यात् । यदि द्विस्वभावो भवेत्तदा भैषजौषधेनैकस्मिन् दिने स्वास्थ्यमेकस्मिन् दिने क्लेशो वाच्यः । सर्वत्रैव शुभे सुगममार्गेणाऽशुभे काठिन्येन स्वास्थ्यं ब्रूयात् ।

अथैतद्रोगिणः किमौषधं हितकरं भविष्यतीत्यत आह ।

तदा द्वितीयगृहरूपिणं पश्येत् । यदि वह्निमुखो भवेत्तदोष्णौ-षधेन स्वास्थ्यम् । यदि वायुमुखो भवेत्तदा जलमयौषधं हितकरम् । यदि जलमुखो भवेत्तदा शीतलौषधं हितकरं वाच्यम् । यदि भूमिमुखो भवेत्तदा शुष्कौषधं हितकरं स्यात् । नात्र संदेहः ।

अथ वैद्यः कीदृशो मूर्खो वर्त्तते वा पण्डित इत्यत आह ।

तदा दशम गृहरूपिणं पश्येत् । यदि शुभो भवेत्तदा वैद्यो विद्या-वान् वर्त्तते । यद्यशुभो भवेत्तदा वैद्यो मूर्खतरो ज्ञेयः । अत्र बहुतरा-चार्य्या वैद्यरूपं प्रथमगृहाद्वदंति ।

अथ रोगिणो रोगशान्तिर्भविष्यति वा नेत्यतआह ।

तदा चैकादशगृहरूपिणं पश्येत् । यदि शुभो भवेत्तदा रोगशा-न्तिर्भविष्यति नत्वशुभरूपिणि । नात्र संदेहः ।

अथ रोगिणो रोगशांतिर्भविष्यति वा मृत्युरित्यत आह ।

तदा द्वादशगृहरूपिणं पश्येत् । कस्माद्रोगित्वस्य प्रकटकरणं द्वादशगृहादष्टमगृहरूपिणं संबंधेन सहेति वचनात् । यदि शुभो भवेत्तदा रोगशांतिः । अशुभो द्वादशगृहे तदा मृत्युः स्यात् । अत्रावश्यं चतुरः

साक्षीभूतान् १२, १४, १५, १६, तथा प्रथमलिसानुलअमररूपिणं द्वितीयलिसानुलअमरसानिरूपिणमिति द्वयमपि विलोकयेत् । नात्र संदेहः ।

अथ प्रकारान्तरमाह ।

तदा पंचमगृहरूपिणोऽन्वादेशरूपं पश्येत् । यदि सोऽन्वादेशः शुभस्थानेषु स्यात् । यथा केन्द्रगृहेषु १, ४, ७, १०, वा पणफरगृहेषु २, ५, ८, ११, अथवा तस्मिन्गृहे यत्र किंचित् संबंधं स्थापयति तदा रोगी स्वास्थ्यं प्राप्नुयात् । अत्र ध्रुवमेव यदि चतुर्षु केंद्रगृहेषु १, ४, ७, १० शुभरूपी स्यात्तदा तु स्वास्थ्यमेव ब्रूयात् । यदि तेष्वशुभरूपी भवेत्तदा रोगी मृत्युं प्राप्नुयात् । अत्रापि यदि मृत्युभवने ८ द्वादशगृहे १२ वा शुभरूपी भवेत्तदा तु ध्रुवमेव मृत्युं प्राप्नुयात् । अथ यदि तेषु गृहेषु १, ४, ७, १० कोऽपि शुभः कोऽप्यशुभस्तदा द्रष्टव्यम् । को बहुतरो बलाधिक्यस्तस्य फलं ब्रूयात् ।

अथ प्रकारांतरमाह ।

यदि षष्ठः ६ गृहरूपी वा षष्ठगृहस्वामी अशुभगृहेषु आपोक्लिमप्रभृतिष्वन्वादेशरूपं कुर्यात्तदा रोगी मृत्युं प्राप्नुयात् । परंतु यदि केंद्रगृहे १, ४, ७, १० ष्वशुभरूपी भवेत्तथा सप्तमगृहस्वामी द्वाभ्यामशुभाभ्यां सार्द्धं दुष्टत्वेन यदि सम्मिलितः स्यात् । अथवा प्रथमगृहरूपी वा प्रथमगृहस्वामी कुत्रचित् प्रश्नरमलेषु दुष्टत्वेन सम्मिलितो भवेत्तदा ध्रुवं रोगी मृत्युं प्राप्नुयात् । अथ केचिद्वदंति षष्ठगृहरूपिणं द्वादशगृहरूपिणा गुणयेत् । आभ्यां यो रूपी उत्पद्यते तं पश्येत् । यदि स अशुभप्रवेशी भवेद्वा स्थितो भवेत्तथा क्लेशो बहुदिनं तिष्ठेत् । स्वास्थ्यं नो प्राप्नुयाद्रोगी कदापि । यदि शुभप्रवेशी वा स्थिरो भवेत्तदा क्लेशं बहुदिनं तिष्ठेत्परन्तु परिणामे स्वास्थ्यं प्राप्नुयाद्रोगी यद्यशुभनिर्गमो भवेत्तदा क्लेशं प्राप्नुयात् परंतु शीघ्रतया रोगशान्तिर्न स्यात् । यदि शुभनिर्गमो भवेत्तदा

झटित्येव स्वास्थ्यं प्राप्नुयात् । अथ यदि स द्विस्वभावो भवेत्तदा कदापि क्लेशं कदापि स्वास्थ्यं प्राप्नुयाद्रोगी । परंतु यदि स शुभो भवेत्तदा परिणामे स्वास्थ्यं भवेत् । यद्यशुभो भवेत्तदा तु कदापि परिणामे स्वास्थ्यं नो प्राप्नुयात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्याष्टमगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् । एवं चतुर्थगृहरूपिणं द्वादशगृहरूपिणा गुणयेत् । अनेन प्रकारेण द्वौ रूपिणावुत्पाद्य द्वाभ्यामेकं रूपिणमुत्पादयेत् । एवं प्रथमगृहरूपिणा गुणयेत् । ताभ्यां यो रूपी उत्पन्नो भवेत्तं पश्येत् । यदि स अशुभप्रवेशी भवेद्वा स्थिराशुभस्तदा रोगी कठिनक्लेशं दीर्घतरं बहुदिनयुतं प्राप्नुयात् । परिणामे रोगी रोगान्नो मुच्येत । यदि शुभप्रवेशी वा शुभस्थिरो भवेत्तदा क्लेशं लम्बायमानं बहुदिनयुतं प्राप्नुयात् । परन्तु परिणामे स्वास्थ्यं भवेत् । यदि स अशुभनिर्गमो भवेत्तदा काठिन्येन क्लेशं प्राप्नुयात् परन्तु झटित्येव स्वास्थ्यं नो भवेत् यदि शुभनिर्गमो भवेत्तदा स्वाथ्यं विनापि झटित्येव स्वास्थ्यं प्राप्नुयात् । परन्तु सुगममार्गेण । यदि स अशुभद्विस्वभावो भवेत्तदा क्लेशं काठिन्यं प्राप्नुयात् पुनः स्वास्थ्यं प्राप्नुयात् पुनरपि रोगग्रस्तो भवेत्तदा तेन रोगित्वेन स्वास्थ्यं नो प्राप्नुयात् कतिपयदिनानि स्वस्थो भूत्वा पुनरपि रोगित्वे पतेत् । यदि शुभद्विस्वभावो भवेत्तदा सुखेन क्लेशं व्ययं कुर्यात्पुनः कत्येकदिनानि स्वस्थो भूत्वा रोगित्वे पतेत् । परन्तु परिणामे स्वास्थ्यं प्राप्नुयात् ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य प्रथमगृहरूपिणं षष्ठगृहरूपिणा गुणयेत् ताभ्यां य उत्पद्येत तं भिन्नं स्थापयेत् । एवं चतुर्थगृहरूपिणं

१८

वाष्टमगृहरूपिणा गुणयेत् । आभ्यां यः स्यात्तं वापि भिन्नं । स्थापयेत्तौ स्वस्मिन्गुणिते य उत्पद्येत तं पश्येत् । प्रागुक्तप्रकारवत् फलं ब्रूयात् । नात्र संदेहः ।

अथ रोगी मृत्युं प्राप्नुयाद्वा नेत्यत आह ।

तदा अष्टमगृहरूपिणं चतुर्थगृहरूपिणा गुणयेत् । ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा प्रागुक्तप्रकारवत्फलं ब्रूयात् । अथ स एव यदि लोहितो वा ⁝ सौम्यो वा ⁝ मंदगो ⁝ वा विधु ⁝ वा सौरिः ⁝ स्यात् एतेष्वेको भूत्वा यदि प्रश्नरमलेषु प्रकर्षं कुर्यात्तदा रोगिणो निषिद्धतरं वाच्यम् । अथवा साधारणेनैव लोहितादयः पंचरूपिणः प्रश्नरमलेषु रूपसमूहं कुर्य्युस्तदा रोगिणो नेष्टं वाच्यमिति तदाह। सौरिः ⁝ प्रथमगृहे तदा मंदगः ⁝ पंचमगृहे विशेषणेन रोगे च तथा विधु ⁝ लोहितौ ⁝ षष्ठगृहे विशेषणेन शवपटतूलिके ॥ तथा सौम्यो ⁝ ऽष्टम ८ गृहे विशेषणेन शवशय्येव । अत्र विशेषणपदमुपमावाचकमित्यर्थः । अथ यदि प्रश्नरमलेष्वेतेषां प्रकर्षो न स्यात्तदाऽष्टमचतुर्थाभ्यामुत्पन्नो यो रूपी तस्य संख्यांकं गृह्णीयात् । तावत्क्लेशावधिर्वक्तव्यो नात्र संदेहः ।

अथ ग्रंथांतरेषु षष्ठगृहे मंदगस्य ⁝ व्याख्यानं श्मशानभूमिरिति कथितं वर्त्तते । तदाह बोधन ⁝ विधू ⁝ एतौ द्वौ षष्ठेऽष्टमगृहे शवपट शवशय्याशवतूलिकाशवजलपात्राणां विचारांशरूपो वर्त्तते । तथा सौरिरूपी ⁝ प्रथमगृहे मंदगः ⁝ षष्ठगृहे श्मशानभूमिरिति विचारांशं ददाति । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

यदि चतुर्थगृहरूपी यदाष्टमगृहेऽन्वादेशरूपं कुर्यादशुभो भूत्वा तदा ध्रुवं रोगी मृत्युं प्राप्नुयात् । अथ ग्रंथांतरे कथितं वर्त्तते यद्यष्टमगृहे शुभनिर्गमो भवेत्तदा रोगी स्वास्थ्यं प्राप्नुयात् । यदा

शुभनिर्गमो वा प्रवेशी स्यात्तदाराद्रुक्तादिने रात्रौ वा रोगिणो न निषिद्धतरं वाच्यम् परिणामे मृत्युरिति । नात्र संदेहः। अथ केचिदाचार्या रोगिणः प्रश्नं दशमगृहाद्वदंति शुभरूपिणा स्वास्थ्यमशुभरूपिणा मृत्युरिति । अपरः सर्वो वृत्तांतः पूर्वोक्तवद्वाच्यः । नात्र संदेहः। अथ प्रकारांतरमाह। रोगिणो निमित्ताय प्रश्नरमलस्य प्रथम १ गृहे यदि मंदगो ⁝ भवेद्वाऽष्टमगृहे तदा श्मशानरजस्युपरि विचारांशो वर्त्तते परंतु तद्रजो यच्छमशानभूमेः सकाशादुद्धरणं करोति । एवं यदि प्रथमाऽष्टम ८ गृहे सौरिः ⁝ स्यात्तदा तु केवलश्मशानभूमिस्थरजसि विचारांशो वर्त्तते तथा विधुः ⁝ चतुर्थगृहे स्यात्तदा च तूलिकोपरि विचारांशः । तथा बोधनः ⁝ पंचमगृहे स्यात्तदा शवशय्योपरि विचारांशः । एवं यदि विधु ⁝ स्तथा बोधनो ⁝ यदि षष्ठाष्टमगृहे स्यात्तदा ध्रुवं रोगी मृत्युं प्राप्नुयात् । तथा शीतांशु ⁝ श्चतुर्थगृहे श्मशानस्य पथोपरि विचारांशं ददाति स एव तृतीयगृहे वा नवमगृहे ९ यदि स्यात्तदा स्वर्गं प्रति गमनोपरि विचारांशः । अथ यदि तृतीयगृहे ३ ऽष्टमगृहे ८ शुभरूपी भवेत्तदा रमलतुलागृहे १६ निर्गमः स्यात्तदा ध्रुवं रोगी मृत्युं प्राप्नुयात् । यदि तृतीय ३ षष्ठ ६ नवम ९ गृहे शुभरूपी स्यात्तदा रोगी स्वास्थ्यं प्राप्नुयात् । परंतु झटित्येव।अथ वाक्यांतरेण वाग्मी ⁝ प्रथमगृहे शवशय्यायां वा। एवं सौम्योपि ⁝ प्रथमगृहे शवविमाने च तथा श्मशानभूमिभ्यो निष्कासितरज इव स्वरूपेण मृतके वा यदि तौ रूपिणौ ⁝ ⁝ प्रश्नरमलस्य प्रथमगृहे वाऽष्टमगृहे नवमे द्वादशे च स्यातां तदा स रोगी ध्रुवं मृत्युं प्राप्नुयात् । एवं तेप्यनिष्टाः पूर्वोक्तरूपिणः ⁝ ⁝ ⁝ ⁝ ⁝ ⁝ यथोक्तगृहेषु यदि स्युस्तदा ध्रुवं रोगिणो मृत्युर्नात्र संदेहः । अथ प्रकारांतरमाह । प्रश्नरमलस्य संपूर्णरूपिणां वह्निवायुजलभूमीनां बिन्दून् पृथक्पृथग्गणयेत् । यदि जलभूमिबिंदुभ्यो वह्निवायव्योबिंदवो बहुतराः स्युस्तदा रोगी कदापि मृत्युं नप्राप्नुयात्तस्य किलभोग्यायु-

र्दायो वर्ततेऽधुना यदि वह्निवायुबिंदुभ्यो जलभूम्योर्बिन्दवो बहुतराः स्युस्तदा रोगी मृत्युं प्राप्नुयात् । नात्र सन्देहः । अथ प्रकारांतरमाह । यदि रमलतुलागृहा १९ द्विन्दौ प्रचालिते सत्येतेषु रूपिषु संपूर्णतांयायाद्यदि बिंदुस्तदा रोगी मृत्युं प्राप्नुयात् नान्येषु रूपिषु तथाहि रूपिणः । विधुः ⁝ पातो ⁝ मंदग ⁝ आरो ⁝ वक्रः ⁝ । ⁝

अथ रोगिणोऽवस्था कीदृशी वर्तत इत्यत आह ।

तदा प्रश्नरमलस्य षष्ठगृहे पश्येद्यदि वह्निमुखो भवेत्तदा रोगिणि पित्तोद्भवक्लेशो वाच्यः तथोष्णताशुष्कत्वयोर्वर्द्धमानता वक्तव्या । अथ यदि वायुमुखो भवेत्तदा रुधिरवर्द्धमानतायाः क्लेशोत्पत्तिस्तथा कोष्ठवायुनापि अथ यदि जलमुखो भवेत्तदा कफजक्लेशो वाच्यः । तत्र शीतप्रस्वेदादिबहुतरं ब्रूहि प्रष्टारं प्रति। अथ यदि भूमिमुखो भवेत्तदा रुधिरशुष्कत्वेनोन्मत्तरूपः क्लेशो वाच्यः । तथा शीतांशौ क्षीणत्वशुष्कत्वयोर्वर्द्धमानता क्लेशोत्पत्तिश्च स्यात् । अथ यदि प्रश्नरमलस्य षष्ठगृहरूपी प्रथमगृहेऽन्वादेशरूपं कुर्यात्तदा क्लेशोऽबलित्वेन रोगिणः शरीरे बलहीनत्वं वाच्यम् । यदि दशमगृहेऽन्वादेशरूपो भवेत्तदा विचारांशः क्लेशस्य वर्द्धमानतोपरि वर्त्तते । अथ केशवर्द्धमानता स्यात् । यदि निर्गमः षष्ठगृहे स्यात्तदा विचारांशः क्लेशस्य अत एव क्लेशस्य क्षयत्वं स्यात्तं यदि प्रेर्यषष्ठगृहे स्यात्तदा विचारांशःशल्यस्य वर्द्धमानतोपरि यदि स्थिरो भवेत्तदा दीर्घकालं क्लेशः स्यादिति वाच्यम् । यदि द्विस्वभावो भवेत्तदा विचारांशः क्लेशस्य गमनागमनरूपादिर्ज्ञेयः कदापि क्लेशाधिक्यं कदापि दुःखहानिरिति । एवं यदि सौरिश्चैकादशगृहे स्यात्तदा द्विस्वभावोक्तं फलं वाच्यम् । यदि लोहितः ⁝ षष्ठगृहे स्यात्तथा स एव यस्मिन्गृहेऽन्वादेशरूपं कुर्यात्तदा रोगिणः शरीरे रुधिरस्य वर्द्धमानतोपरि विचारांशोऽत एव ध्रुवं नासिकातोऽथवा नाडीभ्यो वागतोऽन्यथा नागतो रुधिर-

प्रवाहः स्यात् । यदि मंदगः ⁘ षष्ठगृहे स्यात्तथा स पंचमप्रथमगृहे वान्यस्मिन्नन्वादेशरूपं कुर्यात्तदा रोगिणः शरीरेऽशौरोगन्यथा शरीरे गुरुत्वं भारयुतत्वमिवेति वाच्यम्। यदि शशी अष्टम८गृहेऽन्वादेशरूपं कुर्य्यात्तदा रोगिनिषिद्धतरत्वं वाच्यम् । झटित्येव मृत्युं प्राप्नुयात् । यदि चतुर्था ४ ष्टम८ गृहेऽन्वादेशरूपो भवेत्तथापि तदेव फलं वाच्यम् । नात्र सन्देहः । अथ यदि चैकादशगृहे ११सौम्यः ⁘ स्याद्वा वक्रो ⁘ वा कवि ⁘ र्वा तीक्ष्णांशु ⁘ र्वा पातरूपी ⁘ भवेत्तदा रोगिणो मृत्युसदृशं फलं वाच्यम् । अथ मंदग ⁘ शीतांशु ⁘ बोधन ⁘ सौम्य ⁘ रूपिणश्चैते रोगिणः प्रश्नेऽनिष्टफलदा ज्ञेयाः । अथ केचिद्रमलज्ञा वदंति यदि रोगिणः प्रश्नरमलेषु वर्ज्यमानरूपिणः पतंति तदा ध्रुवं रोगी झटित्येव मृत्युं प्राप्नुयात् । तथा हि । यदि शीतांशु ⁘ र्नवमगृहे समागतः स्यात्तदा रोगिणो गमनोपरि विचारांशः।यदि सौरिः ⁘ षष्ठ गृहे६स्यात्तदा शावपटोपरि विचारांशः। यदि मंदगो ⁘ ऽष्टमगृहे स्यात्तदा श्मशानभूम्युपरि विचारांशः । यदि वा बोधनः ⁘ द्वादशगृहे १२ स्यात्तदा विचारांशः शवशय्योपरि । यदि सौम्य ⁘ रूपी षष्ठगृहे स्यात्तदा विचारांशो लघुजनोपरि ये जनाः भृत्या इतस्ततो गच्छंति अथवा ये जनाः जने मृते रोदनं कुर्वन्ति तेषामुपरि विचारांशो ज्ञेयः।एवं रूपिणि यथोक्तगृहे गते रोगी ध्रुवं मृत्युं प्राप्नुयात् अथ यदि चैतेषु स्थानेषु ९।६।८। १२ तत्पंचरूपिण इतररूपिणः स्युस्तथा केंद्रगृहे । १ । ४ ।७। १० शुभरूपिणो यदि भवेयुस्तथैव पंचदशगृहे १५ सौम्यरूपी ⁘ द्वाभ्यां निर्गमाभ्यामुत्पन्नःस्यात्तदा झटित्येव ध्रुवं रोगी स्वास्थ्यं प्राप्नुयात् । रोगान्मुक्तो रोगीति । अथ यदि मंदग ⁘ श्चैकादशगृहे ११ स्यात्तदा रोगी बहुदिनानि क्लेशं प्राप्नुयात् । यद्यष्टमगृहेऽशुभरूपी भवेत्तदा तदुक्तदिने रात्रौ वा रोगिणः मृत्युसदृशं फलं स्यात् । अथ किंचिद्विशेष उच्यते ॥ रमलस्य प्रथमगृहं वैद्यस्य पंडितत्त्वचातुर्य्यताशीलदयादिकानां ज्ञेयम् । एवं चतुर्थ४ गृहमौषधस्य ज्ञेयम्।यथौषधं

भोजनपानादिकम् । एवं षष्ठगृहं ६ क्लेशस्य गुरुत्वलघुत्वकाठिन्यादेर्ज्ञेयम् । एवं दशमगृहे क्लेशस्य वर्धमानताक्षयित्वयोर्ज्ञेयः । यदा रमलं पातितं भवेत्तदैतेषु गृहेषु पश्येत् । यदि प्रथम १ गृहे शुभरूपी भवेत्तदा स वैद्यो विद्यावान् कुशलो धीरो दयावान् ज्ञातव्यः । यद्यशुभरूपी भवेत्तदा व्यत्ययं फलं स वैद्यो मूर्खतरो मूढोऽधैर्य्ययुतो दयारहितो ज्ञेयः । अथ यदि चतुर्थगृहे शुभरूपी भवेत्तदौषधभोजनपानादिकं हितकरं वाच्यम् । औषधादिकाः शरीरे हितकराः स्युर्लघुत्वक्षयत्वसुगमरूपत्वं वाच्यं यद्यशुभरूप्यागतश्चेत्तदा क्लेशस्य । अथ यदि षष्ठ ६ गृहे शुभरूपी भवेत्तदा क्लेशस्य यद्यशुभरूपी भवेत्तदा व्यत्ययं फलमौषधभोजनपानादिकाः शरीरे हितकरा न स्युर्गुरुत्वं वर्धमानत्वं कष्टकाठिन्यं च वाच्यम् । तथा षष्ठगृहाद्वह्निमुखादिरूपिभिस्तत्प्रकृतिजनितक्लेशस्य तथाक्लेशस्योत्पत्तिकारणं वाच्यम् । यथा पूर्वोक्तं मया । एवं षष्ठगृहे क्लेशस्यगुरुत्वं लघुत्वं कठोरत्वं नम्रत्वं च निर्गमप्रवेशि स्थिरद्विस्वभावरूपिणां शुभाशुभसमानरूपैर्ज्ञेयम् । तथा तस्याऽन्वादेशिनं शुभाशुभगृहेषु विलोकयित्वा फलं ब्रूयात् । शुभे क्लेशस्य क्षयत्वं स्वल्पत्वं लघुत्वं नम्रत्वं वाच्यम् । अशुभे क्लेशस्यबहुत्वं कठोरत्वं गुरुत्वं वाच्यम् । अथ यदि दशमगृहे शुभरूपी भवेत्तदा रोगिणोऽवस्था शुभतरा तथा क्लेशस्य क्षयरूपत्वं वाच्यम् । यद्यशुभरूपी भवेत्तदा रोगिणोऽवस्था निषिद्धतरा वाच्या तथा क्लेशस्य वर्द्धमानत्वं ब्रूयात् । नात्र संदेहः ।

अथ सुखप्रसूता भविष्यामि वा दुःखप्रसूतेत्यत आह ।

तदा षष्ठगृहे पश्येद्यदि शुभनिर्गमो भवेत्तदा सुखप्रसूता भविष्यतीति तां ब्रूयात् । यद्यशुभनिर्गमो भवेत्तदा सुगमेन विना कष्टेन बालकः स्यात्परंतु परिणामे मातुर्भयं वर्त्तते इति वाच्यम् । अथ यदि शुभप्रवेशी भवेत्तदा कष्टप्रसूताः स्यात्परंतु परिणामे भयं

किमपि नास्ति। यद्यशुभप्रवेशी भवेत्तदा कष्टप्रसूता स्यात्परंतु परिणामे मृत्युभयं वर्त्तते । एवमेव प्रवेशिरूपिण उक्तफलं शुभाशुभरूपे स्थिरेपि त्येत्वं वाच्यम्। एवं द्विस्वभावश्चेत्तदा निर्गमोक्तफलं ज्ञयात्। नात्र संदेहः ।

सा नारी गुर्विणी वर्त्तते वा नेति प्रश्न आह ।

तदा प्रश्नरमलस्य प्रथमगृहरूपिणं सप्तमगृहरूपिणा गुणयेत ताभ्यां यो भवेत्तं पश्येद्यदि स स्थिरप्रवेशिनौ भवेतां कोऽर्थः स्थिरो वा प्रवेशी स्यात्तदा सा नारी गुर्विणीति निगद्यते । पुरुषरूपिणा पुत्रजन्म स्त्रीरूपिणा कन्यकाजन्म।एवं गर्भसंभवो वाच्यः।अथ यदि स निर्गमो द्विस्वभावोभवेत्तदा सा नारी संप्रति गुर्विणी नास्तीति ब्रूयादेवं ग्रंथांतरेऽपि कथितं वर्त्तते । नात्र संदेहः । अथ यदि कोऽपि पृच्छेत्सा नारी सुखेन प्रसविष्यति वा दुःखेन तथा परिणामे कुशलं भविष्यति वा मरणं वेत्यत आह । तदा षष्ठगृहे पश्येद्यत्प्रसवस्य वर्त्तते । एवं प्रथमगृहे पश्येद्यद्गर्भयुतायाः शरीस्य वर्त्तते । यद्युभयस्मिन्गृहे प्रवेशिनौ शुभरूपिणौ भवेतां तदा गुर्विणी प्रसवे शरीरस्य कुशलत्वं ब्रूयात् । परंतु प्रसवजननं किंचित्काठिन्येन स्यात् परिणामे भयदम् । कस्मात्स प्रसवो मातृसुखद इति वचनात् । न तु मातृहा । एवं यदि सप्तमगृहे वा चतुर्थगृहेऽपि शुभरूपी भवेत्तदा सोऽर्भकः पितृसुखदः नतु पितृहा । एवमशुभश्चेत्तदा पितृदुःखदः पितृहा एव। अथ यदि प्रथमे १ षष्ठे६ वा शुभप्रवेशी भवेत्तदा गुर्विणीप्रसवयोर्द्वयोरपि मरणं क्लेशाधिक्यं वाच्यम् तथा प्रसवजननं काठिन्येन स्यात् परिणामे क्लेशः । कस्मात्। सोऽर्भको मातृदुःखदः । मातृहा इति वचनात् । यदि प्रथमगृहे शुभप्रवेशी तथा षष्ठगृहे ६ ऽशुभप्रवेशी भवेत्तदा मातृक्लेशो वर्त्तते । परंतु मरणं नास्ति । मातुः प्रसवस्य मरणं स्यात् । अथ यदि दैवचरित्राज्जीवेत्तदा कर्महीनो दरिद्रो भवेत्तथा तस्य शरीरे चैकं गुप्तलांछनं

वाच्यम् । अथ यदि प्रथमे षष्ठ ६ गृहे च शुभनिर्गमो भवेत्तदा गुर्विणीप्रसवयोः कुशलं वाच्यम् तथा प्रसवजननं सुखेन स्यात् परिणामे शुभम् । कस्मात् । सोऽर्भकोऽतीव मातृसुखद इति वचनात् । तथा तस्य समीपे सदा तिष्ठेत् । यद्यशुभनिर्गमो भवेत्तदा त्वेवं फलमित्येवं प्रसवजननं काठिन्येन परंतु परिणामे भव्यमपरफलं पूर्वोक्तं ब्रूयात् । अथ यद्युभयस्मिन्गृहे १, ६, शुभस्थितो भवेत्तदा प्रसवजनने मातृशरीरे कुशलत्वं वाच्यम् । परंतु बहुविलम्बेन स्थिरतया च प्रसवजननं स्यात् । परिणामे शुभम् । कस्मात् । सोऽर्भकः सुखद इति वचनात् । यद्यशुभस्थिरो भवेत्तदा गुर्विणीप्रसवयोरपि परिणामो वाच्यः । प्रसवजननसमय एव यदि तृतीय ३ पंचम ५ नवमै ९ कादश ११ गृहे लोहितो ⁝ भवेत्तथा वा कोऽप्यकोऽशुभरूपी लोहितसदृशप्रकृतिको भवेत्तदा प्रसवजननसमये द्वयोरपि मरणं भवेत् । यद्येतेषु गृहेषु ३, ५, ९, ११ शुभरूपी भवेत्तदा किमपि भयं नास्ति । नात्र संदेहः । अथ यदि प्रथमगृहे १ षष्ठे ६ च शुभद्विस्वभावरूपी भवेत्तदा गुर्विणीप्रसवयोः कुशलत्वं वाच्यम् तथा प्रसवजननं सुगमतया स्यात् परंतु प्रतिसमयमवस्थांतरं व्रजेत् परिणामे शुभम् । कदापि व्यथा काठिन्यरूपा कदापि स्वल्पतरा स्यादित्यर्थः । अथ यदि प्रथमे १ षष्ठे ६ वा शुभद्विस्वभावो भवेत्तथा तस्य साक्षीभूताऽशुभा एव यदि स्युस्तदा प्रसवजननसमये द्वयोरपि मरणं भवेत् । अथ यदि प्रथमे १ षष्ठे ६ वा शुभो भवेत्तदा तस्य साक्षिभूताः शुभा यदि स्युस्तदा प्रसवजननं विना कष्टेन सुगमतया स्यात् । यदि तयोर्मध्ये १, ६ शुभो भवेत्तस्य साक्षीभूताऽशुभा यदि स्युस्तदा प्रसवजननं महता कष्टेन काठिन्यतया वा स्यान्नात्र संदेहः । अथ यदि प्रश्नरमलेषु बहुतराः शुभरूपिणः स्युस्तदा प्रसवः सुखदो वाच्यः । एवमशुभा यदि स्युस्तदा सोऽर्भको दुःखद इत्यर्थः ।

पलायितजनोऽस्मिन्नेव नगरे वर्त्तते वा देशांतरे गत इति प्रश्न आह ।

तदा तेषु पंच ५ चतुर्थ ४ सप्त ७ ष्ट ८ एकादश ११ द्वादश १२ गृहेषु पश्येत् । यद्येतेषु गृहेषु प्रवेशिरूपिणो वा स्थिराः स्युस्तदा स पलायितजनोऽस्मिन्नेव नगरे वर्त्तते । यदि त एव केंद्रगृहे १, ४,-७, १० ष्वन्वादेशरूपं कुर्य्युस्तदा तु ध्रुवमेवम्।अथ यदि तेष गहेषु ४, ७, ८, ११ निर्गमा वा द्विस्वभावाः स्युस्तदा स पलायितजनो देशांतरं गतो यदि त एवापोक्लिमगृहे ३, ६, ११, १२ ष्वन्वादेश-रूपं कुर्य्युस्तदा तु ध्रुवमेवम्।नात्र सन्देहः।अथ यदि तेषु गृहेषु केऽपि प्रवेशिरूपिणः केऽपि निर्गमाः स्युस्तदाधिक्योपरि फलं ब्रूयात् । स्थिरस्तु प्रवेशिरूपस्तथा हि द्विस्वभावोऽपि निर्गमसदृशो नात्र संदेहः ॥ अथ तेषु गहेषु ५, ७, ८, ११, १२ येन रूपिणा निर्गम-रूपेण वा द्विस्वभावरूपेण पलायितजनस्य गमनं ज्ञातं स एव पलायितरूपी ज्ञेयः । अथ प्रयोजनमाह । पलायितजनः स्वेच्छया ऽऽगमिष्यति वा कोऽपि धृत्वा तमानयिष्यतीत्यत आह।तदा पला-यमानरूपिणं पश्येत् यदि स शुभो भवेत्तथा स एव वा शुभगृहेष्व-न्वादेशरूपं कुर्य्याद्यदि तदा कोऽप्यन्यस्तं धृत्वाऽऽनयिष्यतीति ब्रूयात् ॥ अथवा षष्ठगृहरूपी तथा द्वादशगृहरूपी वाऽनयोः ६, १२ स्वाम्यशुभगृहेष्वन्वादेशरूपं कुर्य्यात्तदा कोऽपि धृत्वाऽऽनयि-ष्यतीति वाच्यम् । अथ यदि तृतीयगहरूपी तथा नवमगृहरूपी वानयोः ३, ९, स्वाम्यशुभगृहेष्वन्वादेशरूपं कुर्य्यात्तदा मार्गमध्ये तं पलायितजनं कोऽपि धरिष्यति धृत्वा चानयिष्यति नात्र संदेहः । अथ यदि पलायमानरूपी शुभो भवेत्तथा तं प्रथमगृहरूपी मित्रत्व-दृष्ट्या यदि पश्येदथवा प्रथमगृहस्वामी मित्रत्वदृष्ट्या पश्येत्तदा स पलायमानजनः स्वेच्छयागमिष्यतीति वाच्यम् । अथवा स प-लायमानरूपी प्रथमगृहेऽन्वादेशेन मुसल्लसरूपो भवेत्तदापि स्वेच्छयाऽऽगमिष्यतीति ब्रूयात् । एवं सति यदि पलायमान-

रूपी केंद्रगृहे १, ४,७,१० ष्वन्वादेशरूपं कुर्य्यात्तदा स्वेच्छया झटित्येवागमिष्यति यदि पणफरगृहे २,५,८,११ ष्वन्वादेशरूपं कुर्य्यात्तदा किंचित्स्थिरतयाऽगमिष्यति। यदि आपोक्लिमगृहे ३,६,९,१२-ष्वन्वादेशरूपं कुर्य्यात्तदा बहुविलंबेनाऽऽगमिष्यतीति ब्रूयात्। नात्र संदेहः। अथ यदि पलायमानरूपिणं प्रथमगृहे रूपी वा प्रथमगृहस्वामी च न पश्येत्तदा षष्ठ ६ गृहे द्वादशगृहे १२ रूपिणौ वा तयोः ६, १२ स्वामिनौ पलायमानरूपिणं नो पश्यतोऽथवा दुष्टदृष्ट्या पश्येतामिमौ तथापोक्लिमगृहे ३,६,९,१२ ष्वन्वादेशरूपं कृत्वा पलायमानरूपी यदि तदा तु ध्रुवमेव कदापि नागमिष्यति पलायमानजनः। अथ यदि पलायमानरूपिणं प्रथम १ षष्ठ ६ द्वादश १२ गृहरूपिणोऽथवैतेषां स्वामिनश्चामित्रत्वदृष्ट्या पश्येयुस्तथा केन्द्रगृहेषु १,४,७,१० अन्वादेशरूपं कुर्य्यात्पलायमानरूपी तदा स्वयमेवागच्छेत्पलायमानजनः। परंतु यदि प्रथमगृहरूपी बलिष्ठः षष्ठ ६ द्वादश १२ गृहरूपी बलहीनस्तदैवं नो वाच्यं नात्र संदेहः।

अथ गोप्यांतरमाह।

तदा षष्ठ ६ गृहे चतुर्थ ४ गृहे च पश्येद्यद्युभयस्मिन् गृहे प्रवेशी भवेत्तदा पलायमानजनोऽस्मिन्नेव स्वनगरे वर्त्तते। यदि स शुभो भवेत्तदा स्वेच्छया झटित्येवागमिष्यति। यदि चेदशुभस्तदा किंचिद्विलंबनागामिष्यति। अथ यद्युभयस्मिन् गृहे ४,६ निर्गमो भवेत्तदा पलायमानजनः स्वदेशाद्देशान्तरं गतः शुभे स्वायत्त्येन स्वेच्छया च गतः। अशुभेऽस्वायत्त्येनानिच्छया च देशांतरं गतः। शुभे कदाचिदागमिष्यति। अशुभे कदापि नागमिष्यतीति ब्रूयात्। अथ यद्युभयस्मिन् गृहे४।६ स्थिरो भवेत्तदा पलायमानजनोऽस्मिन्नेव नगरे वर्त्तते। परंतु स्वायत्त्येन गुप्तोऽस्ति तत्रोद्विग्नचित्तः परिखेदितरूपो वर्त्तते। नात्र संदेहः। शुभे झटित्येवागमिष्यति।

अशुभश्चेत्तदा किंचित्स्थिरतयाऽऽगमिष्यति । अथ यद्युभयस्मिन्न गृहे ४,६ द्विस्वभावो भवेत्तदा निर्गमोक्तफलं ब्रूयात् । यदि चतुर्थे ४ षष्ठे ६ सौरिः रूपी भवेत्तदा पलायमानजनोऽस्मिन्नेव नगरे वर्त्तते परन्त्वंधकारस्थले गुप्तरूपो वर्त्तते तथात्वे केनापि पुरुषेण नष्टत्वमिति ब्रूयात् । अथ यद्युभयस्मिन्गृहे शीतांशुः स्तथा दैत्यार्चितः रूपी वा उष्णगुः रुपी भवेत्तदा पलायमानजनः स्वकार्य्यार्थं कस्यचिन्मित्रस्य समीपे गतो वर्त्तते यदा गमिष्यति तदा पुनरपि पलायमानो भविष्यति । नात्र सन्देहः । तथा च ग्रंथान्तरेप्युक्तम् ।

अथ यदि पृच्छेन्मम दासः पलायितस्तस्य धरणायैको जनः
प्रेषितो मया स तं धरिष्यति न वेत्यत आह ।

तदा सप्तम७गृहं पश्येद्यदि प्रवेशी स्थिरो भवेत्तदा न धरिष्यति । यदि निर्गमो वा द्विस्वभावो भवेत्तदा कदापि नो धरिष्यति । शुभे सुगमेन । अशुभे काठिन्येन नात्र सन्देहः ।

स एकाकी वर्तते वा ससहाय इत्यत आह ।

तदाऽष्टम ८ गृहे पश्येत् । यदि प्रवेशी स्थिरो भवेत्तदा तेन सार्धं कोऽपि द्वितीयो वर्त्तते यदि निर्गमाद्विस्वभावो भवेतां तदा तेन सार्द्धं द्वितीयः कोऽपि नास्तीति ब्रूयात् ।

पलायमानजनः कस्यां दिशि गतो वर्तत इत्यत आह ।

तदा प्रथमगृहरूपिणं चतुर्थगृहरूपिणा गुणयित्वैकं रूपिणमुत्पाद्य भिन्नं स्थापयेत् । एवं चतुर्थगृहरूपिणं दशमगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नं तृतीयं भिन्नं स्थापयेत् । तथैव दशमगृहरूपिणं पंचदशगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नं तृतीयं भिन्नं स्थापयेत् । पुनस्तथा सप्तमगृहरूपिणं षोडशगृहरूपिणा गुणयेत् । एवं चत्वारो रुपिण उत्पादनीयाः ॥ पश्चात्प्रथमाद्वितीयाभ्यामेकरूपिणमुत्पादयेत् । तथा तृतीयचतुर्थाभ्यामेकम् । अनयोरेकं रूपिणमुत्पाद-

येत् ।यदि स प्रश्नरमलेषु बलिष्ठस्थानेऽन्वादेशः समागतः स्यात्तदा तेनैव गृहेण वह्निमुखादिसंज्ञान्वितदिशं ब्रूयात् । यदि तस्यान्वादेशः प्रश्नरमलेषु बलहीनस्थाने भवेत्तदा तेनैव रूपिणा वह्निमुखप्रभृतिसंज्ञान्वितादिशं ब्रूयात् ॥ अथवा प्रश्नगृहात्सप्तमगृहरूपिणा वह्निमुखादिसंज्ञान्वितेन दिशं ब्रूयात् । नात्र सन्देहः ।

अथ पलायमान आगमिष्यति वा नेत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि षष्ठगृहस्वामी तथा । द्वादशगृहस्वामी केन्द्रगृहेषु १,४,७,१०, समागतः स्यात्तदा तस्येच्छाऽगमनोपरि वर्त्तते परंतु यदि प्रथमे दशमे भवेत्तदा तु झटित्येवागामिष्यति । शेषे ४,७ किंचित्स्थिरतया । अथ यदि पणफरगृहेषु २,५,८,११ समागतः स्यात्तदा मध्यमं फलं नात्यागमनोपरि नातिगमनोपरि तस्येच्छा वर्त्तते।यदि आपोक्लिम३,६,९,१२गृहेषु समागतःस्यात्तदा तु कदापि नागमिष्यतीति ब्रूयात्।अथ यदि वा तयोः६,१२ स्वामिनौ प्रथम गृहरूपी वा प्रथमगृहस्वामी नो पश्येत्तदन्वितः पश्येद्यदि दुष्टत्वदृष्ट्या तदा कदापि नागमिष्यतीति ब्रूयात्।नात्र संदेहः ।अथ यदि षष्ठा६ष्टम८द्वादश१२गृहेषु स्थिरप्रवेशिनौ भवेतां तदा प्रथमगृहसमीपेऽन्वादेशरूपो भवेद्वा प्रथमगृहे मुसल्लसरूपो वा चतुर्थगृहेऽन्वादेशरूपं कुर्य्याद्वा मुसल्लसरूपो भवेत्तदा पलायमानजनस्यागमनं भवेत्तथा नष्टवस्तुनः प्राप्तिः स्यात् । यदि शुभो भवेत्तदा स्वेच्छयाऽऽगच्छेत् । अशुभश्चेत्तदा कोऽपि धृत्वाऽऽनयेत । नात्र संदेहः।वेधादिबलहीनस्तदा तु धृत्वैव। अथ प्रकारांतरमाह।यदि चैकादश११चतुर्दश१४गृहयोरूपी प्रथमादिषु चतुर्षु गृहेषु १,२,३,४, मुसल्लसस्थाने च समागतः स्यात्तदा पलायमानजनः समागच्छेत् । यदि शुभप्रवेशी भवेत्तदा स्वेच्छया समागच्छेत् । यदाशुभप्रवेशी भवेत्तदा स्वेच्छया कोऽपि धृत्वाऽऽनयेत् । अथ यदि प्रष्टुः प्रश्नगृहात्सप्तमगृहरूपी प्रथमगृहेषु मुसल्लसरूपी वा चतुर्थगृहे यद्यागच्छेत्तदा

पलायमानजनः समागच्छेत् । यदि शुभप्रवेशी भवेत्तदा स्वेच्छया समागच्छेत । यद्यशुभप्रवेशी भवेत्तदा कोऽपि धृत्वाऽऽनयेत । नात्र संशयः । अथ यदि प्रष्टुः प्रश्नगृहात्सप्तमगृहरूपी निर्गमरूपो भवेत्स चा पोक्लिमगृहेषु ३,६,९, १२ आम्रेडितरूपो भवेदथवा तं प्रथमगृहस्वामी नो पश्येद्यदि च पश्येद्दुष्टत्वदृष्ट्या तदा पलायमानजनः कदापि नागच्छेद्यदि स्थिरो भवेत् प्रवेशिवत्फलं द्विस्वभावश्चेत्तदा निर्गमवत्फलं ब्रूयात्। सर्वत्रैष विधिः। नात्र संदेहः ।

अथ पलायितः स्वेच्छया गतो वा कोऽपि तं धृत्वा कुत्रापि गत इत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि भौमरूपी लोहित नामा स्वप्रकृतिरूपिणा सह प्रश्नरमलेषु वर्त्तमानो भवेत्तथा स्वप्रकृतिरूपिणः स्वस्य वान्वादेशो बलिष्ठः स्यात्तदा कोऽपि तं धृत्वा स्वायत्तं कृत्वा कुत्रापि गतः । अथवा तं लोहितं तथा तत्प्रकृतिसदृशं रूपिणं षष्ठे६ द्वादश १२ गृहे यो रूपी पश्येत्तदापि तदेव फलं ब्रूयादन्वादेशाभावे । अथ यदि लोहितस्तथा तत्प्रकृतिसदृशो रूपी प्रश्नरमलेषु नो याति तस्य तदा पलायमानजनः स्वेच्छया गतश्चेद्यदि शुभनिर्गमः षष्ठे ६ द्वादशे १२ भवेत्तदा तु स्वाहंकारेण स्वेच्छया बलेन च पलायमानजनो गतस्तत्र किमपि भयं नो स्थापयति । तथा तत्र सत्पात्रवृत्त्या तिष्ठति चेद्य द्यागच्छेत्तदा पुनरपि पलायमानो भवेत्।नात्र संदेहः । एवं च यातुः पदनष्टप्रश्नस्यापि फलं ब्रूयात्तदाह । यदि लोहितः स्वप्रकृतिसदृशरूपिभिः सह प्रश्नरमलेषु कुत्रापि नो पतितः स्यात्तदा चतुष्पदोऽपि स्वेच्छया गतः।अथ यदि लोहितः स्वप्रकृतिसदृशरूपिभिः सह प्रश्नरमलेषु वर्त्तमानो भवेत्तथा राहुकेत्वो रूपी स्वप्रसुसह्लसगृहे भूत्वा तं लोहितं पश्येत्तदा चतुष्पदं वैरी गृहीत्वा गतः । यदि षष्ठे६ द्वादश१२ गृहे शुभप्रवेशी स्थिरो भवेत्तदा कोऽपि बलेन चतुष्पदं गृहीत्वा गतः परंतु स वैरी नास्ति कोऽपि बृहन्मनुष्यो वर्त्तते तस्योपरि तेन कोऽपि भारो दत्तो वर्त्तते चतुष्पदं गृहीत्वा स

गतः । तस्य चतुष्पदस्य प्राप्तिः शीघ्रतया स्यादिति ब्रयात् । अथ यदि षष्ठे द्वादशे च १२ शुभनिर्गमो भवेत्तदा स चतुष्पदः स्वेच्छया गतः । तत्र बहुदिनानि तिष्ठेत् । बहुदिनोपरि कस्यचिद्धस्ते वा गच्छेद्यश्चौरो नो भवेत् । पश्चात्तस्य हस्तात्स्वहस्ते वागच्छेत् परंतु यदि साक्षिणः । समीचीना भवेयुस्तथा षष्ठ ६ द्वादश १२ गृहरूपिणोऽन्वादेशः केन्द्रगृहेषु १, ४, ७, १० वा पणफरगृहेषु १, २, ५, ८, ११, भवेत् । यदि साक्षीभूता निषिद्धतरा भवेयुस्तथा तस्यान्वादेश आपोक्लिमगृहेषु ३, ६, ९, १२, स्यात्तदा स्वहस्ते कदापि नागच्छेत् । अथ यद्युभयगृहे ६, १२, शुभद्विस्वभावो भवेत्तदा स चतुष्पदः स्वेच्छया गतस्तत्रदृढबंधनेन बद्धो नास्ति खलु मुक्तवद्वर्तते । यदि तस्यान्वादेशः शुभगृहेषु स्यात्साक्षीभूताश्च समीचीना भवेयुस्तदा स्वहस्ते चागत्य पुनरपि व्रजेत् । पलायित्वा तस्य हस्ते गच्छेद्यश्चौरो नो भवेन्नात्र संदेहः । अथ यद्युभयगृहे ६, १२ अशुभ द्विस्वभावो भवेत्तदा चौरेण हृत इति ब्रूयात्स चतुष्पदस्तस्य हस्ते गतो वर्त्तते यश्चौरकर्म्मप्रकृतिको जनः स चतुष्पदं गृहीत्वा दूरे गतः कदापि न दास्यति नात्र संदेहः । परंतु यदि तस्यान्वादेशः केन्द्रगृहेषु १, ४, ७, १० तथा पणफरगृहेषु २, ५, ८, ११ स्यात्तथा साक्षीभूता अपि समीचीना भवेयुस्तदा बहुदिनोपरि महता काठिन्येन स्वहस्ते वागच्छेत्।अथ यद्युभयगृहे ६, १२ ऽशुभनिर्गमो भवेत्तदा कोपि चौर्य्येण कृत्वा चतुष्पदं गहीत्वा कुत्रापि गतः स तं चतुष्पदं कदापि नानयिष्यति तस्य दुर्लभा प्राप्ति र्ध्रुवम् यदि तस्यान्वादेशो निकृष्टगृहेषु ३, ६, ९, १२ स्यात्तदा साक्षीभूता अतिनिकृष्टतरा भवेयुर्नात्र संदेहः । अथ यद्युभयगृहे ६ । १२ अशुभप्रवेशी तथा स्थिरो भवेत्तदा चौरेण हृतश्चतुष्पदः । परंतु दूरे नास्ति। अत्रैव केनापि

गुप्तत्वेन स्थापितो वर्त्तते तस्य प्राप्तिरतिदुर्लभा नात्र सन्देहः । अथ यदि प्रथमगृहे शुभो भवेत्तथा स एव शुभमन्वादेशरूपं कुर्य्यात्तद्वत्साक्षीभूता अपि समीचीना भवेयुस्तदा तस्य वृत्तांतप्राप्तिः । स्यात्परंतु तन्न प्राप्नुयात् । नात्र संदेहः ।

अथ चतुष्पदांगे चिह्नज्ञानमाह ।

तत्र लोहित स्य विचारांशः क्षतोपरि वर्त्तते । अथाररूपिणो विचारांशः भग्नपुच्छोपरि वा भग्नकर्णोपरि वर्त्तते । एवमेव तीक्ष्णांशु रूपिणो विचारांशो बोद्धव्यः । यदि चाररूपी प्रश्नरमलस्य पंचमगृहे ५ वा नवम ९ गृहे चैकादश ११ गृहेऽथवा द्वादश १२ गृहे समागतः स्यात्तदा ध्रुवमेव तच्चिह्नं चतुष्पदानां ब्रूयात् । अथ यदि सौरि लोहित पीत वक्रा र रूपिणां मध्ये चैकोऽपि प्रथमं समागतः स्यात्तदा स एव षष्ठगृहे ६ वा चैकादश ११ गृहेऽथवा द्वादशगृहे १२ ऽन्वादेशरूपं कुर्यात्तदा वक्ष्यमाणविचारांशेन चतुष्पदांगे चिह्नं ब्रूयात् । तदाह । तत्र सौरि रूपिणो विचारांश एव कचिह्नोपरि वर्त्तते वा गुह्यस्थानतले क्षतो भवेत् । अथ लोहितस्य विचारांशः क्षतोपरि वर्त्तते । अथ पातरूपि णो विचारांशो नूतनलांछनोपरि वर्त्तते । अथ वक्ररूपिणो विचारांशः प्रवीणलांछनोपरि वर्त्तते । अथार रूपिणो विचारांशः पुच्छभंगोपरि वर्त्तते । नात्र संदेहः।नान्यरूपिभिः शरीरे चिह्नं स्यादिति भावः।

अथ कतिपरिमितं चिह्नं वर्त्तत इत्यत आह ।

तदा पश्येत्षष्ठ ६ गृहरूपी कतिस्थलेष्वन्वादेशरूपो वर्त्तते । तावत्परिमितसंख्यं चिह्नं ब्रूयात् । एवं सर्वप्रकारो बहुसमीचीनो रहस्यतरः सर्वफलदो ज्ञेय इत्यर्थः । नात्र संदेहः ।

मम भेदः गुप्तत्वेन स्थास्यति न वेत्यत आह ।

तदा षष्ठ ६ गृहे पश्येत् । यदि प्रवेशी भवेद्वा स्थिरः स्यात्स एव प्रथमगृहेऽन्वादेशरूपं कुर्यात्तदा भेदो गुप्तत्वेन नो तिष्ठेत् ।

अथ यदि षष्ठगृहे निर्गमो भवेत् स एव प्रथमगृहेऽन्वादेशरूपं कुर्यात्तदा भेदे। गुप्तत्वेन तिष्ठेत्। एवं यदि द्विस्वभावो भवेत्तदा भेदः। प्रकटगुप्तत्वाभ्यां द्विविधत्वेन तिष्ठेत्। अत्र सर्वत्रैव शुभश्चेत्तदा समीचीनत्वेन गुप्तत्वं प्रकटत्वं ब्रूयात्। अशुभे सति निषिद्धत्वेन वा नात्र संदेहः।

अथ केचिद्रमलज्ञाः स्फुटतरेण वदंति तदाह।

यः प्रश्नरमलस्य षष्ठगृहे पश्येद्यदि स प्रवेशी वा स्थिरो भवेत्तदा भेदो गुप्तत्वेन तिष्ठेत्। शुभः स्वायत्त्येनाशुभोऽस्वायत्त्येन। अथ यदि निर्गमो वा द्विस्वभावो भवेत्तदा भेदः। प्रकटो भवेत्। शुभे समीचीनत्वेन स्वायत्तत्वेन च। अशुभे निषिद्धत्वेनाऽस्वायत्तत्वेन च। अत्र स्थिररूपिणां मध्ये लोहि ⁝ तस्य विचारांशो भेदोपरि वर्त्तत इति केचिद्वदंति।

अथ प्रकारांतरमाह।

रमलस्य षष्ठगृहे पश्येत्।यदि तत्र प्रवेशी भवेत्तथा प्रथमगृहेऽपि प्रवेशी स्यात्तदा भेदो गुप्तत्वेन तिष्ठेत्। यदि प्रथमगृहे प्रवेशी स्यात्तदा षष्ठगृहे निर्गमो भवेत्तदा प्रष्टुर्वांछितं गुप्तत्वेन तिष्ठेत्। यद्युभयस्मिन् गृहे १,६ निर्गमो भवेत्तदा भेदः। प्रकटः स्यात्। शुभे स्वायत्तत्वेन समीचीनत्वेन वाऽशुभेऽस्वायत्तत्वेन निषिद्धत्वेन वा अथ यदि तस्मिन् गृहे १, ६ शुभस्थिरो भवेत्तदा भेदो गुप्तत्वेन तिष्ठेदशुभश्चेत्तदा प्रकटः स्यात्। अत्र केश्चिद्वदंति ॥ भेदस्य वार्त्तां गुप्तत्वेन ब्रूयात्। गुप्तत्वेन शृणुयात्। परंतु सा प्रकटा भवेत्। अथ यद्युभयगृहे १, ६ द्विस्वभावो भवेत्तदा प्रकट गुप्तयोर्मध्ये द्विविधत्वं पतेत्। शुभे समीचीनोपरि विचारांशः। अशुभे निषिद्धत्वोपरि विचारांशो नात्र संदेहः। अथ ग्रंथांतरमाह। यदि षष्ठगृहे प्रवेशी वा स्थिरो वा मंदगो ⁝ रूपी भवेदथवा प्रथमगृहरूपिणि षष्ठगृहरूपिणा गुणिते य उत्पन्नः स्यात् स यदि प्रवेशी

वा स्थिरो वा मंदगो भवेत्तदा भेदः खलु गुप्तत्वेन तिष्ठेत् एवंविधनिर्गमो भवेत्तदा भेदः प्रकटः स्यात्।एवमेव द्विस्वभावे फलं ब्रूयात्। नात्र संदेहः।

अथ यदि कोऽपि पृच्छेत्कस्यापि दोषः कृतो वर्त्तते वा नेत्यत आह।

लोकभाषायां टोनेत्युच्यते। यदि षष्ठगृहे वाग्मि ⁞ रूपी वा सौरिरूपी ⁞ वा उष्णगु ⁞ र्वा कविरूपी ⁞ भवेत्तदा योगयुक्तिदोषो नास्ति यद्येतेभ्यः शेषरूपिणः स्युः षष्ठगृहे तदा योगयुक्तिरूपदोषो वर्त्तते ध्रुवम् यदि षष्ठगृहस्वामी उत्तमगृहेषु १, ४, ७, १०तथा मध्यमगृहेषु २, ५, ८, ११, समागतः स्यात्तदाऽसंशयं योगयुक्तिकृतदोषो वाच्यः। नात्र संदेहः

अथ योगयुक्तिकृतदोषो वर्त्तते वा नेत्यत आह।

तदा षष्ठगृहं पश्येत्। यदि तत्र शुभनिर्गमो भवेद्यथा इमे वाग्मी ⁞ दैत्यार्चितः ⁞ शीतांशुः ⁞ उष्णगु ⁞ श्चभवेयुस्तदा योगयुक्तिकृतदोष एव नास्त्यत एव स्वभावजं क्लेशं ब्रूयात्तं तु योगयुक्तिदोषजनितं कदापि न ब्रूयात्।योगयुक्तिपदे संदेहोत्पादनं मिथ्यारूपं ज्ञेयम्। अथ यदि षष्ठगृहेऽशुभनिर्गमो भवेद्यथा इमे वक्र ⁞ आर ⁞ मंदगा ⁞ स्तदा योगयुक्तिकृतदोषोऽस्ति कस्मात्। इमे रूपिणः षष्ठगृहस्वामिनः संति यदहं योगयुक्तीनां वक्तेति वचनात्। अत एव योगयुक्तिजनितं क्लेशं रोगिणः शरीरे ब्रूयात्। क्लेशभयोन्मत्ततांगव्यथादिकं वाच्यम्। परंतु परिणामे नेष्टत्वं किमपि नास्ति झटित्येव रोगान्मुच्यते रोगी अथ यदि षष्ठगहेऽशुभप्रवेशी भवेद्यथा इमौ लोहित ⁞ सौरी ⁞ तदा योगयुक्तिदोषकृतं वाच्यम्। महत्काठिन्यरूपम्। यदि बोधनो ⁞ वा विधु ⁞ र्वा सौम्य ⁞ रूपी भवेत्तदा योगयुक्तिदुष्टकृतं वर्त्तते परंतु काठिन्यरूपं नास्तीति ब्रूयात्। नात्र संदेहः।

अथ दासीदासचतुष्पदान्ग्रहीतुमिच्छामि तेषां गुणोऽवगुणश्च कीदृशो वर्त्तते इत्यत आह ।

यदि सौम्यो ☷ वा बोधनो ☷ मंदगरूपी भवेत्तथा षष्ठे ६ द्वादशे च पश्येत्तदा ग्राह्यदासी दासचतुष्पदा रोगग्रस्ता वर्त्तन्त इति ब्रूयात् । यदि सौरि ☷ रूपी भवेत्तदा ते त्वगुणान्विता अथवा कुप्रकृतिकाः संतीति ब्रूयात् ॥ यदि राहुकेतुरूपी भवेत्तदा ते दास्यादयः पलायनकर्मणि कुशलाः संतीति ब्रूयात् । यदि तयोर्मध्ये ६, १२ भौमस्य रूपी भवेत्तदा षष्ठ ६ द्वादश १२ गृहयोः स्वामिनौ प्रश्नरमलेषु बलहीनौ भवेतां तदा तेषां ग्रहणचिह्नोद्विग्नपरिखेदितानां भयं वाच्यम् ध्रुवं यदि तौ स्वामिनौ कनिष्ठगृहेषु ६, ९, १२ स्यातां तदा तेषां ग्रहणं प्रतिषेधकरणं समीचीनम् । ग्रहणं दोषः । अथ यदि षष्ठ ६ द्वादशे १२ शुभप्रवेशी भवेत्तदा तयोः ६, १२ स्वामिनौ उत्तमगृहेषु १, ४, ७, १० ॥ वा मध्यमगृहेषु २, ५, ८, ११, स्यातां तदा ते ग्राह्यदासीदासचतुष्पदाः नीरोगायुषो वाच्यास्तथा सुप्रकृतिका गुणज्ञाः सुशीलाः फलदाश्च वक्तव्याः । अशुभेऽशुभं फलं वाच्यं ध्रुवं यदि स्वामिनौ कनिष्ठगृहेषु ३, ६, ८,१२ स्यातामथवा यदि षष्ठद्वादशे वा शुभनिर्गमो भवेत्तदा ते दासादयः कठोरा अहंकारिणश्च वाच्यास्तथा प्रतिष्ठामर्य्यादया दर्पग्राहका मानिनः स्वस्वामिनं तृणवन्मन्यंते यथाऽसत्पात्रजना एवं स्वामिनो भवनस्था भवेयुः । ध्रुवं यदि स एव शुभनिर्गमः कनिष्ठगृहेष्व ३,६,८,१२ न्वादेशरूपं कुर्य्यात्तदा तु ग्रहणे सति पलायमाना भवेयुः । अथ यद्युत्तमगृहेषु १,४,७,१० शुभो भवेत्तथा साक्षीभूताः समीचीना भवेयुस्तदा नो पलायमानाः स्युर्नात्र संदेहः ।

अथ यदि कोऽपि पृच्छेदहं दासत्वधर्म्मान्मुक्तो भविष्यामि
वा न तथा मम मृत्युर्भविष्यति न वेत्यत आह ।

यदि षष्ठे ६ चैकादशे ११ शुभनिर्गमो भवेत्तदा षष्ठगृहस्वामी कनिष्ठगृहेषु ३,६,९,१२ समागतः स्यात्तदा दासत्वधर्म्मान्मुक्तो भविष्यतीति ब्रूयात् । ध्रुवं यदि प्रथमगृहस्वामी प्रश्नरमलेषु शुभावस्थितिको भवेत्तथा तत्प्रकृतिसदृशरूप्यापि।शुभावस्थितिकस्स्यात्तदा तु झटित्येव दासत्वधर्मान्मुक्तो भवेदिति भावः यदि प्रथमगृहस्वामी प्रश्नरमलेषु शुभावस्थितिकः भवेत्तथा तत्प्रकृतिसदृशरूपी वा स्यात्तदा कदापिं दासत्वधर्म्मान्मुक्तो नो भवेत्कोर्थस्तस्यैव निकटे दासत्वधर्म्मं प्राप्नुयात् । अथवा षष्ठगृहस्वामी प्रश्नरमलेषु निषिद्धावस्थितिको भवेत्तथा तत्प्रकृतिसदृशरूपी वा स्यात्तदा तस्मिन्नेव दासत्वधर्म्मे मृत्युं प्राप्नुयात्कोर्थः कदापि न मुक्तो भवेत् ॥ अथवा प्रथमगृहस्वामी वा षष्ठगृहस्वामी दशमगृहस्वामिना सार्द्धं प्रश्नरमलेषु संमिलितो भवेत्कोर्थो दशमगृहस्वामी रूपिणो द्वितीये समागतः स्यादथवा द्वावपि उत्तमादिगृहेष्वेकत्र समागतौ स्यातां तदा दासत्वधर्मान्मुक्तो नो भवेत् । यथा कथंचन मुक्तोऽपि स्यात्तदा पुनरपि स्वस्वामिनो हस्ते । समागच्छेत् नात्र संदेहः ।

अथ यदि कोपि पृच्छेन्मम स्थितिरस्य निकटे समीचीना वाऽन्यस्येत्यत आह ।

तदा दशम १० गृहे सप्तम ७ गृहे च पश्येत् । दशमगृहे प्रथमः स्वामिनस्तथा सप्तमगृहं द्वितीयस्वामिनो ज्ञेयम् यदि दशमगृहे शुभरूपी भवेत्तथा दशमगृहस्वामी प्रश्नरमलेषु शुभावस्थितिको भवेत्तदा यत्र तिष्ठति स एवं प्रथमस्वामी समीचीनो वाच्यः । यदि सप्तमगृहे शुभरूपी भवेत्तथा सप्तमगृहस्वामी प्रश्नरमलेषु शुभावस्थितिकः स्यात्तदा यत्र तिष्ठति तस्माद्द्वितीयः समीचीनो वाच्यः । उभयत्राप्यशुभे सति तथा स्वामिनि निषिद्धावस्थितिकाद्व्यत्ययफलं निषिद्ध-

रूपं ब्रूयात् ॥ यद्युभयत्रापि शुभो वाऽशुभस्तदा द्वावपि स्वामिनौ समानौ वक्तव्यौ ।

अथ यदि कोऽपि दासः पृच्छेन्मम स्वामी विक्रयं करिष्यति । वा मोक्षं करिष्यति यदि स्थापयेत्तर्हि सम्यक्प्रकारेण स्थापयिष्यति वा निषिद्धरीत्येत्यत आह ।

तदा षष्ठे ६ द्वादशे १२ गृहे च पश्येत् । यद्युभयस्मिन्गृहेऽशुभ प्रवेशी वा स्थिरो भवेत्तदा नो विक्रीणीयात् । तथा नो निष्कासयेत् । तदा स स्वायत्त्ये स्थापयेत्परंतु काठिन्यकष्टाभ्यां कस्मात् तेन दासेन सार्द्धं दुष्टत्वकुप्रकृतिहेतोः । अथ यदि शुभप्रवेशिकः । स्थिरो भवेत्तदा नो विक्रीणयात्तथा मोक्षं नो कारयेत् । परंतु सम्यक्प्रकारेण स्थापयेत् । किमर्थम् । तेन सार्द्धं परामर्शकरणाय तस्य गुणज्ञतया सहायदानेन मनसीप्सितत्वात्स्वामिनः । अथ यद्ययमस्मिन्गृहे ६, १२ अशुभद्विस्वभावो भवेत्तदा द्विविधत्वं भवेत्कदापि विक्रीणीयात् । कदापि कष्टं दापयेत् । कारणं किमित्यत आह । स दासः स्वास्वासने नो भवेद्वा तं दृष्ट्वा विमनस्को भवेदिति । यदि चेद्विक्रीणीयात्तर्हि पुनरपि तमेव क्रीणीयात् । स्वहस्ते वागच्छेत्तस्यागमनेन वस्तुना दीयमानत्वं भवेत् । अथ यदि शुभद्विस्वभावो भवेत्तदा द्विविधचित्तः स्यात्कदापि विक्रीयात्कदापि मोक्षं कारयेद्वा कदापि सम्यक्प्रकारेण स्थापयेत् । कारणं किमित्यत आह । तेन सार्द्धं प्रसन्नरूपो भवेत्तथा मित्रत्वं स्यात्तस्य गुणज्ञतया सहायपदेन वा स्वमनसि स्थितेषु । यदि तं विक्रीणीयात्तर्हि पुनरपि गृह्णीयात् । तस्यागमनेन वस्तूनां दीयमानत्वं नो भवेत् । अथ यदि शुभनिर्गमो भवेत्तदा तं दासं मुक्तं कारयेद्वा विक्रीणीयात् । केन कारणेनेत्यत आह । तं दृष्ट्वा मनस्युद्विग्नता वोत्पद्येत तस्य गर्ह्यत्वाच्छासने नो स्थितत्वाच्च अथ यद्युभयगृहेऽशुभनिर्गमो भवेत्तदा स दासं विक्रीणीयाद्वा स्वेच्छया दूरं कारयेदथवा कष्टं काठिन्यं दापयेत्

केन कारणेनेत्यत आह । तेन सार्द्धं विरोधो भवेद्वा तस्य पलायमानत्वादिति नात्र संदेहः ।

अथ मम दासीदासचतुष्पदानां प्राप्तिर्भविष्यति न वेत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि षष्ठ ६ द्वादश १२ गृहयोः स्वामिनौ प्रथमगृहं वा प्रथमगृहस्वामिनं पश्यतो मित्रत्वदृष्ट्या तदा दासीदासचतुष्पदानां प्राप्तिर्भविष्यतीति ब्रूयात् । तेषामागमनेन संतुष्टः सदा स्यात् । एवं मध्यमगृहेषु २, ५, ८, ११ कतिपयदिनोपरि कनिष्ठगृहेषु बहुविलंबेन तेषां प्राप्तिः स्यात् । अथ यदि तयोः ६, १२ स्वामिनौ प्रथमगृहे वा प्रथमगृहस्वामिनं दुष्टत्वदृष्ट्या पश्येतां तदा तेषां प्राप्तिर्भविष्यति परंतु तत्सकाशात्सुखं नो प्राप्नुयात् । तथा ग्राहकः परिश्रमाधिक्यं गृह्णीयात् । अथ द्वयोः ६, १२स्वामिनौ प्रथमगृहे वा प्रथमगृहस्वामिनं नो पश्यतस्तदा तु तेषां प्राप्तिः कदापि नो भविष्यति तस्य ग्राहकस्य भाग्य एव नास्ति तर्हि प्राप्तिः कुतः । यदि चेद्दैवचारित्रात्प्राप्तिः स्यात्तदा महता कष्टेन वस्तूनां क्षीयमाणत्वेन वा।तथा च ग्रंथांतरेप्युक्तम्। यदि रमलं दासीदासचतुष्पदानामवस्थाज्ञानार्थं वा क्रयविक्रयार्थं पातितं भवेत्तदा तस्य प्रश्नरमलस्य षष्ठगृहे पश्येद्यदि शुभरूपी भवेत्तथा स एव शुभगृहेष्वन्वादेशं कुर्य्यात्तदा दासादीनामवस्था समीचीना वाच्या । यदि स एव शुभरूप्यशुभगृहेष्वन्वादेशरूपं कुर्य्यात्तदा दासादीनामवस्थासामान्या वाच्या । अथ यदि षष्ठगृहेऽशुभरूपी भवेत्तदा तेषामवस्था निषिद्धतरा वाच्या । यदि स एव शुभगृहेष्वन्वादेशरूपं कुर्य्यात्तदा । तेषामवस्थाऽतीवनिषिद्धतरा वाच्या । यदि चेच्छुभगृहेष्वन्वादेशरूपं कुर्य्यात्तदा तेषामवस्था बहुनिषिद्धतरा वाच्या । अथ यदि केचिद्वदंति यदि हिंदूकदेशीयदासार्थं वा कृष्णवर्णदेशीयदासार्थं रमलं पातितं भवेत्तदा षष्ठगृहे पश्येत् । यदि तत्र मंदगो =

भवेद्वा सौरिः ⁝ स्यात्तदा तेषामवस्था समीचीना वाच्या । कस्मात् । द्वावेतौ तेषामेव विचारांशरूपाविति वचनात् । नात्र संदेहः । एवं लोहितः ⁝ षष्ठगृहे चेत्तदा तुरकदेशीयदासार्थं समीचीनं वर्त्तते ।

अथ दासादीनां देशज्ञानार्थं रूपिणां विचारांशमाह ।

तत्रादौ सौरि ⁝ रूपिणो विचारांशः हबूशदेशीयदासोपरि वा जंगमदेशीयोपरि वर्त्तते । अथ मंदगस्य विचारांशो हिंदूकदेशीयोपरि वर्त्तते । अथ लोहितस्य ⁝ विचारांशः तुरुकदेशीयोपरि भाषितादेशीयोपरि वर्त्तते । अथारस्य ⁝ विचार आलानदेशीयोपरि वर्त्तते याकीफदेशीयोपरि वा । अथ दैत्यार्चितस्य ⁝ विचारांशो रूमदेशीयोपरि वा अरमनदेशीयोपरि तथा गुर्जरदेशीयोपरि वर्त्तते । अथ विधु ⁝ रूपिणो विचारांश एतादृशजनोपरि यः पारंपर्य्यदासादिषु नास्ति तेषां दासत्वधर्मप्राप्तिस्तु बलात्काराल्लुंठनाच्च देशभ्रष्टे सति । अथ यद्येतेषां रूपिणां मध्ये यद्येकोऽपि षष्ठगृहे समागतः स्यात्तदायं दासस्तद्रूपिविचारांशोक्तो भवेत्तदा समीचीनं वर्त्तते नान्यथा । एभ्यः शेषरूपिषु शेषदेशं ब्रूयात् ।

अथ दासं क्रेतुमिच्छामि स कीदृग्भविष्यतीत्यत आह ।

तदा प्रश्नरमलस्य प्रथमादिचतुर्षु १, २, ३, ४ तथा षष्ठे ६ च पश्येत् । यद्येतेषु गृहेषु शुभरूपिणः स्युस्तदा तं दासं क्रीणीयात्स सत्फलदः स्यात्तस्य ग्रहणे किंचिदपि परिखेदत्वं नास्ति शुभं वर्त्तते। यदि ते रूपिणः शुभगृहेष्वन्वादेशं कुर्युस्तदा तस्य दासस्य ग्रहणं बहुसमीचीनं वर्त्तते अत एव ग्रहीतव्यम् । यदि त एवाशुभगृहेष्वन्वादेशरूपं कुर्य्युस्तदा बहुसमीचीनं नास्ति सामान्यमस्ति । अथ परेषु गृहेषु १, २, ३, ४, ६ शुभरूपिणः स्युस्तदा तं दासं नो गृह्णीयात्।कुतोऽशुभफलदो भविष्यतीति वचनात् । यदि त एवाशुभगृहेष्वन्वादेशरूपं कुर्य्युस्तदा तस्य दासस्य ग्रहणमेव बहुनिषिद्धतरं वर्त्तते । अत एव तं कदापिं नो गृह्णीयात् । यदि त एव शुभगृहेष्वन्वादेशरूपं कुर्य्यु-

स्तदा किंचित्समीचीनं वर्त्तते। अथ यदि प्रथमे १ त्रयोदशे १३ च शुभरूपी भवेत्तथा षष्ठगृहेऽशुभः समागतः स्यात्तदा दासो धूर्त्तो वर्त्तते परंतु तस्य ग्रहणार्थं प्रष्टा बहुलाभं स्थापयिष्यति यदि षष्ठ-गृहे शुभरूपी भवेत्तदा तस्य ग्रहणे किंचित्क्षीयमाणं नो स्यात्। अथ यदि प्रथमे १ त्रयोदशे १३ च शुभरूपी भवेत्तथा षष्ठेऽपि शुभरूपी समागतः स्यात्तदा दासः समीचीनो भविष्यति। तथापि विश्वासयोग्यः स्यात् परंतु प्रष्टा तं दासं प्रीत्या नो स्थापयिष्यति। दासप्रष्ट्रोर्म्मध्ये विरुद्धता सदैव स्यात्। अथ यदि षष्ठगृहे शुभनिर्ग-मो भवेत्तदा तं दासं यस्मिन्गृहे चानयेत्तत्र नो तिष्ठेत्। स दासः उद्विग्नचित्तपरिखेदितरूपः सदैव स्यात्। अथ यदि षष्ठे ६ शुभ-निर्गमः समागतः स्यात्तदा तस्माद्गृहात्स दासः पलायमानो भवेत्। अथ यदि षष्ठगृहे शुभप्रवेशी भवेत्तदा तस्मिन्गृहे प्रसन्नमनसा तिष्ठेत्। अशुभश्चेत्तदा किंचिदप्रसन्नमनसा तिष्ठेत्। अथ यदि द्विस्वभावो भवेत्तदा निर्गमवत्फलं ब्रूयात्। तथा स्थिरः समागतः स्यात्तदा तत्र प्रवेशिनः फलं ब्रूयान्नात्र संदेहः।

अथ यदि कश्चिद्दासस्य विक्रयार्थं पृच्छेत्तत आह।

तदा प्रश्नरमलस्य द्वितीय २ तृतीय ३ गृहे पश्येत्। यद्युभय-गृहे शुभो भवेत्तदा तस्य दासस्य विक्रये द्रव्याणां हानिर्नो भवेत्। यदि तु फलप्राप्तिः स्यात्तदा तस्य विक्रये परिखेदश्चित्ते परिश्रमेण च तस्य विक्रयः स्यात्। श्रमान्वितश्च नो भवेत्। लाभसहितेन विना परिश्रमेण तस्य विक्रयः स्यात्। यदि द्वितीय गृहेऽशुभः स्यात्तदा द्रव्याणां क्षीयमाणत्वं स्यात्तस्य विक्रये। यदि तृतीयगृहेऽ शुभः स्यात्तदा तस्य विक्रये परिखेदितचित्तः परिश्रमान्वितः स्यात्। अत्रावश्यं तयोः शुभाशुभगृहेष्वन्वादेशरूपं विलोकयेत्। तादृक्फलं ब्रूयात्। तदा प्रश्नस्तथ्यतां याति नात्र संदेहः।

अथ ग्रन्थांतरमाह ।

यदि कोऽपि दासीदासचतुष्पदानामवस्थाज्ञानार्थं पृच्छेत्तदाऽशुभ-शुभरूपिभिः षष्ठ ६ द्वादश १२ गृहाभ्यां तेषामवस्थारूपं ब्रूयात् । अत्र च बहु समीचीनमिदं वर्त्तते । षष्ठ ६ गृहरूपिणा द्वादशगृह १२ रूपिणं गुणयेत्ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा फलं ब्रूयात् । प्रवेशिना वर्धमानरूपं फलं निर्गमेण क्षीयमाणफलं स्थिरेण स्थिरत्वं च द्विस्वभावेन द्विस्वभावत्वं शुभे सुगममार्गेण । अशुभे काठिन्येनेति । नात्र संदेहः ।

पलायितजनं कोऽपि धरिष्यति धृत्वा च दास्यति वा नेत्यत आह ।

तदा षष्ठ ६ द्वादश १२ गृहरूपिणाभ्युत्पन्नरूपिणं पश्येत् । यदि प्रवेशी भवेत्तदा कोऽपि धरिष्यति धृत्वा दास्यति । यदि स निर्गमो भवेत्तदा कोऽपि नो धरिष्यति चेद्धृतः स्यात्तर्हि नो दद्यात् । यदि स स्थिरो भवेत्तदा स्थिरतया धृतः स्यात्तथा स्थिरतया दद्यात् । यदि स द्विस्वभावो भवेत्तदा तस्य धरणे प्राप्तौ द्विविधत्वं फले ब्रूयात् । नात्र संदेहः ।

अथ यदि ज्ञातुमिच्छेत्स दासः कस्य देशस्य ज्ञातिरित्यत आह ।

तदा षष्ठ ६ गृहरूपिणं द्वादश १२ गृहरूपिणा गुणयेत्ताभ्यामुत्पन्नरूपिणं पश्येद्यदि स सौरि रूपी भवेत्तदा स दासो बहुसुदेशीयो वा जंगमदेशीयो वाच्यः । यदि स मंदगो भवेत्तदा दासो हिंदूकदेशीयो वाच्यः । यदि स लोहितो भवेत्तदा स दासः षिता-देशीयो वाच्यः वा तुरुकदेशीयो वाच्यः । यदि स आरो भवेत्तदा स दासः किफजानदेशीयो वाच्यः यदि स दैत्यार्चितो भवेत्तदा दास अमननदेशीयो वा रूमदेशीयो वा गुर्जरदेशीयो वा वाच्यः । यद्येतेभ्यः शेषरूपिणः स्युस्तदा प्रागुक्तदेशसंभवा नो स्युरपि त्वन्य-देशसंभवा वक्तव्या नात्र संदेहः ।

इति श्रीभयभंजनशर्मकृतौ रमलरहस्ये सारसंग्रहे षष्ठगृहस्य प्रश्नकथनन्नाम षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः ।

अस्मिन्सप्तमाध्याये सप्तमगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादौ सप्तमगृहप्रश्नस्य विचारांशमाह । स याच्यमानवस्तुनो विचारः स्त्रीणां विचारः विवाहकरणस्य संगतपुरुषस्य लोकभाषायाम् सभाया विचारः कोर्थः सार्थात्प्रवासिनो विचारः । भूकटकस्य प्रतिज्ञायाः शत्रूणां विचारः । यस्मात्पुरुषान्मनसि भयमुत्पद्यते तेन सार्वभूकटकस्य विचारः । हठकर्मणो विचारः । केनापि पुरुषेण सह युद्ध ( दावा ) करणस्य विचारः । साक्षीभूतपुरुषस्य मध्यस्थपुरुषस्य विचारः । पितामहस्य विचारः । मातुर्विचारः । रक्तनीलादिवर्णानां विचारः । स्वगृहोपस्थितानां विचारः । चौराणां विचारः पलायमानस्य स्थापितवस्तुव्ययकर्त्तुर्विचारः । चौरादीनां स्वरूपस्य विचारः । प्रवासिनो वृत्तांतस्य नियमस्य विचारः । ऋणग्राहकस्य सर्ववस्तूनां सिद्धांतं प्रथमतः सप्तमगृहे पश्चात्प्रथमगृहे विचारयेत् । इत्यादिविचारं सप्तमगृहे विचारयेत ।

अथ कोऽपि पृच्छेद्यदि स्त्रीणामवस्था कीदृशी वर्त्तत इत्यत आह ।

तदा सप्तमगृहं पश्येत् । यदि शुभरूपी भवेत्तदा स्त्रीणामवस्थासमीचीना सुखान्विता वाच्या । यद्यशुभरूपी भवेत्तदा स्त्रीणामवस्था निषिद्धतरा वाच्या ।

अथ यदि कोऽपि पृच्छेत्स्त्रियः स्वमध्ये मित्रत्वरूपा वा दुष्टत्वरूपाः संतीत्यत आह ।

तदा सप्तमगृहं पश्येत् । यदि शुभप्रवेशी भवत्तदा ताः स्त्रियः स्वमध्ये मित्रत्वरूपाः संति परंतु स्वायत्तत्वेन । अथ यदि शुभनिर्गमो भवेत्तदा ताः स्त्रियः स्वमध्ये दुष्टत्वरूपाः संति परंतु स्वायत्तत्वेन यद्यशुभो निर्गमो भवेत्तदा ताः स्त्रियः स्वमध्ये दुष्टत्वरूपाः संति परंतु स्वायत्तत्वेन । अथ

यदि द्विस्वभावो भवेत्तदा ताः स्त्रियः स्वमध्ये प्रतिसमयं प्रत्येकप्रकारेण तिष्ठेयुः कदापि ताः स्त्रियः स्वायत्तत्वेन स्वमध्ये विग्रहं कुर्युः। पुनरपि स्वेच्छया स्वायत्तत्वेन स्वमध्ये कदापि संमेलनं कुर्य्युरिति। यद्यशुभद्विस्वभावो भवेत्तदा ताः स्त्रियः स्वमध्ये द्विविधत्वरूपाः संति कोऽर्थ एकस्मिन्समये स्वमध्ये संमेलने तिष्ठेयुः परंतु स्वायत्तत्वेन काठिन्येन च पुनरपि स्वमध्ये पृथग्रूपाः स्युः। परंतु तिरस्कारकरणे शक्ता नो भवेयुः। अथ यदि शुभस्थिरो भवेत्तदा ताः स्त्रियः स्वमध्ये सदैवैकावस्थायां मित्रत्वरूपायां तिष्ठेयुः। यद्यशुभस्थिरो भवेत्तदा ताः स्त्रियः स्वमध्ये विग्रहं कुर्य्युः। परंतु स्वायत्तत्वेन एवमेव फलं स्त्रीपुंसयोर्मध्ये मित्रत्वरूपं दुष्टत्वरूपं च ब्रूयान्नात्र संदेहः।

अथ यदि कोऽपि पृच्छेत्सा कन्याऽभग्ना वर्त्तते वा केनापि भग्ना कृतेत्यत आह।

तदा प्रश्नरमलस्य सप्तमगृहे पश्येत्। यदि चारः ⠃ रूपी भवेत्तथाऽष्टम ८ गृहे ⠃ विधुः समागतः स्यात्तदा सा कन्याऽभग्ना वर्त्तते। कस्मात्। ताभ्यामुत्पन्नो मंदगो ⠃ भवेत्तस्य विचारो भग्नत्वोपरीति वचनात्। यदि सप्तमे दैत्यार्चितो ⠃ भवेत्तथाऽष्टम ८ गृहे लोहितः ⠃ समागतः स्यात्तदा प्रागुक्तमेव कन्याया भग्नत्वं ब्रूयात्। अथ यदि ताभ्यामुत्पन्नो निर्गमो भवेत्तदा सा कन्या केनापि पुरुषेण भग्नीकृता। इति शुभे कन्याया स्वेच्छया स्वायत्तत्वेन च। अशुभे कन्याया अनिच्छयाऽस्वायत्तत्वेन केनापि योनिभंगः कृत इति। अथ यदि ताभ्यामुत्पन्नः प्रवेशी भवेत्तदा, आभ्यामपि मन्दग उत्पन्न इति वचनादेवं सप्ताष्टमगृहेष्वाभ्यां रूपी मंदग उत्पन्नो भवेत्सा कन्या निर्भग्ना वर्त्तते कोऽर्थः केनापि तस्या भग्नं न कृतम्। अथ यदि ताभ्यामुत्पन्नः स्थिरो भवेत्तदा प्रवेशिन उत्तरफलं ब्रूयात्। नात्र सन्देहः।

अथ यदि कोऽपि ज्ञातुमिच्छेत्प्रष्टुर्मनोभिलाषस्तयोर्म्मध्ये कस्य पक्षान्मित्रत्वं कस्य पक्षाद्दुष्टत्वं वर्त्तत इत्यत आह ।

तत्रादौ प्रथमगृहं १ त्रयोदश १३ गृहं च प्रष्टुः पक्षस्य ज्ञेयम् । तथा सप्तमगृहं ७ चतुर्दशगृहं १४ च मनोऽभिलषितपक्षस्य ज्ञातव्यम् । अनयोः प्रयोजनमाह । यदि प्रथमे त्रयोदशे चाशुभनिर्गमो भवेत्तथा । सप्तमे ७ चतुर्दशे १४ च शुभनिर्गमो भवेत्तदा मनोऽभिलषितपक्षान्मित्रत्वं स्यात् । प्रष्टृपक्षाद्दुष्टत्वं स्यादिति वचनात् अथ यदि प्रथमे १ त्रयोदशे १३ च शुभनिर्गमो भवेत्तथा सप्तमे ७ चतुर्दशे १४ ऽशुभनिर्गमो भवेत्तदा पृच्छकपक्षान्मित्रत्वं मनोऽभिलषितपक्षाद्दुष्टत्वं स्यादिति । अथ यदि प्रथम १ त्रयोदश १३ योस्तथा सप्तम ७ चतुर्दश १४ योर्मध्ये च शुभनिर्गमो भवेत्तदा पक्षद्वयान्मित्रत्वं स्यादिति । अथ यद्युभयस्मिन्मध्येऽशुभनिर्गमो भवेत्तदा द्वयोः पृच्छकमनोऽभिलषितयोः पक्षाद्दुष्टत्वं स्यादिति मित्रत्वमिति श्रेष्ठत्वं दुष्टत्वमिति नष्टत्वम् । परा प्रीतिः प्रतिज्ञाया यदि दुष्टत्वविचारांशरूपी भवेत्तदा तु ध्रुवमेव दुष्टत्वं स्यात् । एवं मित्रत्वविचारांशरूपिणा ध्रुवं मित्रत्वं स्यादिति प्रकारं सर्वत्रैव विचारयेत् । तदा प्रश्नस्तथ्यतां यायात् । अथ यदि दुष्टत्वविचारांशरूपी पंचदशे १५ षोडशे १६ समागतः स्यात्तदा तयोः पृच्छकमनोऽभिलषितयोर्म्मध्ये मित्रत्वं केनापि पुरुषेण मध्यस्थेन स्याद्यो विचित्रवचनवक्ता जनः । अथ यद्युभयोः पक्षयोर्म्मध्य एकस्मिन्पक्षेऽशुभप्रवेशी भवेत्तथा द्वितीयपक्षे शुभनिर्गमो भवेत्तदा यत्र शुभस्तस्मात्पक्षान्मित्रत्वं वाच्यम् । अथ यद्येकस्मिन्पक्षेऽशुभनिर्गमस्तथा द्वितीयपक्षेऽशुभप्रवेशी भवेत्तदा-यत्राशुभप्रवेशी तस्मात्पक्षान्मित्रत्वं स्यादिति वाच्यम् । परंतु स्वामित्वेन । अथ यद्येकस्मिन्पक्षेऽशुभस्थिरो भवेत्तथा द्वितीयपक्षे शुभद्विस्वभावो भवेत्तदा यत्र शुभद्विस्वभावस्तस्मात्पक्षान्मित्रत्वं

स्यात् । अथ यद्येकस्मिञ्छुभद्विस्वभावस्तथा द्वितीयपक्षेऽशुभस्थिरो भवेत्तदा यत्र शुभस्थिरस्तस्मात्पक्षान्मित्रत्वं स्यादिति ब्रूयात् । वस्तुतस्तु यस्मिन्पक्षे शुभो भवेत् तस्मात्पक्षान्मित्रत्वं स्यात् । तथा यस्मिन्पक्षेऽशुभो भवेत्तस्मात्पक्षाद्दुष्टत्वं स्यादिति वाच्यं नात्र संदेहः । प्रच्छकमनोऽभिलषितयोर्मध्ये पक्षौ पूर्वोक्तौ मया ।

अथ कस्य पक्षान्मित्रत्वाधिक्यं वर्त्तत इत्यत आह ।

तदा प्रथमगृहे सप्तमगृहे च पश्येत् प्रथमगृहं पृच्छकपक्षे ज्ञेयम् । तथा सप्तमगृहं मनोऽभिलषितस्य पक्षे ज्ञेयम् ।ःयत्र शुभो भवेत्समित्रत्वं नो वाञ्छतीति।यत्राशुभो भवेत् स मित्रत्वाधिक्यं स्थापयाति तस्य पक्षे मित्रत्वाधिक्यं वाच्यम् । यदि स एव तृतीय ३ पंचम ५ नवमै-९ कादश ११ गृहेष्वन्वादेशरूपं कारयेत्तदा मित्रत्वाधिक्यं वाच्यम् । शेषगृहेष्वन्वादेशोऽस्ति मित्रत्वं नो स्यादिति । यत्र शुभस्तस्मात्पक्षान्मित्रत्वाधिक्यं वाच्यम् । यत्राशुभो भवेत्तस्मात्पक्षान्मित्रत्वाभावो वाच्यः । नात्र संदेहः ।

अथ ग्रन्थांतरे स्त्रियाः साटिकस्य प्रवासिनश्च प्रश्न आह ।

तदा सप्तमगृहे पश्येद्यदि प्रवेशी भवेद्यथा इमे [रमल आकृतियाँ] तदा स्त्रीकरणं समीचीनं वर्त्तते।यद्यपि सौरी [रमल आकृति] रूपी दूरवाचकोऽस्ति तथापि विवाहः स्यात्सा स्त्री तिष्ठेदिति।तथा साटीकरणमपि समीचीनं वर्त्तते तत्करणेन सुखं प्राप्नुयात् । तद्वत्प्रवासी विदेशे यस्मिन् स्थले तिष्ठेत्ततः कुत्रापि व्रजेत् । अथ यदि सप्तमो निर्गमो भवेद्यथेमे [रमल आकृतियाँ] तदा विवाहो नो स्यात्तस्याः स्त्रियोऽवस्था निषिद्धतरा वाच्या यदि वक्ररूपी [रमल आकृति] भवेत्तदा तु विवाहादौ निषिद्धकरणं समीचीनं कृते दोषः क्लेशाधिक्यं प्राप्नुयात् । तथा साटीकरणं बहुनिषिद्धतरं वर्त्तते किंचिदपि फलं नो प्राप्नुयात् । यदि चेत्कारयेत्तदा शीघ्रतया पृथग्भावः स्यात् । द्वयोर्मध्ये केनापि कारणेन विग्रहो भवेत् । तद्वत्प्रवासी देशांतरे यस्मिन्स्थले तिष्ठति ततः प्रचलेदथ यदि सप्तमे स्थिरो

भवेद्यथेमे तदा स्त्रिया अवस्था शुभा तेषां मध्ये बोधनो बलिष्ठो वाच्यः। परंतु पाणिग्रहणं स्थिरतया भवेत्। विवाहे प्रश्नो बहुसमीचीनो वर्त्तते । तथा ऋणसाटी मध्यमौ वच्यौ । तद्वत् प्रवासी विदेशे स्वस्थले तिष्ठति परंतु स्वामित्वेन अथ यदि द्विस्वभाव इमे । तदा स्त्रीप्रश्ने विवाहः स्यात् परंतु सा स्त्री नो तिष्ठेत् यदि तेष्वारो भवेत्तदा विवाहे निषिद्धे कारणं समीचीनं स्त्रीकरणे दोषः । यदि तेषु मंदगो भवेत्तदा विवाहः स्यात्कृते तस्मिन्सा स्त्री तिष्ठेत् । तथा साटीकरणं मध्यमं वाच्यम् । तद्वत्प्रवासी परदेशस्थले परिखेदतोद्विग्नमनसा तिष्ठति नात्र संदेहः ।

अथ सा स्त्री कीदृशी वर्त्तत इति प्रश्न आह ।

तदा सप्तमगृहे पश्येत् । यदि सूरि र्वा दैत्यार्चितः मंदगो लोहित रूपी भवेत्तदा सा स्त्री तरुणी वर्त्तते । यदि वाग्मी वा उष्णगु रूपी भवेत्तदा सा स्त्री वृद्धा वर्त्तते । यदि वक्रो वा पातो वा सौरी रूपी भवेत्तदा सा स्त्री कुरूपा हीनलक्षणा वर्त्तते यदि सूरिर्वा तीक्ष्णांशुः कविः विधुः बोधनः सौम्यः रूपी भवेत्तदा सा स्त्री अभ्यंतरस्था निर्भग्ना वर्त्तते । केनापि भग्ना नो कृता[1] यदि शीतांशुः दैत्यार्चितः आरो मंदगो रूपी भवेत्तदा सा स्त्री वारयोषित् परंत्वभग्ना वर्त्तते । नात्र संदेहः ।

प्रकारान्तरेण सा स्त्री तरुणी वा वृद्धेति प्रश्न आह ।

तदा सप्तमगृहे पश्येत् । यदि दैत्यार्चितः कविः लोहितो विधुः रूपी भवेत्तदा सा स्त्री तरुणी वर्त्तते । यदि सूरी रूपी भवेत्तदा तदेव फलं वाच्यम्। अथ यदि वक्रः पातः सौरी रूपी भवेत्तदा सा स्त्री वृद्धा वर्त्तते । शेषरूपिषु स्थविरा वाच्या । यदि सप्तमगृहे शुभप्रवेशी भवेत्तदा सा स्त्री निर्भग्ना वाच्या शेषरूपिभिर्भग्ना तस्याः स्त्रिया रूपलक्षणादिकं स्वरूपैर्ब्रूयात् ।

१ वेश्येत्यर्थः ।

पुनश्चास्मिन्नेव प्रश्ने सप्तमगृहे पश्येद्यदि मंदगो ⁝ वा शुभप्रवेशी वा शुभस्थिरो भवेत्तदा सा स्त्री तरुणी वर्त्तते तथा निर्भग्ना वर्त्तते। यदि लोहितः ⁝ वा दैत्यार्चितो ⁝ भवेत्तदापि तदेव फलं वाच्यम्। अथैषां विचारः यदि चाशुभप्रवेशी वाऽशुभस्थिरो भवेत्तदा सा स्त्री तरुणी वर्त्तते। परंतु निर्भग्ना नास्ति। अथ यदि निर्गमो भवेद्यथा इमे ⁝ ⁝ ⁝ ⁝ तदा सा स्त्री वृद्धा केनापि भग्ना कृता वाच्या। अथ यदि आरो ⁝ वा शीतांशुः ⁝ भवेत्तदा सा स्त्री स्थविरा वाच्या। नात्र संदेहः। अथ प्रकारांतरमाह।

अथैषा स्त्री तरुणी वर्त्तते वा वृद्धा तथा सुंदरी वा कुरूपेत्यत आह।

तदा प्रश्नरमलेषु पश्येत्। यदि सप्तमगृहे आर ⁝ रूपी भवेत्तथाऽष्टमगृहे विधुः ⁝ समागतः स्यात्तदा सा स्त्री तरुणी तथा सुंदरी निर्भग्ना वाच्या। यदि सप्तमगृहे दैत्यार्चित ⁝ स्तथाष्टमगृहे लोहितः ⁝ समागतः स्यात्तदापि तदेव फलं ब्रूयात्। अथ यदि सप्तमगृहे शुभनिर्गमो भवेत्तथेमौ ⁝ ⁝ तदा स्त्री सुंदरी वर्त्तते तथा तस्या जीवनवृत्तिः समीचीनाऽस्ति परंतु निर्भग्ना नास्ति। यदि सप्तमगृहेऽशुभनिर्गमो भवेद्यथेमौ ⁝ ⁝ तदा सा स्त्री कुप्रकृतिका कठोरवचना तथा कुरूपा निषिद्धजीवनवृत्तिका वाच्या परंतु निर्भग्नापि नास्ति। यदि सप्तमगृहे सूरिर्वा ⁝ तीक्ष्णांशु ⁝ र्वा कवी ⁝ रूपी भवेत्तदा सा स्त्री सुंदरी निर्भग्ना तथा यदि सौरी रूपी भवेत्तदा ⁝ सा स्त्री निर्भग्ना वर्त्तते परंतु सुंदरी नास्ति। तथा शुभजीवनवृत्तिका वाच्या सुप्रकृतिका नास्ति। अथ यदि सप्तमगृहेऽष्टमे च शुभः समागतः स्यात्तदा सा स्त्री सुंदरी तथा सुप्रकृतिका वाच्या। अशुभश्चेत्तदा कुरूपा कुप्रकृतिका च वक्तव्या नात्र संदेहः।

अथ स्त्रिया सह संमेलनं भविष्यति वा विरोध इत्यत आह।

तदा प्रथमगृहरूपिणं सप्तमगृहरूपिणा गुणयेत्। ताभ्यामुत्पन्नरूपिणं प्रश्नरमलेषु पश्येत्। यदि शुभगृहेषु समागतः स्यात्तदा

स्त्रिया सह संमेलनं मित्रत्वं भविष्यतीति ब्रूयात् । यद्यशुभगृहेषु समागतः स्यात्तदा तया सह विरोधो वाच्यः । अथ यदि स रूपी प्रश्नरमलेषु कुत्रापि नो समागतः स्यात्तदा तमेव रूपिणं पश्येत् । यदि स शुभप्रवेशी वा शुभस्थिरो भवेत्तदा तया सह मेलनं तथा मित्रत्वं स्थिरत्वं स्थितरूपं भविष्यतीति ब्रूयात् । परंतु सुगममार्गेण । अशुभश्चेत्तदा संमेलनादिकं सर्वं काठिन्येन स्यादिति वाच्यम् । अथ यदि निर्गमो वा द्विस्वभावो भवेत्तदा तया स्त्रिया सह सदैव विरोधत्वं भविष्यतीति ब्रूयात् । किंपुनरशुभेन नात्र संदेहः ।

अथ कोऽपि विवाहार्थं तया स्त्रिया सह संध्यर्थं पृच्छेदित्यत आह ।

तथा प्रथम १ चतुर्थ ४ सप्तम ७ पंचदश १५ षोडश १६ गृहेषु पश्येत । यद्येतेषु गृहेषु शुभप्रवेशिनः स्युस्तदा विधू रूपी द्वादशगृहरमलेषु कुत्रापि समागतः स्यात्तदा विवाहः शीघ्रतया ध्रुवमेव स्यात्तथा स्त्रीपुंसयोर्मध्ये मित्रत्वं संमेलनमपि बहुतरं भवेत्।यदि तेषु गृहेषु शुभप्रवेशिनः स्युस्तदा स्त्रीपुंसयोर्मध्ये विरोधत्वं कलहश्चाहर्निशं स्यात् । अत्र प्रश्नरमले विद्यमानेन विधुरूपिणा ध्रुवं विवाहो वाच्यस्तथा तेषु गृहेषु शुभप्रवेशिनः स्युस्तदा स्त्रीपुंसयोर्मध्ये संमेलनादिकं ब्रूयात् । अथ यदि तेषु गृहेषु निर्गमाः स्युस्तथा विधुरूपी प्रश्नरमलेषु कुत्रापि नो समागतः स्यात्तदा विवाहः कदापि नो भवेत् । चेद्यदि विधुरूपी द्वादशगृहं विहाय रमलेषु कुत्रापि समागतः स्यात्तदा विवाहो भवेत । परंतु परिणामे तया स्त्रिया सह मित्रता स्यात् । अथ यदि तेषु गृहेषु स्थिराः स्युस्तदा प्रवेशिन उक्तं फलं ब्रूयात् । परंतु विधुरूपिणं विलोक्य । अथ तेषु गृहेषु यदि द्विस्वभावाः स्युस्तदा निर्गमोक्तं फलं ब्रूयात तदात्रापि विधुरूपिणोऽनुमानेन विवाहं न तु तदभावे । अथ यदि तेषु गृहेषु । सर्वे मिश्रिताः स्युस्तदाऽधिक्योपरि फलं वाच्यं नात्र संदेहः । अथ प्रथमगृहे यो रूपी भवेत्तस्य स्पर्धरूपी सत-

मगृहे समागतः स्यात्तदा स्त्रीपुंसयोर्मध्ये सुखं नो भवेत्सदैव कलहः स्यात्तथा विसंवादश्च । अथवा यो रूपी त्रयोदशगृहे भवेत्तस्य स्पर्द्ध-रूपो यदि चतुर्दशगृहे समागतः स्यात्तदा तदेव फलं वाच्यम् । अथ यदि रमलतुलागृहे १६ मंदगः समागतः स्यात्तदापि स्त्रीपुंसयोर्मध्ये सुखन्नो सदैव कलहो भवेत्।अथ वायुरूपिणो विवाहोपरि विचारांशं कुर्वंति । यदि ते रूपिणः । प्रश्नरमलेषु समागताः स्युस्तदापि स्त्रीपुंसयोर्म्मध्ये कलहो भवेत्॥अथवा ये रूपिणो विवाहोपरि विचा-रांशं कुर्वंति यदि ते रूपिणः प्रश्नरमलेषु समागताः स्युस्तदापि स्त्री पुंसयोर्म्मध्ये कलहः स्यात् । नात्र संदेहः ।

अथ सा स्त्री कस्य कन्या वर्त्तत इत्यत आह ।

तदा सप्तमगृहे पश्येत् । यदि वाग्मी ⠀ वा सूरी रूपी ⠀ वा कवि ⠀ रूपी भवेत्तदा सा स्त्री कस्यचित्सत्पात्रस्य कन्या च वर्त्तते यः सत्पात्रः सर्वजनेभ्यः पवित्रः संध्यावंदनजपध्यानपरायणो वि-द्वांश्च अथ यदि तीक्ष्णांशु ⠀ श्च उष्णगु ⠀ रूपी भवेत्तदा सा स्त्री पृथ्वीपतेः कन्या वा कस्यचिद्राज्ञः कन्या वर्त्तते।अथ यदि मंदगो ⠀ वा सौरी ⠀ रूपी भवेत्तदा सा स्त्री कस्यचिद्धिन्दूकस्य कन्या वा दासस्य कन्या वर्त्तते।एवं शेषरूपिणामपि वक्तव्यम् यथा पूर्वोक्तं मयाऽपररूपिणां विचारांशेषु तेन मार्गेण शेषाणां कन्या वक्तव्या । अत्र स्वल्पमेवोक्तं मयाऽपररूपिणां विचारांशः स्फुटेनैव ज्ञातव्यः । नात्र संदेहः।अथ किंचिद्विशेष उच्यते।तथा च ग्रथांतरेऽप्युक्तं वर्त्तते ।

अथ तस्याः स्त्रियाः का जातिरित्यत आह ।

तदा सप्तमगृहे पश्येत । यदि मंदगो ⠀ वा सौरी ⠀ रूपी भवेत्तदा सा स्त्री नीचजातिकन्या शीलरहितस्य कन्या वर्त्तते।अथ यदि आरो ⠀ वा तीक्ष्णांशु ⠀ भवेत्कन्यावस्थाज्ञातिनियतेंद्रियधर्माधिकारिणी भवेत् । यः पुरुषःपरांशं नो गृह्णीयात्तस्य कन्या वाच्या । अथ उष्णगु-⠀ र्वा लोहितः ⠀ भवेत्तदा सा स्त्री श्रेष्ठज्ञातेः कन्या वक्तव्या । अथ

यदि दैत्यार्चितः वा कवि रूपी भवेत्तदा सा स्त्री तज्जातेः कन्या यस्य जातौ सदैव प्रसन्नतान्विताः संध्यावंदनजपध्यानपरायणा जना जायंते । अथ यदि वाग्मी वा सूरी रूपी भवेत्तदा सा स्त्री तज्जातिकन्या यस्यां जातौ धर्म्मकर्माणि बहुतराणि स्युस्तथा परांशं नो गृह्णीयुः । अथ यदि सौम्यो वा बोधनो रूपी भवेत्तदा सा स्त्री वैद्यस्य कन्या वा विदुषः कन्या वर्त्तते । अथ यदि विधु रूपी भवेत्तदा सा स्त्री नीचव्यापारकर्तुः कन्या वर्त्तते । अथ यदि शीतांशु भवेत्तदा सा स्त्री शुद्दशदेशीयस्य कन्या वर्त्तते । अथ यदि वक्रो वा पातो रूपी भवेत्तदा सा स्त्री नीचजातिधूर्तकन्या वर्त्तते । नात्र संदेहः ।

अथ स्त्रीपुंसयोर्मध्ये कदापि भिन्नता भविष्यति न वा तथा स्त्री पुरुषेण सह मित्रत्वं करिष्यति न वेत्यत आह ।

तदा चतुर्थ ४ सप्तम ७ चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु पश्येद्यदि तेषु गृहेषु शीतांशुः वक्रः पातः रूपिणः समागताः स्युस्तदा तयोः स्त्रीपुंसयोर्मध्ये शीघ्रतया भिन्नता स्यात् । अथवा कोऽपि निर्गमस्तेषु गृहेषु ४, ७, १४, १५, १६ समागतस्तदापि तयोर्मध्ये भिन्नता भवेत् । अथवा पंचदशे १५ गृहे मंदगः समागतः स्यात्तदापि स्त्रीपुंसयोर्मध्ये भिन्नता भवेत् । अथवा प्रथमगृहरूपिणं सप्तमगृहरूपिणा गुणयेत्ताभ्यामुत्पन्नरूपी यदि निर्गमरूपो भवेत्तथा चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु निर्गमरूपिण एव समागताः स्युस्तदा तयोः स्त्रीपुंसयोर्मध्ये ध्रुवं भिन्नता स्यात् । अथ यदि तेषु गृहेषु ४, ७, १४, १५, १६ शुभप्रवेशी वा शुभस्थिरः समागतः स्यात्तदा तयोः स्त्रीपुंसयोर्मध्ये कदापि भिन्नता नो भवेत् । यद्यशुभप्रवेशी वा स्थिरो भवेत्तदा तदेव फलं वाच्यम् । परंतु प्रत्यहमुभयोः स्त्रीपुंसयोर्मध्ये क्लेशत्वं परिश्रमः

२०

कलहश्च स्यात् । अथ यदि सप्तमगृह७ रूपी वा चतुर्दशगृह १४रूपी द्वितीयगृहेऽन्वादेशरूपं कुर्यात्तदा सा स्त्री स्वपुरुषेण सह ध्रुवं मित्रत्वं कुर्यात् । यदि प्रथमगृहरूपी वा त्रयोदशगृहरूपी सप्तमगृहे तथा चतुर्दशगृहेऽन्वादेशरूपं कुर्य्यात्तदा स पुरुषः स्वस्त्रियं नो व्रजेत् । यदि पंचम ५ गृहे तथैकादश ११ गृहे च शुभो भवेत्तदा तयोर्मध्ये स्त्रीपुंसयोर्द्वयोः पक्षे मित्रत्वं बहुतरं स्यात् । यद्यशुभो भवेत्तदा तयोः स्त्रीपुंसयोर्मध्ये द्वयोः पक्षाद्दुष्टत्वं बहुतरं स्यात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तत्र पुरुषपक्षस्य पृच्छकरूपस्य प्रथमगृहे त्रयोदशगृहे च पश्येत् । अथ यदर्थं पृच्छति तत्स्त्रीपक्षस्य सप्तमगृहं चतुर्दशगृहं च । अत एव प्रथम १ त्रयोदश १३ गृहे पुरुषस्य पृच्छकरूपस्य ज्ञेयं तथा सप्तम ७ चतुर्दश १४ गृहं स्त्रिया ज्ञेयं यदि प्रथमगृहे सप्तमगृहेऽथवा त्रयोदशे १३ चतुर्दशे च स्पर्द्धारूपी समागतः स्यात्तदा तयोः स्त्रीपुंसयोर्मध्ये मित्रत्वं ( सुहृदत्वं ) नो भवेत् । अथ यदि पंचदशगृहे मंदगो भवेत्तदा स्त्रीपुंसयोर्मध्ये कलहः स्यात् । एवं स्वामिभृत्ययोस्तथा पृच्छकस्य संगतपुरुषस्पर्द्धरूपपुरुषयोः प्राचीनदुष्टैः सह फलं ब्रूयात् पृच्छकस्य गृहं तु प्रथमं त्रयोदशं च । एतेषां गृहं सप्तमं चतुर्दशं च । तत्र यथोक्तं फलं वाच्यं नात्र संदेहः ।

अथ सा स्त्री स्वगोत्रकुटुम्बस्य कन्या वर्त्तते वान्यस्य कस्यापीत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् सप्तमगृहरूपी कस्मिन् गृहेऽन्वादेशरूपोऽस्ति । यदि चतुर्थगृहे भवेत्तदा पृच्छकपितृपक्षेषु कस्यचिद्गोत्रकुटुम्बस्य कन्या वर्त्तते । यदि त्रयोदशगृहे भवेत्तदा पृच्छकमातृपक्षेषु कस्यचिद्गोत्रकुटुम्बस्य कन्या वर्त्तते । यदि द्वादशगृहेषु भवेत्तदा कस्यचिन्निषिद्धजनस्य कन्या वर्त्तते । यः पृच्छकस्याज्ञाकरः

स्नेहप्रीत्यादिषु भवेत् । एवं शेषगृहेष्वन्वादेशे सति गृहस्येदृशं फलं ब्रूयात् । यद्यष्टम ८ द्वादश १२ त्रयोदश १३ गृहेषु स्यात्तथाऽपरगृहेष्वपि चान्वादेशो भवेत्तदा स्वगोत्रकुटुंबेभ्योऽन्यस्य कस्यचित्परजनस्य कन्या वर्त्तते । नात्र संदेहः ।

अथ ग्रन्थान्तरे कश्चिद्विशेषो वर्त्तते तमेवाह ।

यदि सप्तमगृहेऽशुभो भवेत्तदा किमपि रत्यादिसुखं तया स्त्रिया सह नो स्यात् । यदि सप्तमगृहे शुभो भवेत्तथा साक्षीभूतोऽपि शुभो यदि स्यात्तदा सर्वसुखं सम्यक्प्रकारेण तया स्त्रिया सह सदैव स्यात् । अथ यदि सप्तमगृहे दैत्यार्चितो ⁝ भवेत्तथा कोऽपि नररूपी भवेत्तदा स पृच्छकः पुरुषः सदैव बालकैः सह रत्यादिसुखं कुर्यात्स्त्रीभिः सह कदापि नो कुर्यादुक्तं च "वन्दी विन्दति चेदमात्यपदवीं शिष्टैरलं भूरिभिः पुंभिश्चेत्प्रतिपाद्यते रतिकला क्रेणीदृशामादरः ॥ विश्रांता यदि पारसीषु कविता सत्सूरिणां का कथा भूपाले यवने समस्तभुवने चेदं समस्तं गतम्"॥१॥ अथ यदि सप्तमगृहे सौरी ⁝ रूपी भवेद्वा कोप्यशुभः समागतः स्यात्तथाष्टमगृहे शुभो भवेत्तदा प्रष्टा आदौ परस्त्रिया सह कुकर्म कुर्यात् । पश्चाद्विवाहितस्त्रिया सह रत्यादिसुखं कुर्यात् । नात्र संदेहः ।

अथ चौरज्ञानमाह.तत्रैषां जनानां मध्ये कश्चौर इत्यत आह ।

तदा तदुद्देशं समाश्रित्य रमलं पातयेत् । षोडशरूपिण उत्पाद्य पश्चान्मातरं दुहित्रा गुणयेत् । एवं चतुरो रूपिण उत्पाद्य तेषां मातरं विरच्य द्वितीयरमलं पूर्णं कुर्य्यात् । तदा पश्येत्सौम्यरूपी कुत्र समागतो वर्त्तते । तथा कीदृशाभ्यां रूपिभ्यामुत्पन्नः । अथवा यस्मिन् सौम्यरूपी भवेत्तस्मिन्गृहे प्रथमरमले को रूपी स्थितस्तं पश्येत् यदि प्रवेशी भवेत्तदा तस्मिञ्जनसमूहे चौरो वर्त्तते।इति ब्रूयात्।यदि निर्गमो भवेत्तदा तेषु जनेषु चौरो नास्ति यदि प्रवेशी प्रश्नरमलेषु सप्तमाष्टम ७, ८, गृहे च रूपसमूहं कुर्या-

त्तदा तेषु जनेषु द्रव्यचौरो वर्त्तत इति वाच्यम्। यदि निर्गमरूपी स-मूहं कुर्यात्तदा तेषु जनेषु चौरो नास्ति । अथवा तस्मिन् गुणकं द्वितीयरमलेषु सौम्य ☰ सौरि ☱ आर ⁞ रूपिणो मुसल्लसगृहेषु समागताः स्युः कोऽर्थः सौम्यः षष्ठगृहे सौरिर्द्वितीये नवमगृहे वा आरः प्रथमेऽष्टमे वा स्यात्तदा यस्य नामोद्देशेन रमलं पातितं भवेत्स एव चौरस्तेनैव जनेन द्रव्यहरणं कृतमिति। अत एव तस्मा-ज्जनाद्द्रव्यं नष्टं प्राप्नुयात्। अत्र स्फुटचौरज्ञानार्थमाह। तेषां जना-नां विभागं कुर्यात्। स्त्रिय एकत्र तथा पुरुषाश्चैकत्रैवं द्विभागं कृत्वा पुनः पृथक्पृथक् रमलं पातयेत्॥ यस्मिन् रमले तेषु रूपि-षु ☱ ☰ ⁞ स्वमुसल्लसगृहेष्वागतेषु तस्मिन्नेव समूहे चौरं जानीयात्। पुनस्तथा तस्यापि समूहस्य द्विभागं कुर्यात्। तथैव तदुद्देशं समा-श्रित्य रमलं पृथक्पृथक्पातयेत्॥ तद्वदेव यस्मिन्नमले ते रूपिणः स्वमुसल्लसगृहे स्युस्तस्मिन्नेव समूहे चौरं जानीयात्। एवं पुनःपुनः कर्त्तव्यं यावत्पर्य्यंतं चौरं प्राप्नुयात्॥ यस्य नाम समाश्रित्य रमलं पातितं रूपिणः स्वमुसल्लसगृहेष्वागच्छेयुस्तमेव चौरं जानीयात्। तस्मात्पुरुषाद्युक्तत्वेन स्वद्रव्यं याचयेत्।

अथ तस्य चौरस्य स्वरूपज्ञानार्थमाह।

तस्य चौरस्य रमलस्य प्रथमगृहरूपिणं दशमगृहरूपिणा गुण-येत्। ताभ्यां य उत्पन्नो भवेत्तेन रूपिणा चौरस्य सर्वस्वरूपं ब्रूयात्

अथ चौरस्य ज्ञानाय प्रकारांतरमाह।

यदि कोऽपि पृच्छेदेतेषां जनानां मध्ये कः चौरस्तदा प्रश्नरमल-स्य पंचमषष्ठसप्तमगृहरूपिणां संख्यांकं गृहीत्वा समूहं कुर्यात्। तेषां जनानामग्रे पंक्तिं कृत्वा रमलं पातयित्वा संख्यांकं गृह्णीयात्। तत्संख्यांकं तदधस्तस्तासु जनपंक्तिषु गणयेत्। यत्रावसानं स्यात्स एव चौरो ज्ञेयः। नात्र संदेहः।

अथैषां जनानां मध्ये चौरो वर्त्तते वा नेत्यत आह ।

तदा तदुद्देशं समाश्रित्य रमलं पातयेत् ॥ यदि तस्मिन्रमले आरो ⁝ वा लोहित ☰ रूपी कुत्रापि नो समागतः स्यात्तदा तेषु जनेषु चौरो वर्त्तते । यदि चेत्कुत्रापि नो समागतः स्यात्तदा तेषु जनेषु चौरो नास्ति नात्र संदेहः ।

अथ प्रकारांतरेण चौरस्फुटीकरणमाह ।

येषां येषां जनानामुपरि स्पृहा भवेत्तेषां सर्वेषां द्विभागं कुर्यात् । पश्चात्तदुद्देशं समाश्रित्य पृथक्पृथक् रमलं पातयेत् । यदि रमलेषु द्वाभ्यां प्रवेशिभ्यां सौम्य ☰ रूपी समुत्पन्नः स्यात्तदा तेषु जनेषु चौरो वर्त्तते । यदि द्वाभ्यां निर्गमाभ्यां रमलेषु सौम्य ☰ रूपी समुत्पन्नः स्यात्तदा तेषु जनेषु चौरो नास्ति ॥ एवं पुनः पुनर्जनानां द्विभागं कृत्वा पृथक्पृथक् रमलं पातयित्वा सौम्योत्पन्नमूलेन तत्समूहे चौरं विज्ञाय तावत्पर्य्यंतं कर्त्तव्यं यावच्चौरं प्राप्नुयात् । नात्र संदेहः ।

अथ चौरज्ञानार्थं प्रकारांतरमाह ।

येषां येषां जनानामुपरि स्पृहा भवेत्तान्सर्वान्स्वाग्रे चोपवेशयेत् । किं कृत्वा । अर्द्धान्वामांगेऽर्धान्दक्षिणांगे कृत्वा पश्चाद्रमलं पातयेत् । तेषु रमलेषु पश्येत् । षोडशगृहरूपी कुत्रान्वादेशरूपो वर्त्तते । यदि सोऽन्वादेशो रमलस्य दक्षिणांगे स्यात्तदा चौरो दक्षिणांगे वाच्यः । यदि स रमलस्य वामांगे स्यात्तदा चौरो वामांगे वाच्यः । एवं पुनः पुनः कर्त्तव्यं यावच्चौरं प्राप्नुयात् । यदि सोऽन्वादेश उभयस्मिन्पार्श्वे दक्षिणांगे वामांगे च स्यात्तदा पुनरपि रमलं पातयित्वा तस्य रमलस्य केंद्रगृहे १, ४, ७, १०, रूपिणां मातृगृहं विरच्य रमलं कारयेत् । पश्चात्ताञ्जनान्स्वाग्रे उपवेशयेत् द्विभागं कृत्वा तस्मिन्समये तस्य रमलस्य मातरं दुहित्रा गुणयेत् । एवं चत्वारि रूपाण्युत्पाद्य तेषां मातृगृहं विरच्य गुणकं रमलपूर्णं कुर्य्यात् । पश्चात्तस्य रमलस्य चतुर्थगृहे पश्येत् । यदि द्विस्वभावो भवेत्तदा तेषु

जनेषु चौरो नास्ति । यदि स्थिरो भवेत्तदा तेषु जनेषु चौरो वर्त्तते। यदि निर्गमो भवेत्तदा द्विस्वभावात्फलं वाच्यम् । यदि प्रवेशो भवेत्तदा स्थिरवत्फलं ब्रूयात् ।

अथैतेषां समीपे तद्धृतवस्तु वर्त्तते वा नेत्यत आह ।

तदा रमलप्रश्नेषु पश्येत्सौम्यरूपी कीदृग्रूपिणा समुत्पन्नो वर्त्तते। यदि स प्रवेशी भवेत्तदा तेषां समीपे चौरहृतवस्तु वर्त्तते । यदि निर्गमो भवेत्तदा तेषां समीपे चौरहृतवस्तु नास्ति नात्र संदेहः ।

अथ चौरेण रात्रौ हृतं वा दिन इत्यत आह ।

तदा प्रश्नरमलस्य प्रथमगृहे पश्येद्यदि मेषमिथुनासिंहतुलाधनुः कुंभराशीनां रूपिणः स्युस्तदा चौरेण दिने हृतमिति । यदि वृषकर्ककन्यावृश्चिकमकरमीनराशीनां रूपिणः स्युस्तदा रात्रौ चौरेण हृतमिति ब्रूयात् । नात्र संदेहः ।

अथ चौरः पुरुषो वर्त्तते वा स्त्रीत्यत आह ।

तदा सप्तमगृहे पश्येत् पुरुषरूपी वर्त्तते वा स्त्रीरूपी तथा क्रमाणां मतेन तस्य रूपिणो गृहे द्रष्टव्यं स्त्रीरूपी समागतो वर्त्तते वा पुरुषः । यद्युभयस्थले पुरुषो भवेत्तदा चौरः पुरुषो वाच्यः । यद्युभयास्मिन्न स्थले स्त्रीरूपो भवेत्तदा चौरः स्त्री वाच्यः । यद्येकः पुरुषरूपी तथैकः स्त्री चेत्तदा तौ स्वस्मिन्गुणितौ कर्त्तव्यौ । ताभ्यामुत्पन्नो यो रूपी स्यात्तं पश्येत् । यदि स्त्री भवेत्तदा स्त्री चौरो वाच्यः । यदि स नररूपी भवेत्तदा पुरुषश्चौरो । वाच्यः नात्र संदेहः ।

अथ ग्रंथांतरमाह ।

तदा प्रश्नरमलस्य सप्तमगृहे पश्येत्को रूपी समागतो वर्त्तते स्त्रीरूपो वा पुरुषरूपस्तथा यदि रमलेषु पुरुषरूपिणो बहुतराः स्युस्तदा चौरः पुरुषो वाच्यः । यदि स्त्रीरूपिणो बहुतराः स्युस्तदा चौरो स्त्री वाच्यः । नात्र संदेहः ।

अथ चौरस्य वयःक्रमज्ञानार्थमाह ।

तदा सप्तमगृहरूपिणोऽन्वादेशरूपं पश्येत्कुत्र वर्त्तते । यदि सोऽन्वादेशो दिनगृहेषु कोऽर्थों मातृगृहेषु १, २, ३, ४, स्यात्तदा चौरः कुमारः षोडशवर्षावधिको वाच्यः । यदि सप्तकदिनगृहेषु कोऽर्थों दुहितृगृहेषु ५, ६, ७, ८, सोऽन्वादेशः स्यात्तदा चौरो युवा चत्वारिंशद् ४० वर्षावधिको वाच्यः । यदि मासगृहेषु कोऽर्थः दौहित्री गृहेषु ९, १०, ११, १२, सोऽन्वादेशः स्यात्तदा चौरः स्थविरः पंचाशद्वर्षावधिको वाच्यः । यदि वर्षगृहेषु कोऽर्थः साक्षीभूतगृहेषु १३, १४, १५, १६, सोऽन्वादेशः स्यात्तदा चौरो वृद्धो नवति ९० वर्षावधिको वाच्यः।एतद्वयोज्ञानं प्रत्यक्षस्थितेषु जनेषु चाग्रे चौरस्य कथितम् । अथ परोक्षस्थितस्य चौरस्य तु वयोज्ञानं विपरीतमार्गेण ब्रूयात् । तद्यथा । यदि सोऽन्वादेशो मातृगृहेषु स्यात्तदा चौरो वृद्धो वाच्यः।यदि दुहितृगृहेषु सोऽन्वादेशः स्यात्तदा चौरः स्थविरो वाच्यः। यदि दुहितृगृहेषु सोऽन्वादेशः स्यात्तदा चौरो युवा वक्तव्यः।यदि साक्षीभूतगृहेषु सोऽन्वादेशः स्यात्तदा चौरः कुमारो वाच्यः । नात्र संदेहः ।

अथ चौरः कोऽपि स्नेही वर्त्तते वाऽन्य इत्यत आह ।

यदि सप्तमगृहरूपी प्रथमगृहे १ वा त्रयोदश१३ गृहेऽन्वादेशरूपं कुर्य्यात्तदा प्रष्टा वा चौरो वा केनापि स्वकीयेनैव चोरितं यथा-स्वकुटुंबिगोत्रादिभिः । अथ यदि द्वितीयगृहेऽन्वादेशो भवेत्तदा प्रष्टा सहायदाता चौरो ज्ञेयो वा प्रष्टुराधीनजनश्चौरो ज्ञातव्यः यथाऽनुचरदासीदासादयो यदि तृतीयगृहे सोऽन्वादेशः स्यात्तदा प्रष्टुर्भगिनीभ्रातृगोत्रादयश्चौरा ज्ञातव्याः । एवं चतुर्थादिष्वपि गृहेष्वन्वादेशेन गृहाणां विचारांशं ब्रूयान्नात्र संदेहः।तथा च ग्रंथांतरेप्युक्तम्। यदि सौम्य ⁝ बोधन ⁝ शीतांशु ⁝ मंदगेषु ⁝ चतुर्षु रूपिषु कोऽपि रूपी प्रथमगृहे समागच्छेत्तदा प्रष्टा एव चौरो ज्ञेयो वा तस्य

कोऽपि स्नेही चोरः स्यात्। यदि तेषु चतुर्ष्वेकोऽपि रूपी चतुर्थगृहे समागच्छेत्तदाऽन्यः कोऽपि चौरो ज्ञेयः। नात्र संदेहः।

अथ स चौरः कुत्र वर्त्तत इत्यत आह।

तदा सप्तमगृहस्वामी प्रश्नरमलेषु कुत्र वर्त्तेत इति द्रष्टव्यम्। अथ यदि आपोक्लिमगृहेषु ३, ६, ९, १२, स्यात्तथा सप्तमगृहरूपी चतुर्थगृहेऽन्वादेशरूपो भवेत्तदा चौरोऽस्मिन्नेव नगरे स्वस्थाने तिष्ठति। यदि चतुर्थगृहस्वामी सप्तमगृहे भवेत्तदा चौरस्तस्मिन्नेव स्थले तिष्ठति यतो वस्तु चोरितं जातमिति। अथ सप्तमगृहे यो रूपी समागतो वर्त्तते स यदि सप्तमगृहस्वामी नो तथा चतुर्थगृहस्वामी नो भवेत्परंतु स एव सप्तमगृहरूपी चतुर्थगृहेऽन्वादेशरूपः स्यात्तदा चौरस्तस्मिन्स्थले गमनागमनं करोति कोपि नो जानाति। यदि सप्तमगृहस्वामी तृतीयगृहे नवमगृहे समागच्छेद्वाऽन्वादेशरूपं कुर्यात्तदा चौरः कुत्रापि प्रचलितो वा कुत्रापि स्वस्थानाद्गतः। यदि सप्तमगृहस्वामी पंचमगृहे समागतः स्यात्तदा चौरहृतवस्तुनः प्राप्तिर्महता कष्टेन स्यात्। यदि दशमै १० कादश ११ गृहे भवेत्तदा चौरहृतवस्तुनः शीघ्रतया प्राप्तिः स्यात्। अथ यदि सप्तमगृहस्वामी प्रश्नरमलेषु कुत्रापि नो समागतः स्यात्तदा प्रश्नरमलस्य सर्वरूपिणः पश्येत्। यस्मिन्गृहे यो रूपी पतितो वर्त्तते तस्य गृहस्य स्वामिनं तं रूपिणा गुणयेत्। एवं प्रश्नरमलस्य सर्वरूपिणस्तत्तद्गृहस्वामिना गुणयित्वा पश्येत्।सप्तमगृहस्वामी कस्माद्गृहात्समुत्पन्नो जातः। तेनैव गृहेण फलं ब्रूयात। तथाहि। यदि चतुर्थगृहात्समुत्पन्नो भवेत्तदा चौरः स्वस्थाने तिष्ठति। यदि तृतीयगृहान्नवमगृहे समुत्पन्नो भवेत्तदा चौरः प्रवासी वर्त्तते वा कुत्रापि गंतुमिच्छति। एवं शेषगृहाणां फलं वाच्यम्। अथ यदि पलायितस्य प्रश्नं कुर्य्यात्तदा सप्तमगृहस्वामिसप्तमगृहरूपिणोरिव षष्ठगृहस्वामिषष्ठगृहरूपिभ्यां फलं ब्रूयात्। प्रागुक्तवत्। यदि दासीक्लीबयोः

प्रश्नं कुर्य्यात्तदा ताभ्यामेव षष्ठगृहस्वामिषष्ठगृहरूपिभ्यां फलं वाच्यम् । यदि चोत्कृष्टज्ञातिबृहद्दासस्य प्रश्नं कुर्य्यात्तदा तयोरिव द्वादशगृहस्वामि द्वादशगृहरूपिभ्यां फलं ब्रूयात् । प्रागुक्तवत् । यदि चतुष्पदो नष्टो भवेत्तदर्थं यदि कोऽपि पृच्छेत्तदा ताभ्यामेव द्वादशगृहस्वामिद्वादशगृहरूपिभ्यां फलं वाच्यम् । अथ सर्वप्रश्नेषु यदि प्रश्नरूपी प्रश्नगृहात्कोऽर्थः प्रश्नरूपिणां द्वितीये समागच्छेद्वा प्रथमगृहे १ यो मुसल्लसस्थानं द्वितीयस्य वर्त्तते तदा मनोऽभिप्रायः कोऽर्थो दासीदासचतुष्पदाः पलायमानाश्चेत्स्वयमेव समागच्छेयुः । यदि प्रश्नगृहेषु शनी रूपी भवेद्वा तस्य प्रश्नरूपिणः शनिः स्वामी भवेद्वा मंदगो भवेत्तदा तं मनोभिप्रायरूपं दासीदासचतुष्पदं कोऽपि धृत्वा समानयेत । अथ प्रश्नरूपिणोऽन्वादेशश्चौरदासीदासचतुष्पदानां विचारांशं ददाति नात्र संदेहः ।

अथ चौर एको वर्त्तते वा बहव इत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यदि स एकस्मिन्गृहेऽन्वादेशरूपं कुर्यात्तदा चौरौ द्वौ जनौ वर्त्तेते यदि द्विगृहेऽन्वादेशरूपो भवेत्तदा चौरास्त्रयो वाच्याः । यदि त्रिस्थलेऽन्वादेशो भवेत्तदा चौराश्चत्वारो वक्तव्याः । एवमग्रेऽपि वाच्याः । अथ यदि सप्तमगृहरूपी कुत्राप्यन्वादेशरूपो नो भवेत्तदा एक एव चौरो वाच्यो नात्र संदेहः ।

अथ चौरस्य स्वरूपमाह

तदा प्रश्नरमलस्य सप्तमगृहरूपिणा गुणयेत् । रूपिणां स्वरूपमार्गेण तद्रूपिसदृशं स्वरूपं चौरस्य ब्रूयात् । रूपिणां स्वरूपं तु पूर्वोक्तं मया नात्र संदेहः ।

अथ स चौरोऽस्मिन्नेव नगरे वर्तते वा नेत्यत आह ।

तदा चतुर्थगृहे ४ दशम १० गृहे पश्येत् । यद्युभयगृहे प्रवेशी भवेद्वा स्थिरः स्यात्तदा स चौरोऽस्मिन्नेव नगरे वर्त्तते । यद्युभयगृहे निर्गमो भवेद्वा द्विस्वभावो भवेत्तदा स चौरोऽस्मिन्नगरे नास्तीति

वाच्यम् । अत्र केचिद्वदंति यदि द्विस्वभावो भवेत्तदा स चौरः कुत्रापि गंतुमिच्छति गतो वा शुभे स्वायत्त्येन स्वेच्छया च । अशुभेऽस्वायत्त्येनानिच्छया च । यद्युभयगृहे स्थिरो भवेत्तदा स चौरः स्वस्थाने स्थिररूपेण तिष्ठति । अथ यदि स एव सप्तमगृहे नवमगृहेचान्वादेशरूपो भवेत्तदा स चौरः कुत्रापि बहिर्गतो वर्त्तते । अत्र केचिद्वदंति चतुर्थे सप्तमे च निर्गमो भवेत्तदा स चौरः कुत्रापि बहिर्गतो वर्त्तत इति वाच्यम् । अथ यदि चतुर्थे सप्तमे च प्रवेशी भवेत्तदा संप्रति नगर एव वर्त्तते । द्विस्वभावश्चेन्निर्गमवत्फलं वाच्यम्। तथा स्थिरश्चेत्तदा प्रवेशिवत्फलं ब्रूयात् । अथ यदि चतुर्थदशमयो-र्मध्ये तथा चतुर्थसप्तमयोर्मध्ये यद्येकगृहे प्रवेशी वा स्थिरो भवे-त्तथैकस्मिन्गृहे निर्गमो वा द्विस्वभावो भवेत्तदा तौ द्वौ स्वस्मिन्गु-णितौ वर्त्तते ताभ्यामुत्पन्नो यो रूपी स्यात्तेनैव रूपिणा फलं वाच्यं नात्र संदेहः ।

अथ स चौरः कीदृग्वस्त्रवेष्टितो वर्त्तत इत्यत आह ।

• तदा चैकादश ११ गृहे रूपिणा चौरधारितपटस्य वर्णं ब्रूयात् । रूपिणां विचारांशे यथा पूर्वमुक्तं मया ।

अथ चौरस्य स्थानं कीदृशं वर्त्तत इत्यत आह ।

तदा दशम १० गृहरूपिणा चौरस्य स्थानरूपं ब्रूयात् । रूपिणां विचारांशे नात्र संदेहः ।

अथ चौरेण द्रव्यं व्ययीकृतं कुत्रापि स्थापितं वर्त्तत इत्यत आह ।

तदा प्रश्नगृहस्याऽष्टमगृहं पश्येद्यदि प्रवेशी वा स्थिरो भवेत्तदा तेन चौरेण द्रव्यव्ययो नो कृत इति ब्रूयात्।शुभे स्वायत्त्येन स्वेच्छया चाशुभेऽस्वायत्त्येनानिच्छया च । यदि द्विस्वभावो भवेत्तदा तस्मिन्मध्ये किंचिद्व्ययः कृतस्तेन चौरेण । यदि निर्गमो भवे-त्तदा तद्द्रव्यं सर्वं व्ययीकृतं तेन चौरेण शुभे स्वायत्त्येन सुगमेन

स्वेच्छया च । अशुभेऽस्वायत्त्येन च काठिन्येनानिच्छया च नात्र सन्देहः ।

अथ चौरः कस्यां दिशि वर्त्तत इत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् स कस्मिन्गृहेऽन्वादेशरूपो वर्त्तत इति द्रष्टव्यम्। यदि प्रथम १ द्वितीय२ नवम ९ द्वादश १२ गृहेष्वन्वादेशरूपो भवेत्तदा स चौरः पूर्वस्यां दिशि वर्त्तते। यदि तृतीयचतुर्थ ४ दशम १० पंचदश १५गृहेष्वन्वादेशो भवेत्तदा स चौरो दक्षिणस्यां दिशि वर्त्तत इति वाच्यम्। यदि सोऽन्वादेशः पंचम ५ षष्ठे ६ कादश ११ षोडश १६ गृहेषु स्यात्तदा स चौर उत्तरस्यां दिशि वर्त्तत इति ब्रूयात्। यदि सोऽन्वादेशः सप्तमा७ष्टम ८ त्रयोदश १३ चतुर्दश १४ गृहेषु स्यात्तदा स चौरः पश्चिमायां दिशि वर्त्तते। अथ यदि सप्तमगृहरूपी प्रश्नरमलेषु कुत्राप्यन्वादेशरूपो नो भवेत्तदा तमेव रूपिणं पश्येत्। स कस्य गृहस्य स्वामीति। यथा सप्तमगृहरूपिणं सप्तमगृहस्वामिना गुणयेत्। ताभ्यां य उत्पन्नो यो रूपी भवेत्तं रमलेषु पश्येत् कुत्र समागतो वर्त्तते। यद्युस्मिन्गृहे स्यात्तत्संबन्धिन्यां दिशि चौरो वाच्यः। यदि स कुत्रापि नो समागतः स्यात्तदा तमेवरूपिणं पश्येत्। यदि स वह्निमुखो भवेत्तदा चौरः पूर्वस्यां दिशि वाच्यः। यदि वायुमुखो भवेत्तदा चौरः पश्चिमायां दिशि वाच्यः। यदि जलमुखो भवेत्तदा चोत्तरस्यां दिशि चौरो वाच्यः। यदि भूमिमुखो भवेत्तदा। दक्षिणदिशि चौरो वाच्यः। अथवा स रूपी यदि प्रथम १ द्वितीय २ तृतीय ३ गृहेषु समागतः स्यात्तदा पूर्वस्यां दिशि स चौरो वाच्यः। परंतु स बालरूपः पुरुषो वर्त्तत इति ब्रूयात्॥ यदि चतुर्थ ४ पंचम ५ षष्ठ ६ गृहेषु समागतः स्यात्तदा चौरो दक्षिणदिशि ज्ञातव्यः। परंतु सा तरुणरूपा काचित् स्त्री वर्त्तते। यदि सप्तमा ७ ष्टम ८ नवम ९ गृहेषु समागतः स्यात्तदा चौरः पश्चिमायां दिशि वाच्यः। स तु स्थविरः

पुरुषो वर्त्तते। यदि दशमै १० कादश ११ द्वादश १२ गृहेषु समागतः स्यात्तदा चौर उत्तरस्यां दिशि वाच्यः। परंतु सा काचिद्वृद्धा स्त्री वर्त्तते। नात्र संदेहः।

अथ प्रकारांतरमाह।

प्रश्नरमलस्य सप्तमगृहं पश्येत्। यदि वह्निमुखो भवेत्तदा स चौरः पूर्वस्यां दिशि परंतु स पुरुषो वर्त्तते। यदि वायुमुखो भवेत्तदा स चौरः पश्चिमायां दिशि गतो वाच्योऽत्रापि नररूपः। यदि जलमुखो भवेत्तदा स चौर उत्तरस्यां दिशि वाच्यः। परंतु सा काचित्स्त्री वर्त्तते। यदि भूमिमुखो भवेत्तदा स चौरो दक्षिणस्यां दिशि वाच्यः। अत्रापि सा काचित्स्त्री वर्त्तते। इति ब्रूयान्नात्र संदेहः।

अथ प्रकारांतरमाह।

चतुर्थगृहरूपिणं षष्ठग्रहरूपिणा गुणयेत्ताभ्यामुत्पन्नो यो रूपी भवेत्तेन रूपिणा वह्निमुखादिसंज्ञान्वितेन चौराणां दिशं ब्रूयात्।

अथ द्रव्यं चौरेण चोरितं वा नेत्यत आह।

तदा द्वितीयगृहे पश्येत्। यदि शुभप्रवेशी भवेत्तदा द्रव्यं चौरेण हृतं परंतु तत्रैव त्यक्त्वा गतो गृहीत्वा नो गतः प्रष्टाऽनृतं वदतीति ब्रूयात्। अथ यदि चाशुभप्रवेशी भवेत्तदा तद्द्रव्यं तत्रैव ध्रुवं स्थितं वाच्यम्। चौरेण न चोरितं प्रष्टुर्विस्मरणं यातम्। अथ यदि शुभनिर्गमो भवेत्तदा प्रष्टा एव तद्द्रव्यं कुत्रापि व्ययं कृतवान् वा कुत्रापि पतितम्। अथवा कुत्रापि विस्मृतं वा न तु चौरेण हृतमिति ब्रूयात्। अथ यदि चाशुभनिर्गमो भवेत्तदा द्रव्यं चौरेण चोरितं गृहीत्वा कुत्रापि गतश्चौर इति वाच्यम्। अथ यदि स्थिरो भवेत्तदा प्रवेशिवत्फलं ब्रूयात्। यदि द्विस्वभावस्तदा निर्गमवत्फलं वाच्यं नात्र संदेहः।

अथ स्थापितवस्तुनोऽलाभे तद्विस्मृतमुत केनापि चोरितमित्यत आह।

तदाष्टमगृहे द्वितीयगृहे च पश्येद्यदि शुभनिर्गमो भवेत्तदा तद्द्रव्यं चौरेण नो हृतं ध्रुवं प्रष्टैव स्वयं स्वायत्त्येन कुत्रापि तद्द्रव्यं स्थापित-

वान् संप्रति प्रष्टुर्विस्मरणं जातमिति ब्रूयात् । तस्य द्रव्यस्य प्राप्तिः शीघ्रतया स्यात् । अथ यद्यशुभनिर्गमो भवेत्तदा तद्द्रव्यं चौरेण हृतं परंतु गृहाद्बहिर्नो गतं वाच्यम् । तस्माद्गृहाद्दक्षिणदिशि, सोऽस्यां दिशि प्रकाशस्थाने पश्येद्यतः प्राप्नुयात् । अथ यदि शुभस्थिरो भवेत्तदा तद्वस्तु चौरो गृहीत्वा गतः । यदि शुभस्थिरो भवेत्तदा तद्वस्तु चौरेण नो चोरितं प्रष्टुर्विस्मरणं जातमिति ब्रूयात् । अथ यदि शुभाशुभप्रवेशी भवेत्तदा तद्वस्तु चौरेण नो हृतं तत्रैव वर्त्तते तस्य प्राप्तिः शीघ्रतया स्याद्यदि शुभाशुभद्विस्वभावो भवेत्तदा तस्मिन्मध्ये किंचिच्चौरेण हृतमपरं सर्वं वर्त्तते तत्रैवमिति ब्रूयात् । नात्र संदेहः ।

अथ तद्द्रव्यं चौरो गृहीत्वा गतो वा तत्रैव न्यस्य गत इत्यत आह ।

तदा प्रश्नरमलेषु पश्येत्पात $\frac{\circ}{\circ}$ रूपी कुत्र समागतो वर्त्तते । तस्माद्द्वितीये यो रूपी पतितः स्यात्तेनैव रूपिणा चौरस्य स्वरूपं ब्रूयात् । यद्यारो भवेत्तदापि तद्वत् । एवं केतुरूपिणोऽपि चौरस्य रूपं ब्रूयात् । यदिमे त्रयो रूपिणः प्रश्नरमलेषु समागताः स्युस्तदा चौरो द्रव्यं गृहीत्वा हृत्वा च गतो वाच्यः । यदि ते रूपिणः प्रश्नरमलेषु नो समागताः स्युस्तदा द्रव्यं चौरेण नो चोरितमिति ब्रूयात् । नात्र संदेहः ।

अथ तद्वस्तु केनापि चोरितं वा नेत्यत आह ।

तदा द्वितीयगृहेऽष्टमगृहे च पश्येद्यदि द्वितीयगृहे शुभप्रवेशी भवेत्तथाऽष्टमगृहेऽपि स्यात्तदा तद्वस्तु(द्रव्यादिकं)केनापि नो चोरितं वा किंचिद्गृहीतं किंचित्त्यक्तमिति ब्रूयात् । यद्यशुभप्रवेशी चेत्तदा ध्रुवं केनापि किंचिच्चोरितमपरं तत्रैव त्यक्तमिति ब्रूयात् । अथ यदि द्वितीयगृहेऽशुभनिर्गमो भवेत्तथाऽष्टमगृहे शुभप्रवेशी समागतः स्यात्तदा तद्वस्तु (द्रव्यादिकम्) ध्रुवं केनापि चोरितमिति । यदि द्वितीयगृहप्रवेशी भवेत्तथाष्टऽमगृहे निर्गमो भवेत्तदा तद्वस्तु( द्रव्यादिकम्) केनापि नो चोरितमिति ब्रूयात् । यद्युभयगृहे निर्गमः समा

गतः स्यात्तदा तद्वस्तु द्रव्यादिकं चौरेण चोरितं परंतु चौरगृहादपि केनाप्यन्येन चोरितमिति ब्रूयात्। यदि तयोर्मध्ये २, ८, स्थिरः स्यात्तदा प्रवेशिवत्फलं वाच्यम्।यदि द्विस्वभावश्चेत्तदा निर्गमवत्फलं वाच्यम् । अत्र द्वितीयगृहं प्रष्टुः कोशस्य ज्ञेयम् । तथाष्टमगृहं चौराणां कोशस्य ज्ञेयमिति नात्र संदेहः ।

अथ चतुष्पदो नष्टो वा केनापि पुरुषेण चोरित इत्यत आह ।

तदा द्वादशगृहे पश्येद्यदि शुभनिर्गमो भवेत्तदा तं चतुष्पदं चौरो गृहीत्वा नो गतः कुत्रापि यदि चेत्स गतः स्यात्तदा सुगम-मार्गेण तस्य चतुष्पदस्य प्राप्तिः स्यात्। यदि चाशुभप्रवेशी भवेत्तदा चौरो नो गृहीत्वा गतस्तस्य गृहस्य पश्चिमदिशि विलोकयेत् । चतुष्पदः स्वेच्छया कुत्रापि गतो वर्त्तते । झटित्येव प्राप्नुयात् । अत्र केचिद्वदंति तं रूपिणं पश्येत् कस्या दिशः स्वामी इति वह्निमुखादिसंज्ञाभिस्तां दिशं ब्रूयात् । तद्दिशि विलोकिते सति ध्रुवं चतुष्पदं प्राप्नुयात् । अथ यदि द्वादशगृहे शुभ-निर्गमः समागतः स्यात्तदा तं चतुष्पदं चौरो नो गृहीत्वा गतः स तु स्वेच्छया कुत्रापि गतः। यदि तं विलोकयेत्तदा प्राप्नुयात् । अथ यदि विधुः ⚏ रूपी भवेत्तदा तं चतुष्पदं बद्धा कोऽपि नो गृहीतवान्स चतुष्पदः स्वेच्छया कुत्रापि गतः । अथ यदि शुभ-द्विस्वभावो भवेत्तदा स चतुष्पदो दृढ़बन्धनेन नो बद्धः स्थितः। बन्धनान्मुक्तः स्वेच्छया कुत्रापि गतः। तस्य प्राप्तिः शीघ्रतया स्यात् । अथ यद्यशुभद्विस्वभावो भवेत्तदा तं चतुष्पदं चौरो हृत-वान्। तस्य प्राप्तिर्महता कष्टेन काठिन्येन च स्यात् । पुनरपि हस्ताद्गच्छेत् । एवं सर्वत्रैवाशुभेन व्यत्ययं फलं ब्रूयात् । नात्र सन्देहः ।

चौरस्तं चतुष्पदं गृहीत्वा कस्यां दिशि गत इत्यत आह ।

तदा द्वादशगृहे पश्येत्। यदि वह्निमुखो भवेत्तदा पूर्वस्यां दिशि

गतो वाच्यः । यदि तस्यान्वादेशः प्रथम १ द्वितीय २ तृतीय ३ त्रयोदश १३ गृहेषु स्यात्तदाऽसंशयं सत्यरूपं तत्फलमिति । एवं वायुमुखादिकानामपि । वायुमुखश्चेत्तदा पश्चिमदिशि नात्र संदेहः जलमुखेन चोत्तरस्यां दिशि । भूमिमुखेन दक्षिणस्यां दिशि । नात्र सन्देहः ।

अथ चौरहृतद्रव्यस्य प्राप्तिः स्याद्वा नेत्यत आह ।

यदि सप्तमाऽष्टमगृहयो रूपिणौ मातृगृहेष्वन्वादेशरूपौ स्यातां । तदा द्रव्यचौरौ द्वावपि स्वहस्तेष्वागच्छेताम् । यदि सप्तमगृहरूपी एकाक्यन्वादेशरूपो भवेत्तदा चौरं प्राप्नुयात् । यद्यष्टमगृहे रूपी एव स्यात्तदा द्रव्यं प्राप्नुयान्न तु चौरम् ।

अथ प्रकारांतरमाह ।

एष प्रकारो बहुपरीक्षितो ध्रुवः सत्यरूपो वर्त्तते । यदि द्वितीयगृहे चतुर्दशगृहे च प्रवेशी भवेत्तदा ध्रुवं चौरहृतद्रव्यस्य प्राप्तिः स्यात् । यद्युभयगृहे निर्गमो भवेत्तस्य द्रव्यस्य नो प्राप्तिः स्यात् । यद्युभयगृहे स्थिरो भवेत्तदा तस्य द्रव्यस्य स्थिरतया प्राप्तिः स्यात् । यद्युभयस्मिन्गृहे द्विस्वभावो भवेत्तदा तद्द्रव्यमध्ये किंचित्प्राप्नुयात् । शुभे सुगममार्गेण विना परिश्रमेण । अशुभे काठिन्येन परिश्रमेण च । यदि तयोर्गृहयोर्मध्ये चैकस्मिन्गृहेऽन्यस्थैकस्मिन्गृहेऽन्यरूपी पतितः स्यात्तदा बलाधिक्यात्फलं ब्रूयात् । अथ यदि पंचदशगृहरूपी प्राप्युपरि साक्षीभूतत्वं दापयेत्तदा तूर्णेन तस्य द्रव्यस्य प्राप्तिः स्यात् । यदि साक्षीभूतत्वं नो दापयेत्तदा स्थिरतया तस्य द्रव्यस्य प्राप्तिः स्यात् । नात्र संदेहः ।

पुनः प्रकारांतरमाह ।

द्वितीयगृहरूपिणं पंचदशगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नं भिन्नं स्थापयेत् । पुनः षष्ठगृहस्थं चतुर्दशगृहस्थानेन गुणयेदाभ्यामुत्पन्नरूपिणा भिन्नस्थं गुणयित्वाऽन्यरूपिणमुत्पन्नं कुर्य्यात् । यदि

तस्य रूपिणो विचारांशः प्राप्त्युपरि भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। यदि तस्य रूपिणो विचारांशः प्राप्त्युपरि नो भवेत्तदा तस्य द्रव्यस्य कदापि नो प्राप्तिः स्यात्। यदि तस्य विचारांशः। प्राप्त्यु परि नो भवेत्तदा कदापि नो प्राप्तिः स्यात्। अथवा रूपिणं पश्येत्। यदि स प्रवेशी भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। यदि निर्गमो भवेत्तदा नो प्राप्तिः स्यात्। स्थिरे स्थिरत्वं प्राप्तौ। द्विस्वभावे द्रव्यप्राप्तौ द्विविधत्वं वाच्यम्। शुभे सुगममार्गेणाशुभे काठिन्येन नात्र संदेहः।

अथ प्रकारांतरमाह।

यदि कोऽपि पृच्छेच्चौरहृतवस्तूनि किं किं स्थितमित्यस्य प्रत्युत्तरं मूकप्रश्नविधानेन वदेत्। तस्य मूकप्रश्नस्य विधानं मिश्रकप्रकरणे तावत्कथयिष्यामीश्वराज्ञया।

अथ चौरहृतद्रव्यप्राप्तौ प्रकारांतरमाह।

तदाऽष्टमगृहरूपिणं पश्येत्। यदि स प्रथमगृहे वा द्वितीयगृहेऽन्वादेशरूपो भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। अथ यदि चैकादश ११ पंचदश १५ षोडश १६ गृहेषु शुभो भवेत्तथा त्रयाणां मध्ये चैकोऽपि यदि द्वितीयगृहेऽन्वादेशरूपं कुर्यात्। तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। यदि तेषु गृहेषु ११, १५, १६, निर्गमो भवेत्तदा तस्य द्रव्यस्य प्राप्तिर्नो स्यात्। नात्र संदेहः।

अथ चौर्यं प्रकटं भवेद्वा नेत्यत आह।

द्वितीयगृहरूपिणमष्टमगृहरूपिणा गुणयेत्। ताभ्यामुत्पन्नं पश्येत्। यदि शुभप्रवेशी भवेत्तदा चौर्यं प्रकटं भवेदिति ब्रूयात्। यद्यशुभनिर्गमो भवेत्तदा कदापि चौर्यं प्रकटं नो भवेत्। अपरशेषरूपिषु साक्षीभूतानां बलेन प्रकटत्वं ब्रूयात्। नान्यथा

अथ प्रकारांतरमाह।

यदि द्वितीयगृहे चतुर्दशगृहे च प्रवेशी भवेत्तस्य द्रव्यस्य प्राप्तिः

स्याद्यदि चतुर्दशे पंचदशे च निर्गमो भवेत्तदा तस्य द्रव्यस्य प्राप्तिर्न स्यात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

अष्टमगृहरूपिणं द्वितीयगृहस्थेन गुणयेत् । ताभ्यामुत्पन्नो यो भवेद्यदि स प्रश्नरमलेषु कुत्रापि समागतः । स्यात्तदा तस्य चौरहृतद्रव्यस्य प्राप्तिर्वाच्या । यदि कुत्रापि नो समागतो भवेत्तदा कदापि तस्य द्रव्यस्य नो प्राप्तिः स्यात् । यदि स शुभप्रवेशी वा शुभस्थिरो भवेत्तदा नष्टद्रव्यं सर्वं प्राप्नुयात् । शुभे सुगममार्गेण विना परिश्रमेण । अशुभे काठिन्येन च परिश्रमेण द्रव्यार्धं प्राप्नुयात् । नात्र संदेहः । अथ यदि सप्तमगृहरूपी मातृगृहेष्वन्वादेशरूपं कुर्यात्तदा चौरः प्रकटो भविष्यति नात्र संदेहः । अथ प्रवासिनः प्रश्नं कथयिष्यामि ।

अथ प्रवासी मृतो वा जीवंतीत्यत आह ।

अथ सप्तम ७ चतुर्थो ४ ष्टम ८ नवम ९ गृहेषु पश्येत् । यदि तेषु गृहेषु चाशुभनिर्गमो वाऽशुभास्थिरो वा भवेत्तदा स प्रवासी मृतः स्यादिति वाच्यम् । अथवा सप्तमगृहे चतुर्थेऽगृहे चाशुभप्रवेशी भवेत्तथाऽष्टमगृहे नवमगृहे चाशुभनिर्गमः समागतः स्यात्तदा स प्रवासी मृतः स्यादिति वाच्यम् । अथवा यदि सप्तमगृहरूपी द्वादशगृहरूपी वा द्वयोः स्वामी । द्वितीय २, तृतीय ३ गृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी मृतः स्यादिति वाच्यम् । एतत्सर्वं ध्रुवं तदा यदि चतुर्थगृहेऽशुभप्रवेशी तथा दशमगृहेऽशुभनिर्गमो भवेत्तदा तु प्रवासी शवरूपो दग्धः कृतः स्यादिति वाच्यम् । अथवा सप्तमे मुसल्लसगृहेऽशुभनिर्गमो भवेत्तस्याऽन्वादेशो यदि द्वितीय २ त्रयोदश १३ गृहे स्यात्तदा स प्रवासी मृतः स्यादिति ब्रूयात् । अथवा

प्रथमगृहे नवमगृहे चाशुभनिर्गमो भवेत्तथा स एव चतुर्थाः ४ ष्टम ८ गृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी मृत इति ब्रूयात् ।

अथ ग्रंथांतरमाह ।

प्रश्नरमलस्य सर्वरूपिणां रेखाकेवलयुतान्बिंदून्गुणयेत् । यदि वह्निवाय्वोर्बिंदवोऽधिकाः स्युस्तदा स प्रवासी संप्रति जीवतीति ब्रूयात् । यदि जलभूम्योर्बिंदवोऽधिकाः स्युस्तदा स प्रवासी मृतः स्यादिति वाच्यं नात्र संदेहः ।

अथ प्रकारांतरमाह ।

यदि प्रथम १ चतुर्था ४ ष्टम ८ नवम ९ गृहेष्वशुभनिर्गमो भवेत्तदा स प्रवासी मृत इति वाच्यम् । यदि तेषु गृहेषु शुभप्रवेशी भवेत्तदा स प्रवासी संप्रति जीवतीति ब्रूयात् ।

अथ ग्रंथांतरमाह ।

यदि प्रथमगृहरूपी नवम ९ गृहरूपिणोर्म्मध्ये चैकोऽपि चतुर्थगृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी संप्रति जीवतीति वाच्यम् । यद्यष्ट ८ मगृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी मृतः स्यादिति वाच्यम् । अथवाऽष्टम ८ गृहे शुभनिर्गमः समागतः स्यात्तदा स प्रवासी मृत इति ब्रूयात् । नात्र संदेहः ।

अथ प्रवासिनोऽवस्था कीदृशी वर्त्तत इत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यदि स शुभो भवेत्तदा शुभावस्था वाच्या । अशुभेश्चेत्तदा निषिद्धावस्था वाच्या । अथ तस्य शरीरे क्लेशसंभवः सुखसंभवश्चेत्तदा तस्य रूपिणोऽन्वादेशरूपेण ब्रूयात् । अशुभगृहेष्वन्वादेशेन प्रवासिनः क्लेशो वाच्यः । शुभगृहेष्वन्वादेशेन प्रवासिनः शरीरे सुखं ब्रूयात् । अथ प्रवासिनो द्रव्यकुशलत्वं तथोपद्रवत्वं चाष्टमगृहरूपिणाऽन्वादेशरूपेण ब्रूयात् । प्रागुक्तवत् ।

अथ प्रवासी मृतो वा जीवतीत्यत आह ।

तदा सप्तमगृहरूपिणं दशमगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नो

यो भवेत्तं पश्येत् । यदि स प्रश्नरमलेषु कुत्रापि समागतः स्यादेवं यदि नो चेद्वा स शुभो भवेत्तदा स प्रवासी संप्रति जीवतीति ब्रूयात्। यदि स एव षष्ठगृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी रोगग्रस्तो वर्त्तते । यद्यष्टमगृहेऽन्वादेशरूपो भवेत्तदा तस्य जीवनमेव दुर्ल्लभम्। अथ यदि स रूपी प्रश्नरमलेषु कुत्रापि नो समागतः स्यादथवाऽशुभो भवेत्तदा स प्रवासी मृत इति ब्रूयात् । नात्र संदेहः ।

अथ प्रवासी कदाऽऽगमिष्यतीत्यत आह ।

प्रवासिन आगमनस्य दिनसंख्या पूर्वोक्तेन चक्रेण सप्तमगृहरूपिसद्भावाद्वाच्या । अथ केचिद्वदंति । प्रवासिनो जीवनमरणं लिसानुलअमररूपिणोऽन्वादेशरूपेण जीवनमरणगृहेषु ब्रूयात् । जीवनगृहेष्वन्वादेशेन प्रवासिनो जीवनम्।तथा मरणगृहेष्वन्वादेशेन प्रवासिनो मरणं ब्रूयात् । तथा जीवनमरणगृहाणि । वह्निमुखवायुमुखगृहाणि जीवनस्य ज्ञेयम् । तथा जलमुखभूमुखगृहाणि मरणस्य ज्ञातव्यानीति । नात्र संदेहः ।

अथ प्रवासिनोऽवस्था कीदृशी वर्त्तत इत्यत आह ।

तदा प्रथम १ तृतीया ३ भ्यामेकं रूपिणं निष्कासयेत् । तथा नवमै ९ कादश ११ गृहरूपिभ्यामेकं निष्कासयेत् । द्वाभ्यामेकं रूपिणं कृत्वा पश्येत् । यदि स प्रवेशी वा स्थिरो भवेत्तदा रूपिणा प्रवासी स्थिरत्वेन स्वस्थल एव तिष्ठति । परंतु यदि स एव केंद्रगृहेष्वन्वादेशरूपो भवेत्तदा तु ध्रुवमेव प्रवासी प्रचलनोपरि स्वेच्छां नो कुर्यात् । अथ यदि द्विस्वभावो भवेत्तदा स प्रवासी द्विविधचित्तो वर्त्तते । स्वगृहं प्रत्यागच्छेत्पुनर्म्मार्ग्गान्निवृत्तो भवेत् । परंतु यदि स एव पणफरगृहेष्वन्वादेशरूपं कुर्य्यात्तदा ध्रुवमेव मार्गान्निवृत्तः स्यात्। अथ यदि निर्गमो भवेत्तदा स प्रवासी प्रचलितः स्यादिति वाच्यम्। ध्रुवं यदि तृतीये नवमगृहेऽन्वादेशरूपो भवेत् । अथ यदि सप्तमगृहे

निर्गमो भवेत्तथा तृतीये ३ नवमे ९ च प्रवेशी स्यात्तदा प्रवासी मार्गे वर्त्तते ।

अथ प्रकारांतरमाह ।

सप्तमगृहरूपिणं पश्येत् । तं च सप्तमगृहस्वामिना गुणयेत् । ताभ्यामुत्पन्नो यः स्यात्तं पश्येत् । यदि स केंद्रगृहेषु १, ४, ७, १० समागतो भवेत्तदा स प्रवासी तत्र स्थिररूपो वर्त्तते प्रचलितुं नो वाञ्छति । ध्रुवं यदि चतुर्थगृहे भवेत्तथा नवमगृहे निर्गमः सप्तमगृहे च प्रवेशी भवेत्तदा स तु स्थिररूप एव स कदापि नागमिष्यति । अथ यदि ताभ्यामुत्पन्नरूपी पणफरगृहेषु २, ५, ८, ११ समागतः स्यात्तदा स प्रवासी संप्रतिचलितो नास्ति परंतु प्रचलिष्यति । अथ यद्यापोक्लिमगृहेषु ३, ६, ९, १२ पतितः स्यात्तदा स प्रवासी-मार्गे वर्त्तते ध्रुवम् । यदि सप्तमगृहे निर्गमस्तथा नवमगृहे प्रवेशी भवेत्तदा शीघ्रतया ऽऽगच्छेत् । नात्र संदेहः ।

अथ प्रकारांतरेण प्रवास्यागमन आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यदि स मातृगृहेष्वन्वादेशरूपं कुर्यात्तदा वर्षमध्ये ह्यागगिष्यतीति ब्रूयात् । यदि दुहितृगृहे सो ऽन्वादेशरूपं कुर्यात्तदा मासमध्ये । यदि दौहित्रगृहेष्वन्वादेशरूपो भवेत्तदा सप्तदिनमध्ये यदि साक्षिगृहेष्वन्वादेशरूपो भवेत्तदा द्वित्रिदिनमध्ये । नात्र संदेहः ।

अथ प्रवासी शीघ्रतयाऽऽगमिष्यति वा स्थिरतयेत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यद्यशुभनिर्गमो भवेद्यथेमे ⁝ ⁝ ⁝ तदा स प्रवासी तत्स्थानाद्द्वितीयस्थाने गत इति ब्रूयात् । यदि शुभनिर्गमो भवेद्यथेमे ⁝ ⁝ ⁝ तदा प्रवासी झटित्येवागच्छेत् । परंतु द्वितीय २ तृतीय ३ नवमगृहे ९ निर्गमो भवेद्यदि तथा चतुर्दश १४ गृहे प्रवेशी स्यात्तदा तु ध्रुवमेवागच्छेज्झटिति । व्यत्यये व्यत्ययं फलं वाच्यम् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

द्वादशगृहरूपिणं पश्येत् । यदि शुभनिर्गमो भवेत्तदा प्रवासी झटित्येवागच्छेत् । अशुभेऽप्येवम् । यदि प्रवेशी भवेत्तदा स प्रवासी किंचित्स्थिरतयाऽऽच्छेत् । यदि स्थिरो भवेत्तदा स प्रवासी प्रचलितुमिच्छति स्वयं नागच्छेत् । यदि द्विस्वभावो भवेत्तदा स प्रवासी प्रचलितुमिच्छति प्रचलिष्यति ।

अथ प्रवासी तस्मिन्नेव नगरे वर्त्तते वा नेत्यत आह ।

यदि मातरि मध्ये १, २, ३, ४, इमे रूपिणः स्यु ⁝ ☰ ⁝ ⁝-स्तदा प्रवासी तस्मिन्नेव नगरे वर्त्तते यदि नो स्युस्तदा नास्ति ।

अथ स प्रवासी प्रचलितो वा नेत्यत आह ।

तदा प्रथम १ नवम ९ पंचदश १५ गृहेषु पश्येत् । यदि शुभप्रवेशी भवेत्तदा प्रवासी कुशलत्वेनागच्छेत् । यदि सप्तमगृहे प्रवेशी भवेत्तदाऽद्यापि स प्रवासी तस्मात् स्थानात्प्रचलितो नास्ति । यदि प्रथम १ नवम ९ गृहे वा नवम ९ द्वादश १२ गृहे निर्गमो भवेत्तदा ध्रुवं स प्रवासी स्थित एव वर्त्तते । यदि पंचमगृहे निर्गमो भवेत्तदा स प्रवासी संप्रति प्रचलितुमिच्छति । अथ यदि । पंचदश १५ षोडश १६ गृहे प्रवेशी भवेत्तदा तस्मिन्दिने वा सप्तदिनमध्ये ह्यागच्छेत् । यदि रमलेष्विमे रूपिणः ⁝ ⁝ ⁝ स्युस्तदा प्रवासिनस्तस्य पत्रं समागच्छेत् ।

अथ प्रकारांतरमाह ।

यदि मृत्युभवने निर्गमो भवेत्तदा । प्रवासी तस्मान्नगराद्बहिः समागतो वाच्यः । स्वगृहं प्रति प्रचलितो यदि वाग्मी ⁝ त्रयोदशगृहे पतितः स्यात्तदा स प्रवासी प्रचलित्वा निवृत्तो जातो नात्र संदेहः ।

अथ तस्य प्रवासिनः कीदृश्यवस्था वर्त्तत इत्यत आह ।

प्रश्नरमलस्य सर्वबिंदुसमूहं कृत्वाष्ट ८ भिर्भजेत् । शेषांकान्प्रथमादिगृहेषु स्थापयेत् । यत्र संख्या पूर्णतां यायात्तं रूपिणं पश्येद्यदि

शुभो भवेत्तदा प्रवासिनोऽवस्था समीचीना वाच्या । यद्यशुभो भवेत्तदा प्रवासिनोऽवस्था निषिद्धतरा वाच्या ।

अथ यदि कोऽपि प्रवासिन आगमनार्थं पृच्छेदित्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । यदि प्रथम १ नवमै ९ कादश ११ गृहेषु शुभप्रवेशी भवेत्तदा प्रवासी झटित्येवागच्छेत् । यद्यशुभप्रवेशी भवेत्तदाऽद्यापि स प्रवासी नो प्रचलित इति ब्रूयात् । अथ यदि सप्तम ७ गृहे शुभंनिर्गमो भवेत्तदा स प्रवासी ततोन्यत्र कुत्रापि गंतुमिच्छति तदर्थं प्रचलितो मार्गे वर्त्तते इति वाच्यम् । यदि सप्तमगृहेऽशुभंनिर्गमो भवेत्तदा स प्रवासी तस्मात्पूर्वस्थाना-त्कुत्रापि बहुदूरं गंतुमिच्छति गमिष्यति च संप्रत्युद्विग्नचित्तः परि-खिन्नोस्ति । अथ यदि प्रथमगृहे निर्गमो भवेत्पुनः स एव यदि नवम ९ गृहे वा त्रयोदश १३ गृहेऽन्वादेशरूपं कुर्यादथवा त्रिषु १, ९, १३, निर्गमः समागतः स्यात्तथा पंचदश १५ षोडशयोः १६ प्रवेशी भवेत्तदा प्रवासी तस्मिन्नेव दिने समागच्छेत् ॥ नात्र संदेहः अथ बोधनः ⁝ आरः ⁝ सूरि ⁝ स्तीक्ष्णांशुः ⁝ यदिमे रूपिणः शुभगृहेषु समागताः स्युस्तदा प्रवासी झटित्येवागच्छेत् । अथवा तस्य पत्रिका समागच्छेन्नात्र संदेहः ।

अथ प्रवासी कस्यां दिशि वर्त्तत इत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । वह्निमुखादिसंज्ञाभिर्दिशा वाच्या एवं पलायितदासीदासप्रश्ने तथा पलायितचतुष्पदानां प्रश्ने दिशं ब्रूयात् । परंत्वत्र षष्ठगृहरूपिणो दिशा वाच्येति । शेषं तेषां गम-नागमनं प्रोषितवद्ब्रूयात् । नात्र संदेहः ।

अथ स प्रवासी कदागामिष्यतीत्यत आह ।

तदा सप्तमगृहरूपिण उद्भवा संख्या वाच्या तस्यागमने । अथ-वा पंचदश १५ षोडश १६ त्रयोदश १३ गृहरूपिणः पश्येत् । यद्येतेषां वह्निस्थाने समबिंदवः स्युः कोऽर्थो रेखारूपं स्यात्तदा

तस्मिन्दिने वा द्वित्रिदिनमध्ये प्रवासिनश्चागमनं ब्रूयात् । यदि भूमिस्थाने तेषां विषमबिंदवः स्युः कोऽर्थः । केवलबिंदुरेव स्यात्तदा प्रश्नदिनात्सप्तदिनमध्ये प्रवासिन आगमनं वाच्यम् । अथ यदि वह्निस्थाने विषमबिंदवस्तथा भूमिस्थाने समबिंदवः स्युस्तदा मासमध्ये प्रवासिन आगमनं ब्रूयात् । अथ यदि तेषामाद्यंतावपि विषमबिंदुयुक्तौ स्यातां तदा तस्मिन्मुहूर्ते वा तस्मिन्दिने वा सप्तदिनमध्ये प्रवासिन आगमनं वाच्यम् । यदि तेषां १२, १५, १६ आद्यन्त समबिंदुयुतौ स्यातां तदा मासस्य मध्ये वा वर्षमध्ये प्रवासिन आगमनं ब्रूयात् ।

अथ ग्रंन्थांतरमते प्रवासी झटित्येवागमिष्यति वा नेत्यत आह ।

यदि चोष्णगु ⁞ रूपी प्रश्नरमलेषु बहुरूपं कुर्यात्तदा प्रवासी स्थानांतरं प्रति व्रजेत्स कस्मिन्स्थाने स्थिरत्वेन नो तिष्ठेत् । यदि शीतांशुः ⁞ रमलेषु बहुरूपं कुर्य्यात्तदा तदेव फलं ब्रूयात् । अथ यदि चतुर्थे चतुर्दशगृहे च शुभो भवेत्संबंधश्च पंचदश १५, गृहरूपिणां सह तदा प्रवासी झटित्येवागच्छेत् । यदि चतुर्दशगृहरूपी मातृगृहेष्वन्वादेशरूपं कुर्यात्तदा प्रवासी झटित्येवागच्छेत् । नात्र संदेहः ।

अथ स वासी लक्ष्मीवान्वर्त्तते वा नेत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येद्यदि प्रवेशी वा स्थिरो भवेत्तदा स प्रवासी लक्ष्मीवान्वर्त्तते । यदि निर्गमो वा द्विस्वभावो भवेत्तदा स प्रवासी दरिद्रो वाच्यः । अथवा दशमः १०, गृहे यदि तीक्ष्णांशु ⁞ रूपी भवेत्तथा द्वितीयगृहे सूरी ⁞ रूपी भवेत्तदा स प्रवासी लक्ष्मीवान् वर्त्तते । तथा प्रसन्नरूपोऽस्त्यथ यद्येतौ विहाय शेषरूपिणः समागताः स्युस्तदा प्रवासी दरिद्र एव वाच्यः ।

अथ प्रकारांतरमाह ।

अष्टमगृहरूपिणा चतुर्दशगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नं

पश्येत् । यदि प्रवेशी भवेत्तथा प्रश्नरमलेषु कुत्रापि समागतः स्यात्तदा स प्रवासी लक्ष्मीवान्वर्त्तते । एष प्रकारो बहुपरीक्षितो ज्ञेयः । नात्र संदेहः ।

अथ प्रवासी दुःखान्वितो वर्त्तत वा नेत्यत आह ।

यदि द्वादशगृहरूपी षष्ठगृहेऽन्वादेशरूपो भवेत्तदा स प्रवासी क्लेशान्वितो वर्त्तत इति ब्रूयात् । तथाष्टमगृहे यद्यन्वादेशरूपं कुर्या-त्तदापि प्रवासी क्लेशान्वितो वाच्यः । कदापि तस्माद्रोगान्न मोक्ष्यते अपि तु मृत्युं प्राप्नुयात् । अथ यदि चतुर्दशगृहे १४, मंदगो ⁞ भवे-त्तदा स प्रवासी बद्धगृहे दृढबंधनैर्बद्धोऽस्ति नात्र संदेहः ।

अथ स प्रवासी सस्त्रीको वर्त्तते वा एकाकीत्यत आह ।

तदा त्रयोदश १३, गृहरूपिणं पश्येद्यदि शुभो भवेत्स एव-यदि सप्तमगृहेऽन्वादेशरूपं कुर्यात्तदा स प्रवासी तत्र सस्त्रीको वर्त्तत इति ब्रूयात् । यद्येवं न स्यात्तदा स एकाकी वाच्यः ।

अथ प्रवासिनः कीदृश्यवस्था वर्त्तत इत्यत आह ।

तदा सप्तमगृहरूपिणं पश्येत् । यदि शुभो भवेत्तदा प्रवासिनो-ऽवस्था समीचीना वाच्या । यद्यशुभो भवेत्तदा तस्याऽवस्था निषि-द्धतरा वाच्या । यदि स प्रवेशी वा स्थिरो भवेत्तदा स प्रवासी तस्मिन्नेव स्थले वर्त्तते प्रचलितो नास्ति अथ यदि निर्गमो वा द्विस्वभावः स्यात्तदा स प्रवासी तस्मात्स्थानात्प्रचलित इति ब्रूयात् । नात्र संदेहः ।

अथ स प्रवासी झटित्येवागमिष्यति वा नेत्यत आह ।

तदा तृतीय ३ नवम ९ चतुर्दश १४ गृहेषु पश्येत् । यदि तत्र निर्गमः समागतः स्यात्तदा प्रवासी झटित्येव समागच्छेत् । यदि तेषु गृहेषु प्रवेशी स्यात्तदा स्थिरतया समागच्छेत् । द्विस्वभावश्चे-त्तदा तस्यागमने द्विविधत्वं वाच्यम् । यदि स्थिरः स्यात्तदा तस्या-गमने स्थिरत्वं ब्रूयात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तृतीयगृहरूपिणा नवमगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नं पश्येत् । यदि स मातृगृहेषु समागतः स्यात्तदा प्रवासी झटित्येवागच्छेत् । यदि न समागतः स्यात्तदा स्थिरतया समागच्छेत् ।

अथ केनापि सार्द्धं साटिं करोमि सम्यग्वर्त्तते वा नेत्यत आह ।

तदा प्रथमगृहप्रभृतिपंचदशगृहपर्यंतानां रूपिणां विषमरूपा केवलबिन्दवो गणनीयास्तेषां समूहं कृत्वा द्वाभ्यां भजेत् । यद्येकशेषो भवेत्तदा तेन सार्द्धं साटीकृते बहुधा फलप्राप्तिर्भविष्यतीति ब्रूयात् । यदि भक्ते शून्यं तिष्ठेत्तदा शून्यं फलं वाच्यम् ।

अथ प्रकारांतरमाह ।

प्रथमगृहरूपिणा सप्तमगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नं पश्येत् । यदि स प्रवेशी भवेत्पुनः स एव दशमगृहे समागतः स्यात्तदा साटीकरणं बहुसमीचीनं वर्त्तते । अत्रावश्यकं रूपिणः प्रवेशित्वं निर्गमत्वं स्थिरत्वं द्विस्वभावत्वं च तथाऽन्वादेशरूपं कुर्यात्केंद्रपणफरापोक्लिमगृहे ध्रुवमेतान् विलोकयेत्तदा प्रश्नस्तथ्यतां यायात् । नात्र संदेहः ।

अथ बहवो जना मया सह साटिं कर्तुमिच्छन्ति तन्मध्ये कः सत्यवादी येन सुव्यवहारः स्यादित्यत आह ।

तत्र प्रथमपुरुषस्य सप्तमगृहं द्वितीयस्याष्टम ८ गृहं तृतीयस्य ९ नवमं चतुर्थस्य दशम १० तदा प्रत्येकगृहे पश्येत् । यस्मिन्गृहे शुभप्रवेशी भवेत्स एव पुरुषः सत्यवादी तेन सार्द्धं साटीकरणं समीचीनं यत्राशुभनिर्गमो भवेत्तदा सत्यवादी नास्ति तेन सार्द्धं साटीकरणमसमीचीनतरमित्यर्थः । नात्र संदेहः ।

अथ कश्चित्कलहं कृत्वा पृच्छेत्तेन मम कलहः सत्यमार्गेण वा नेत्यत आह ।

यदि प्रष्टा कलहकारको भवेत्तदाऽष्टमगृहे पश्येद्यद्यशुभो भवे-

त्तदा स मिथ्यामार्गेण द्रव्यं ग्रहीतुमिच्छतीति भावः कोऽर्थः परांशं कलहबलेन स्वांशं ग्रहीतुमिच्छतीति भावः। अथ कोऽप्यन्यः प्रष्टा सार्द्धं कलहं कृत्वा पुनस्तदर्थं प्रष्टा यदि पृच्छेत्तदा तत्पुरुषगृहा-दष्टमगृहं पश्येत्। यद्यशुभो भवेत्तदा स द्रव्यग्रहणार्थं मिथ्यारूपं कलहं कृत्वापरांशं ग्रहीतुमिच्छतीति भावः। यदि शुभो भवेत्तदा स सत्यरूपं कलहं करोति स्वांशग्रहणार्थं नात्र संदेहः।

इति श्रीरमलरहस्ये सारसंग्रहे भयभंजनशर्मकृतौ सप्तमगृहस्य प्रश्नकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अथाष्टमोऽध्यायः।

अस्मिन्नष्टमाध्यायेऽष्टमगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते। तत्रादावष्टमगृहस्य विचारांशमाह। साधारणभयस्य मार्गे द्विविध-भयस्य विचारः। मृत्योर्विचारः। हन्यमानस्य विचारस्तथा घातकपुरुषस्य विचारांशो हालाहलस्य च। जलमग्नस्य विचारांशः। प्रवासिनो द्रव्यस्य। चौरहृतवस्तुनो विचारांशः। मृत्युपरोक्षेऽ परोक्षे द्रव्यादीनां भागयोग्यस्य विचारः। ऋणप्रसंगेन द्रव्यस्य तथा ऋणस्य विचारः। स्त्रीद्रव्यस्य विचारः। यस्य परोक्षे द्रव्या-दीनां भागयोग्यो न कश्चिद्भवेत्तस्य द्रव्याणि पृथ्वीपतिकोशयोग्यानि भवंति लोकभाषायां वैतलेमाल इत्युच्यते तस्य विचारः। भूमौ स्थापितस्य द्रव्यस्य विचारः। मित्रगृहस्य विचारः पितुर्गृहस्य विचारः। यद्वस्तु नष्टं क्षीयमाणं च स्यात्तस्य विचारः। उपद्रवा-धिक्यस्य विचारः। शत्रुमित्रत्वकरणस्य। येनौषधेन शरीरं नष्टं स्यात्तस्य विचारः। इत्यादिविचारमष्टमगृहे विचारयेत्। अथ यदि भयमृत्युऋणार्थं तथा मृत्युपरोक्षे स्वांशद्रव्यार्थं प्रवासिनो द्रव्यार्थे च कोपि पृच्छेत्तदा प्रश्नरमलस्याष्टमगृहे पश्येत्। यदि शुभनिर्गमो भवेद्यथा इमौ ⁝ ⁝ तदा भयक्लेशाभ्यामुच्येत। कोऽर्थः निर्भयो भवेत्। प्रवासिनो द्रव्यं नो प्राप्नुयात्। तथा मृत्युपरोक्षे

स्वांशं न प्राप्नुयात् । यदि मृत्युप्रश्नं कुर्यात्तदा तस्य मृत्युर्वृद्धावस्थायां भविष्यतीति ब्रूयात् । परंतु तु सुगममार्गेण । अपरसर्वान्भोगान्भुक्त्वा संतुष्टरूपेण वृद्धावस्थायां मृत्युं प्राप्नुयात् । अथ च यदि शुभानिर्गमो भवेद्यथेमौ ⚍ ⚍ तदा भयान्निर्भयो भवेत् । यदि प्रवासिनो द्रव्यार्थं पृच्छेत्तदा नो प्राप्नुयात् । यदि मृत्युपरोक्षे स्वांशप्राप्त्यर्थं पृच्छेत्तदा स्वांशमपि न प्राप्नुयात् । यदि मृत्युप्रश्नं कुर्य्यात्तदा तस्य मृत्युर्युवावस्थायां भविष्यतीति ब्रूयात् । परंतु तस्य काचिदपि श्रद्धा पूर्णतां नो यायान्मध्य एव मृत्युः स्यात् । अथ यदि शुभप्रवेशी भवेद्यथेमे ⚍ ⚍ ⚍ तदा भयप्रश्ने भयाधिक्यं स्यात् । परंतु परिणामे शुभं किंचिदनिष्टं नो भवेत् । यदि प्रवासी द्रव्यार्थं वा मृत्युपरोक्षे स्वांशार्थं पृच्छेत्तदा द्रव्यमपि प्राप्नुयात् । सुगममार्गेण।यदि मृत्युप्रश्नं कुर्यात्तदा बहुकाठिन्यं क्लेशं च प्राप्य महता कष्टेन मृत्युं प्राप्नुयात् । परंतु तस्य कदाचिदपि श्रद्धा पूर्णतां नो यायात् । अथ यद्यशुभप्रवेशी भवेद्यथायं ⚍ तदा भयप्रश्ने भयाधिक्यं भवेत् । यदि संयमेन तिष्ठेत्तदा सदा दुःखन्नो प्राप्नुयात् । यदि प्रवासी द्रव्यार्थं पृच्छेत्तदा काठिन्येन तत्प्राप्नुयात् । यदि मृत्युपरोक्षे स्वांशार्थं पृच्छेत्तदापि स्वांशं कष्टेन काठिन्येन च प्राप्नुयात् । यदि मृत्युप्रश्नं कुर्यात्तदा क्लेशं बहुतरं प्राप्य मृत्युं प्राप्नुयात् । अथ यदि शुभस्थिरो भवेद्यथेमे ⚍ ⚍ ⚍ तदा भयप्रश्ने भयं भवेत् । परंतु परिणामे शुभम् । यदि चात्र रोगिणः प्रश्नं कुर्यात्तदा बहुतरं भयं वाच्यं यथा प्रागुक्तं मया स्पष्टतरेण यदि प्रवासिनो द्रव्यार्थं पृच्छेत्तदा तस्य प्राप्तौ स्थिरत्वं वाच्यम् । एवं परोक्षे मृत्यौ स्वांशप्राप्तावपि फलं ब्रूयात् । यदि कोऽपि मृत्युप्रश्नं कुर्यात्तदा महदुद्विग्नचित्तपरिखेदेन मृत्युं प्राप्नुयात् । परंतु काचिदपि श्रद्धा पूर्णतां नो यायात् । मनसि स्पृहैव तिष्ठेत् । अनायासेन मध्य

एव मृत्युं प्राप्नुयात् । तथा प्रष्टा व्यतीतकार्येणोद्विग्नचित्तो भवेत् । अथ यदि चाशुभस्थिरो भवेद्यथायं $\begin{smallmatrix}-\\ \circ\\ -\\ -\end{smallmatrix}$ तदा भयादिभ्यः संयमं कुर्यात्तथात्मानं रक्षेत् । तद्वयं त्विदं प्रष्टुः शरीराद्रुधिरप्रवाहः स्यात् यदि प्रवासिनो द्रव्यार्थं, परोक्षमृत्युस्वांशग्रहणार्थं च पश्येत्तदा स्थिरत्वं वाच्यम् । परिणामे नो प्राप्नुयात् । यदि मृत्युप्रश्नं कुर्यात्तदा तस्मादपि बहुनिषिद्धतरं फलं वाच्यम् । शुभद्विस्वभावे प्रोक्तं मया संप्रति । अत्र तदाधिक्यं वा तस्य शरीरे कुष्ठादिरोगविकारो भूत्वा काठिन्येन च मृत्युं प्राप्नुयात्परं तु महता कष्टेनोद्विग्नचित्ततया परिखेदेन च मृत्युं प्राप्नुयात् । तथानायासेन यथा शिरश्छेदेन वा कुतश्चित्पतनेन वा नात्र संदेहः । अथ यदि शुभद्विस्वभावो भवेद्यथेमौ $\begin{smallmatrix}\circ\\ \circ\\ \circ\\ \circ\end{smallmatrix}\ \begin{smallmatrix}\circ\\ \circ\\ -\\ \circ\end{smallmatrix}$ तदा भयप्रश्ने भयान्निर्भयो भवेत्पुनरपि भये पतेत् । परंतु किंचिदनिष्टं नास्ति परिणामे प्रष्टुः शुभत्वं वाच्यम् । यदि प्रवासिनो द्रव्यार्थं वा परोक्षमृत्यौ स्वांशप्रात्यर्थं पृच्छेत्तथा तद्द्रव्यमध्ये किंचित्प्राप्नुयात् किंचिन्न प्राप्नुयात् परंतु स्वायत्त्येन स्वेच्छया च । यदि मृत्युप्रश्नं कुर्यात्तदा महता कष्टेन काठिन्येन च मृत्युं प्राप्नुयात् । यथा वारंवारमुत्थितपतनेन पुनःपुनः क्लेशेन वा मृत्युमिति । अपरं तस्य मनसि बहुतरा श्रद्धा लग्नैव तिष्ठेत् कापिदपि श्रद्धा पूर्णतां यायात् । मध्य एव मृत्युं प्राप्नुयादिति भावः । अथ यदि चाशुभद्विस्वभावो भवेद्यथेमौ $\begin{smallmatrix}\circ\\ -\\ -\\ \circ\end{smallmatrix}\ \begin{smallmatrix}\circ\\ -\\ \circ\\ \circ\end{smallmatrix}$ तदा भयप्रश्ने भयान्निर्भयो न स्यात् । तस्मात्संयमं कुर्यात् । नियतेंद्रियस्तिष्ठेत् । यदि प्रवासिनो द्रव्यार्थं वा परोक्षमृत्यवे स्वांशप्राप्त्यर्थं पृच्छेत्तदा तद्द्रव्यमध्ये किंचित्प्राप्नुयात् किंचिन्न परं त्वस्वायत्त्येनानिच्छया च । यदि मृत्युप्रश्नं कुर्यात्तदा तस्मादपि बहुनिषिद्धतरं फलं वाच्यम् । यदशुभद्विस्वभावे प्रोक्तं मया संप्रति । अत्रैतदाधिक्यं तस्य शरीरं कुष्ठादिरोगैर्विकृतं भूत्वा महता कष्टेन काठिन्येन च मृत्युं प्राप्नुयात् । नात्र संदेहः ।

अथ तस्य मृत्युः केन कारणेन भविष्यतीति प्रश्न आह ।

तदाष्टमगृहरूपिणोऽन्वादेशरूपं पश्येत् । यस्मिन्गृहेऽन्वादेशरूपो भवेत्तद्गृहे विचारांशः कर्त्तव्यस्तेनैव कारणेन मृत्युर्भविष्यतीति ब्रूयात् तथाहि यदि प्रथमगृहे सोऽन्वादेशरूपो भवेत्तदा तेन कारणेन यः शरीर उत्पन्नो भवति कोर्थः स्वशरीरकृतकार्य्यसंबंधकारणेन मृत्युं प्राप्नुयात् । यदि द्वितीयगृहे भवेत्तद्द्रव्याणां कारणेन मृत्युं प्राप्नुयात् । यदि द्वितीयगृहे भवेत्तदा सहायदातॄणां कारणेन मृत्युं प्राप्नुयाद्यदि तृतीयगृहे भवेत्तदा गोत्रकुटुंबिनां कारणेन चाज्ञतयेतस्ततः प्रचलनादि कारणेन मृत्युं प्राप्नुयात् । यदि चतुर्थगृहे भवेत्तदा पितुः कारणेन वा भूमिकारणेन वा भित्तितलीस्थिति कारणेन मृत्युं प्राप्नुयात् । यदि पंचमगृहे सोऽन्वादेशरूपो भवेत्तदा मित्रत्वकारणेन वा संतानकारणेन मृत्युं प्राप्नुयात् यदि षष्ठगृहे भवेत्तदा रोगिणां कारणेन वा दासीदासयोः कारणेन वा शोककारणेन वा पशूनां व्याघ्रादीनां कारणेन वा शोकरूपं मृत्युं प्राप्नुयात् । यदि सप्तमगृहे भवेत्तदा स्त्रीणां कारणेन वा मार्गाद्वियोगानां कारणेन वा ऋणकारणेन वा दुष्टानां कारणेन वा मृत्युं प्राप्नुयात्।यदि चाष्टमगृहे भवेत्तदा परोक्षस्वांशप्राप्तकरणेन मृत्युं प्राप्नुयात् । अत्र केचिद्वदंति तमेवाष्टमगृहे रूपिणं पश्येत्तस्य गृहं कुत्र वर्त्तते तद्गृहविचारांशकारणेन मृत्युं प्राप्नुयात् । यदि नवमगृहे सोऽन्वादेशरूपो भवेत्तदा प्रवासकरणेन वा स्वधर्ममार्गकारणेन वा स्वप्नकारणेन मृत्युं प्राप्नुयात् । यदि दशम १० गृहे भवेत्तदा मातॄणां कारणेन वा पृथ्वीपतीनां तेजस्त्वकारणेन वा यत्कार्यं धर्मनिरीक्षकस्यज्ञया भवेत्तन कारणेन मृत्युं प्राप्नुयात् । यदि चैकादशगृहे भवेत्तदा मित्राणां कारणेन पुरुषो मृत्युं प्राप्नुयात् । तथा ये बालका भवेयुस्तेषां कारणेन स्त्रीचेन्मृत्युं प्राप्नुयात् । तथा बालका यदि द्वादशगृहे १२

भवेयुस्तदा दुष्टानां कारणेन वा वधसंभवकारणेन बद्धगृहकारणेन वा वाय्व्रादिकारणेन वा ये जीवा दंडं कृत्वा भक्षयंति तेषां कारणेन यथा व्याघ्रवृकचित्रकसिंहादयः । नात्र संदेहः ।

अथ प्रष्टा ऋणग्रहणार्थं दानार्थं वा पृच्छतीत्यत आह ।

यदि प्रष्टा कस्माच्चिदृणग्रहणार्थं पृच्छेत्तदाऽष्टमगृहे पश्येद्द्वि-तीयगृहे च । यदि चाष्टमगृहे निर्गमो भवेत्तथा द्वितीयगृहे प्रवेशी तदा यस्मादृणमिच्छति प्रष्टा स दास्यति दापयेद्वा ऋणं तथा प्रष्टा गृह्णीयात् । ग्रहीष्यति वा । यद्वा । यद्यष्टमगृहरूपी द्वितीयगृहेऽन्वा-देशरूपं कुर्यात्तथा चतुर्दशगृहे प्रवेशी भवेत्तदापि तदेव फलं ब्रूयात् । अथ यद्यष्टमगृहे प्रवेशी द्वितीयगृहे निर्गमो भवेत्तदा यस्मात्प्रष्टा ऋणं ग्रहीतुमिच्छति स ऋणं नो दापयेत्तथा प्रष्टापि नो गृह्णीयात् । अथ यदि द्विस्वभावो भवेद्वा स्थिरो भवेत् । द्वितीये चाष्टमे तदा रूपिणामनुक्रमेण फलं वाच्यम् । द्विस्वभावे द्विविधत्वं स्थिरे स्थिरत्वं वेति । अत्र केचिद्वदंति । द्विस्वभावस्य फलं निर्गमवत् । स्थिरस्य फलं प्रवेशिवदिति भावः । नात्र संदेहः ।

अथ ग्रन्थांतरमाह ।

ग्रन्थान्तरमतेन प्रवासिनो द्रव्यार्थमृणग्रहणार्थं वाऽह । तदा प्रथमरूपिणमष्टमगृहरूपिणा गुणयेत्ताभ्यामुत्पन्नं पश्येत् । यदि प्रवेशी भवेत्तथा चतुर्दश १४ गृहेऽपि प्रवेशी समागतः स्यादथवा ताभ्यामुत्पन्नो विधु ⁝ रूपी भवेद्वाशुभद्विस्वभावः स्यात्तदा प्रवा-सिनो द्रव्यं तथा ऋणं प्राप्नुयात् । नान्यथा तादृशं प्रवेशिनो द्रव्यं च प्राप्नुयात् । अथ यदि प्रष्टारं कश्चिदृणं दातुमिच्छेत्तदा द्वितीयगृहे वाष्टमगृहे प्रवेशी तथा प्रष्टा ऋणं दापयेत् । स ग्राहक ऋणं गृह्णीयात् । यदि द्वितीयगृहं प्रवेशी तथाष्टमगृहे निर्गमो भवेत्तदा प्रष्टा ऋणं नो ददेत । तथा ग्राहकोऽपि नो गृह्णी-यात् । यदि द्वावपि शुभौ स्यातां तदा तदृणदाने फलं प्राप्नुयात् ।

यद्यशुभौ स्यातां तदा तदृणदाने क्षीयमाणत्वं भवेत । नात्र संदेहः । एवं फलं प्रवासिनो द्रव्यप्रश्ने तथापरोक्षमृत्यौ स्वांशप्राप्तिप्रश्ने च ब्रूयादसंशयम् ।

अथ ग्रन्थान्तरसम्मतं प्रवासिद्रव्यार्थं स्वांशप्राप्त्यर्थं च प्रश्न आह ।

तदाष्टमगृहे पश्येत् । यदि शुभप्रवेशी भवेत्तदा प्रवासिनो द्रव्यं सर्वं प्राप्नुयात्तथा स्वांशमपि प्राप्नुयात् । परंतु स्वायत्त्येन सुगममार्गेण च । यद्यशुभप्रवेशी भवेत्तदा प्रवासिनो द्रव्यं तथा स्वांशमपि प्राप्नुयात् । परंत्वस्वायत्त्येन कष्टकाठिन्याभ्यां । तथा प्रष्टा ऋणमयो भवेत् । परंतु स्वायत्त्येन यदि शुभनिर्गमस्तदा प्रवासीनो द्रव्यं तथा स्वांशं च प्राप्नुयात् । ऋणवान्न भवेत् । स्वयमेव त्यक्तं कुर्यात् । तदा तदृणं झटित्येव दद्यात् । परन्तु स्वायत्त्येन सुगममार्गेण । यदि चाशुभनिर्गमो भवेत्तदा प्रवासिनो द्रव्यं तथा परोक्षमृत्यौ स्वांशं च नो प्राप्नुयात् तेषु क्षीयमाणत्वं पश्येत् । पुनः प्रष्टा त्यक्तमपि नो कुर्यात् । परंतु स्वायत्त्येन अथ यदि शुभस्थिरो भवेत्तदा प्रवासिनो द्रव्यं तथा तत्स्वांशद्रव्यं स्वस्थान एव वर्त्तते । तद्द्रव्यं सुगममार्गेण प्रष्टा प्राप्नुयात् । परंतु स्थिरतया तथा तस्य ऋणमपि दद्यात् ।तदृणं नाधिकं नातिन्यूनं भवेत्कोऽर्थो यथा स्थितमेव तिष्ठेत्परिणामे दद्यात् । अथ यद्यशुभस्थिरो भवेत्तदा प्रवासिनो परोक्षे मृत्यौ स्वांशं च किंचित्प्राप्नुयात् । प्रष्टा बहुपरिश्रमान्वितो भवेत् । तथा ऋणवान्स्यात् । तदृणं बहुदिनानि तिष्ठेत् । परंतु तदृणं नाधिकं नातिन्यूनं भवेत् । कोऽर्थो यथास्थितमेव तिष्ठेदस्वायत्त्येन वा प्रष्टुः किंचिदनिष्टं भवेत् । अथ यदि शुभद्विस्वभावो भवेत्तदा प्रवासिनो द्रव्यं तथा मृत्योः पश्चात्स्वांशं च किंचित्प्राप्नुयात् परंतु स्वायत्त्येन सुगममार्गेण प्रष्टुः शुभत्वं वाच्यम् । अपरं प्रष्टा ऋणं किंचिद्दद्यात् । किंचिन्नो दद्यात् । तदृणं कोऽप्यन्यो गृह्णीयात् ।अथ यदि चाशुभद्विस्वभावो भवेत्तदा प्रवासिनो द्रव्यं तथा

तत्स्वांशं च किंचिदपि नो प्राप्नुयात् । तथा प्रष्टुः किंचिदनिष्टं भवेत् । अपरं प्रष्टा परिश्रमान्वितो भवेत् प्राक् तथा तेनापि सार्द्धं कलहं कुर्यात्प्रष्टा मृत्योः पश्चात्स्वांशप्राप्त्यर्थम् । परंतु स्वायत्त्येन । पुनस्तस्मिन्नेव द्रव्ये प्रष्टा स्तेयं कुर्यात् । अन्यो वा कोऽपि स्तेयेन गृह्णीयान्नात्र संदेहः ।

अथ मम दारिद्रं कदापि गमिष्यति वा नेत्यत आह ।

तदाऽष्टमगृहे प्रथमगृहे च पश्येत् । यद्युभयगृहे शुभनिर्गमो भवेत्तदा प्रष्टुर्निकटे दरिद्रता न तिष्ठेत् तथा किंचिदुपद्रवादिकं नो तिष्ठेत् । यद्यशुभानिर्गमो भवेत्तदा यस्यामवस्थायां प्रष्टा पतितो वर्त्तते ततो महता कष्टेन परिश्रमेण च मुच्येत । अथ यदि तयो-र्गृहयोर्म्मध्ये शुभप्रवेशी भवेत्तदा स्वल्पमात्रं भयं वर्त्तते । परंतु कष्टं परिश्रमश्च नो भवेत् । यदि चाशुभप्रवेशी भवेत्तदा भयप्रश्ने बहुतरं भयं वाच्यम् । तथा दरिद्रता बहुतरोपद्रवादिकं च तथा वक्त-व्यम् । अत्र यदि चतुर्थे ४, गृहे लोहितो ⁝ भवेत्तथा तयोर्गृहयो १, ८, मध्येऽशुभो भवेत्तदा घातस्य भयं वर्त्तते शिरश्छेदादिभिः । अथवा प्रष्टारं तावत्कोऽपि हन्याद्यावद्रुधिरैः परीतो भवेत्प्रष्टा । यदि चतुर्थगृहे चारो ⁝ भवेत्तथा तयो १, ९ र्म्मध्येऽशुभस्तदा तदेव फलं वाच्यम् नात्र संदेहः ।

अथ कश्चिद्विशेष उच्यते ।

यदि प्रथमगृहरूपी वाऽष्टमगृहरूपी षष्ठगृहे ६ वा द्वादश १२, गृहेऽन्वादेशरूपं कुर्यात्तदा रोगो बहुतरो भवेत्प्रष्टुः शरीर अपरं स एवाऽन्वादेशश्चतुर्थगृहे चेत्तदा बहुत्तरं नेष्टं फलं वाच्यम् । अथ यदि केंद्रगृहेषु शुभाः स्यु स्तथाष्टमगृहेऽशुभो भवेत्तदा भयकष्टपरिश्र-मेभ्यो मुच्येत । अथ यदि प्रश्नं स्त्रिया द्रव्यार्थं कुर्याद्वाऽगार्द्धयोग्य-पुरुषस्य वा प्रश्नं कुर्यात्तदाष्टमगृहे पश्येत् । यदि शुभप्रवेशी भवे-

त्तदा तद्द्रव्यं प्राप्नुयात्प्रष्टा । तथा स्त्रियाः समीपभागार्द्धयोग्य-पुरुषस्य समीपे च बहुतरं द्रव्यं वर्त्तत इति विज्ञेयं पञ्चमगृहे निर्गमो-भवेत्तदा तासां तेषां समीपे किंचिदपि द्रव्यं नास्तीति ब्रूयात् । अथ यदि चाष्टमगृहरूपी प्रथमगृहेऽन्वादेशरूपं कुर्यादथवा द्वितीयगृह-रूपी वा चतुर्दशगृहरूपी वा पंचमगृहरूपी कुत्रापि रमलेष्वन्वादेश-रूपं कुर्यात्तदा तस्मिन्द्रव्यमध्ये किंचित्प्राप्नुयात्प्रष्टा यदि चाष्टम-गृहे रूपी कुत्राप्यन्वादेशरूपी नो भवेत्तदा तद्द्रव्यस्य मध्ये किंचिदपि न प्राप्नुयात्प्रष्टा । अथ यदि प्रवासिनो द्रव्यार्थं वा परोक्ष-मृत्यौ स्वांशप्राप्त्यर्थं पृच्छेत्तदाऽनेनैव प्रकारेण फलं ब्रूयात् । अथवाष्टमगृहरूप्यन्वादेशरूपो नो भवेत्तदा तदेव फलं ब्रूयात् । अत्रावश्यकमष्टमगृहरूपिणो निर्गमत्वं प्रवेशत्वं च पश्येत् ।

इति श्रीरमलरहस्ये सारसंग्रहे भयभञ्जनशर्मकृतावष्टमगृहस्य प्रश्नकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

अस्मिन्नवमाध्याये नवमगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादौ नवमगृहविचारांशमाह । दूरगतप्रवासस्य विचारः । मार्गस्य विचारः । स्थापितवस्तुनः । स्वप्नफलस्य विचारः । तथा साधारण प्रवासस्य । पथिकस्य कुशलादिकं विचारयेत्प्रवासिनो वर्त्तनस्य विचारः । स्वधर्ममार्गस्य विचारः । यानि दूरकुटुंबानि वर्त्तंते श्यालिकाश्यालभद्रप्रभृतीनि तेषां विचारः । दृष्टिलग्नमित्राणां विचारः । पितृरोगस्य प्रमाणवचनस्य विचारः । देवदूतवचनस्य दैवीवार्त्ताया विचारः । ईश्वरस्याज्ञया मनसि या भाविनी वार्त्ता आयाति तस्या विचारः । संध्यावंदनस्य तथा न्यायकारकपुरुषैः सार्द्धं कलहकरणस्य विचारः । पुस्तकानामध्ययनस्य विचारः । इत्यादि विचारं नवमगृहे विचारयेत् । अथ यदि कश्चित्प्रवास-विद्यास्वप्नधर्म्ममार्गाणां प्रश्नं कुर्यात्तदा नवम ९ गृहे पश्येत् । यदि

शुभनिर्गमो भवेद्यथेमौ ⁝ ⁝ तदा प्रवासप्रश्ने प्रवासः स्यात्कृते प्रवासे विश्रामं सुखं च पश्येत् । अध्ययनप्रश्ने विद्याभ्यासो न भविष्यति । धर्ममार्गप्रश्ने स्वधर्मविद्यायां तत्परो भवेत् । स्वप्नफलेषु किंचिदपि तस्य स्वप्नस्य फलं न प्राप्नुयात् । सत्स्वप्नो मिथ्या भवेत् । अथ यद्यशुभनिर्गमो भवेद्यथेमौ ⁝ ⁝ तदा प्रवासप्रश्ने प्रवासः स्यात् । परंतु तत्र गते किंचिदपि फलं न प्राप्नुयात् । विद्याप्रश्ने विद्यात्यागं कुर्यात् । स्वप्नप्रश्ने स्वप्नः सत्यो नो भवेत् । अथ यदि शुभ प्रवेशी भवेद्यथेमे ⁝ ⁝ ⁝ तदा प्रष्टा स्वायत्त्येन स्वेच्छया प्रवासकरणं त्यजेत्कस्मात् । प्रवासकरणे काठिन्यं विजानीयादिति कारणात् । परं तु यदि प्रवासं कुर्यात्तदा बहुसमीचीनं स्यात्तत्र गते सति द्रव्यादिलाभः स्यात् । विद्याप्रश्ने विद्या पठनीया । स्वप्नप्रश्ने तत्स्वप्नं सत्यं भवेत् । अथ यद्यशुभप्रवेशी भवेद्यथाऽयं ⁝ तदा प्रवासिप्रश्ने प्रवासिनोऽवस्था निषिद्धतरा वाच्या। प्रष्टा प्रवासं न कुर्याद्यदा प्रवास एव न स्यात् ॥ विद्याप्रश्ने विद्यां नो पठेत् । स्वप्नप्रश्ने स्वप्नसत्यो नो भवेत् । अथ यदि शुभस्थिरो भवेद्यथेमे ⁝ ⁝ ⁝ तदा प्रवासकरणे स्थिरत्वं वाच्यम् । परंतु यायात्तर्हि तत्र गते समीचीनं स्यात् । विद्याप्रश्ने विद्या पठनीया । स्वप्नफले तु तत्स्वप्नं सत्यं कथयेत् । अथ यदि चाशुभस्थिरो भवेद्यथाऽयं ⁝ तदा प्रवासप्रश्ने प्रवास एव न स्यात् । यदि चेत्स्यात्तदा मार्गे चोरादिभयं भवेत् । प्रवासकरणं नेष्टमिति स्वप्नप्रश्ने स्वप्नः सत्यो न भवेत् । विद्याप्रश्ने विद्यां नो पठेत् । अथवा विद्या पठितापि नायात् । अथ यदि शुभद्विस्वभावो भवेद्यथेमौ ⁝ ⁝ तदा प्रवासः स्यात्तत्र गते सति झटित्येव च निवृत्तो भवेत्स्वगृहं प्रति । परंतु स्वायत्त्येन स्वेच्छया च । विद्याप्रश्ने विद्यां पठेत् । स्वप्नप्रश्ने स्वप्नः सत्यो भवेत् । अथ यदि चाशुभद्विस्वभावो भवेद्यथेमौ ⁝ ⁝ तदा प्रवासस्यावस्था निषिद्धतरा वाच्या । प्रवासो न स्यात् । यदि चेत्प्रवासं कुर्यात्तदा

तत्र गते सति फलं किंचिदपि न प्राप्नुयात्। विद्याप्रश्ने विद्यां नो पठेत्। स्वप्नप्रश्ने तु स स्वप्नः सत्यो नो भवेत्। नात्र संदेहः।

अथ प्रवासो भविष्यति वा नेत्यत आह ।

तदा प्रथम १ नवम ९ त्रयोदश १३ गृहेषु पश्येत् । यदि निर्गमाः समागताः स्युस्तदा ध्रुवं प्रवासो भविष्यतीति ब्रूयात् । यदि प्रथमगृहस्वामी चापोक्लिमगृहेषु ३, ६, ९, १२ समागतः स्यात्तथा नवमगृहस्वामी केंद्रगृहेषु १, ४, ७, १० पतितः स्यात्तदा ध्रुवाद्धुवेण प्रवासो भवेत् । परंतु दशमगृहे चेत्तदा शीघ्रतया प्रवासः स्यात्। प्रथमगृहे चेत्तदा स्थिरतया प्रवासः स्यात्। सप्तमगृहे चेत्तदा समानकालेन कोऽर्थो नातिस्थिरतया नातिशीघ्रतया प्रवासः स्यात् चतुर्थगृहेचेत्तदा बहुभारेण प्रवासः स्यात् ।

अथ किंचिद्विशेष उच्यते ।

भो मित्र नवमगृहप्रथमगृहे एते चैके एव। तथा पंचदशषोडश गृहे चैते एके एव ज्ञातव्ये। अत एव प्रथम १ गृहे पंचदशगृहे १५ च पश्येत् । यद्युभयगृहे शीतांशुः भवेत्तदा मार्गे प्रकाशो ज्ञेयः कुशलत्वेन यायात्। पुनः शीघ्रतया स्वगृहं प्रत्यागच्छेत्। अथ यद्युभयस्मिन्गृहे १, १५ शुभनिर्गमो भवेत्तदापि मार्गे प्रकाशो वाच्यः। कुशलत्वेन यायात्। पुनः शीघ्रतया निवृत्यागच्छेत्। अथ तत्र गते सति कति दिनानि स्थितिर्भविष्यतीति ज्ञानार्थं तद्गृह १, १५ रूपिणोरन्वादेशरूपं रमलेषु पश्येत् । यदि सोऽन्वादेशो मातृगृहेषु १, २, ३, ४ स्यात्तदा वर्षपर्य्यंतं स्थितिर्भविष्यतीति ब्रूयात्। यदि दुहितॄगृहेषु ५, ६, ७, ८, स्यात्तदा मासपर्यंतं स्थितिस्तत्र यदि दौहित्रगृहेषु स्यात्तदा ९, १०, ११, १२, सप्तकदिनपर्य्यंतं स्थितिस्तत्र गते सति भविष्यतीति वाच्या। यदि साक्षीभूतगृहेषु १३, १४, १५, १६, स्यात्तदा द्वित्रिदिनपर्य्यंतं स्थितिस्तत्र। नात्र संदेहः।

अथ ग्रन्थान्तरमतेन प्रवासो भविष्यति न वेति प्रश्ने माह ।

यदि नवम ९, तृतीय ३ गृहयोः स्वामिनौ आपोक्लिमगृहे ३, ६, ९, १२, समागतौ स्यातां तथा प्रथमगृहस्वामी केंद्रगृहेषु १, ४, ७, १०, समागतः स्यात्तदा प्रवासो न स्यात् । प्रथमगृहे चेत्तदा तु ध्रुवमेव । अथ यदि पंचदश १५, गृहे प्रवेशी भवेत्तथा स एव केंद्रगृहेष्वन्वादेशरूपं कुर्यात्तदा ध्रुवं प्रवासो न स्यात्। यदि पंचदश-गृहे १५, अशुभनिर्गमो वाऽशुभद्विस्वभावो भवेत्तदा सर्वं उद्योगः प्रवासस्य स्यात्प्रवासोऽपि भवेत् । परंतु मार्गे कोऽपि निषेधं कुर्या-त्तेन कारणेन मार्गनिवृत्तिः स्यात् । यदि पंचदशगृहे सूरि ⁝ भवेत्तदा भयकाठिन्यकारणेन मार्गनिवृत्तिः स्यात् । यदि प्रथमे १ वा सप्तमे ७, वा षोडश १६ गृहे सौरि ⁝ भवेत्तदा गंतुं नो शक्नुयात् । अथ यदि केंद्रगृहेष्वशुभो भवेत्तदाऽवश्यकं प्रथमगृहे चेद्वा सप्तमगृहे स्यात्तदा तत्र गते सति बहुदिनानि तिष्ठेत् । स्वगृहं प्रति कदापि नो यायात् । परं त्वेवं सति यदि साक्षीभूतगृहेषु १३, १४, १५, १६, बलान्विताः शुभनिर्गमाः स्युस्तदाऽऽगच्छेत्।परंतु वस्तूनां क्षीयमाण-त्वं बहुतरं भवेत् । अथ यदि तृतीय ३ नवम ९ गृहयोः स्वामिनौ प्रश्नरमलेषु बलहीनौ स्यातां तदोद्विग्नचित्तः परिखेदितः सभयश्च वर्त्तेत । ध्रुवं यदि स्वामिनः सकाशात्तरवीयगृहेषु ४, १० तथा सुका-विला७गृहे बलान्वितोऽशुभो भवेत्तदा तु खलूद्विग्नचित्तः परिखेदितः प्रष्टा भवेत् । परंतु बलान्वितः शुभो मित्रत्वदृष्ट्या यदि तयोः ९, ३, स्वामिनं पश्येत्तदा सुगमेन व्यतीते तत्क्लेशं कुर्यात।अथ यदि केंद्र गृहेषु शनिराहुकेतूनां रूपिणः स्युस्तथा त एव शुभगृहेष्वन्वादेशरूपं कुर्युस्तथा प्रष्टा रोगग्रस्तो भवेत्प्रवासे।एवं यदि केंद्रगृहेषु भौमरूपी भवेत्तथा स एवाशुभगृहेऽन्वादेशरूपं कुर्य्यात्तदा प्रवासकर्त्ताऽऽतता-यिभिः सह हतो भवेत्पथि।अथ यदि प्रथम १ नवम ९ पंचदश १५ षो-

डश १६गृहेषु शुभनिर्गमो भवेत्तदा कुशलक्षेमादिभिः सह वांछास्थानं प्राप्नुयात्। पुनः शीघ्रतया निवृत्तो भवेद्यदि तेषु गृहेषु १, ९, १५ १६, शुभद्विस्वभावो भवेत्तदा कतिपयदिनानि स्वायत्तान्येव तत्र गते सति तिष्ठेत्। यदि तेषु गृहेषु प्रवेशी वा स्थिरो भवेत्तदा प्रवासी बहुदिनानि तत्र तिष्ठेत्। तत्र स्थितिज्ञानार्थं तस्यान्वादेशरूपं पश्येत्। यदि सोऽन्वादेशो मातृगृहेषु स्यात्तदा प्रवासिनः स्थितिस्तत्र वर्षमेकं वाच्या। यदि दुहितृगृहेषु स्यात्तदा मासमेकं स्थितिस्तत्र प्रवासिनो यदि दौहित्रगृहेषु सोऽन्वादेशः स्यात्तदा दिनद्वयं त्रयं वा तत्र स्थितिः प्रवासिनो वाच्या। अथ यदि नवमगृहस्वामी प्रथमगृहे पतितः स्यात्तदा ध्रुवं प्रवासी स्यात्। यदि प्रथमगृहरूपी तथा नवमगृहरूपी सप्तम ७ पंचदश १५ षोडश-१६ गृहेष्वन्वादेशरूपं कुर्यात्तदा प्रवासनिवृत्तिः स्याद्गतुं नो शक्यते। कोऽर्थः प्रचलनेऽसमर्थः स्यात्। एवं यदि राहुकेत्वो रूपी तथा सौरि ⁝ रूपी भवेत्तदा तु ध्रुवमेव तत्फलं स्यादिति ज्ञेयम्। अथ यदि नवम ९ तृतीय ३ गृहयोः स्वामिनौ प्रश्नरमलेषु बलान्वितौ स्यातां तदा प्रवासो हितकरस्तत्र गते सति बहुफलप्राप्तिः स्यात् परंतु यदि केंद्रगृहेषु शुभरूपिणः स्युस्तदा शीघ्रतयाऽऽगमनं भवेद्गृहं प्रति। अथ यदि तृतीय ३ नवम ९-गृहयोः स्वामिनौ प्रश्नरमलेषु बलहीनौ स्यातां तदा प्रवासो हितकरो नो वाच्यः। ध्रुवं यदि केन्द्रगृहेष्वशुभाः स्युस्तदा क्षीयमाणत्वं बहुतरं भवेत्तथा बहुदिनानि तत्र तिष्ठेत्। प्रवासकरणसमये मनसि म्लानता बहुतरा भूत्वा गमनं कुर्यात्। अथ यदि प्रथमगृहस्वामी नवमगृहस्वामिना सार्द्धं तथा तृतीयगृहस्वामिना सार्द्धं शुभगृहेषु समागतः स्यात्तदा प्रवासो हितकरो वाच्यः। तत्र गते सति बहुतरा फलप्राप्तिः स्यात्। यदि स एव ताभ्यां सार्द्धं चाशुभगृहेषु समागतः स्यात्तदा प्रवासिवस्तूनां क्षीयमाणत्वं पश्येत्।

अथ यदि कोऽपि द्रव्याणां कुशलत्वक्षीयमाणत्वयोः प्रश्नं कुर्य्यादित्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि द्वितीयगृहस्वामी प्रथम १ दशमै-१० कादश ११ गृहेष्वन्वादेशरूपं कुर्यात्तदा द्रव्याणां कुशलत्वं विश्रामत्वं च वक्तव्यम् । तथा तस्माद्द्रव्यात्स्वात्मनोऽपि विश्रामप्राप्तिः स्यात् । ध्रुवं यदि स स्वामी शुभेन सह मिलितः स्यात्कोऽर्थः शुभोऽपि शुभगृहे पतितश्चेत्तदा तस्य बलमाश्रित्य फलं ब्रूयात् । तदाह । यदि सोऽन्वादेशः केंद्रगृहेषु १, ४, ७, १० स्यात्तदा सम्पूर्णकुशलत्वं विश्रामत्वं भाग्योदयत्वं च द्रव्याणां वाच्यम् । यदि सोऽन्वादेशः पणफरगृहेषु २,५,८,११ समागतः स्यात्तदा समानेन नातिबहुतरं नाति स्वल्पं कुशलत्वं द्रव्याणां वाच्यम् । यदि चापोक्लिमगृहेषु ३, ६, ९, १२ सोऽन्वादेशः स्यात्तदा स्वल्पं कुशत्वं ब्रूयाद्वा प्राप्तेऽपि नाशं व्रजेद्द्रव्यम् । ध्रुवम् । यदि पंचदशगृहेऽशुभो भवेत्तदा तु नष्टत्वमेव । अथ यदि द्वितीयगृहस्वामी प्रथमगृहं पश्येद्वौ-द्वावशुभौ स्वस्मिन्मित्रत्वदृष्ट्या पश्यतो ध्रुवं शुभं तदा द्रव्याणामागमनं क्षेमेण स्यात् । द्वितीयगृहस्वामी प्रथमगृहं मित्रत्वदृष्ट्या पश्येत्तदा सुगमेनागमनं द्रव्याणां भवेत् । यदि दुष्टत्वदृष्ट्या पश्येत्तदा काठिन्येनागमनं भवेदिति वाच्यम् । अथ यदि द्वितीयगृहस्वामी प्रथमगृहं न पश्येद्वा प्रथमगृहस्वामिनं न पश्येत्तथा भौमरूपी दुष्टत्वदृष्ट्या मिलितः स्यात्तदा द्रव्याणां क्षीयमाणत्वं नष्टत्वं व्ययत्वं च स्यात् । चौराततायिनां कारणेनेति । यदि शनिरूपी तथा राहुकेत्वो रूपी प्रश्नरमलेषु दुष्टत्वदृष्ट्या मिलितः स्यात्तदोपद्रवप्रसंगन तथाऽनीतिमार्गकारणेन द्रव्याणां क्षयत्वं नष्टत्वं व्ययत्वं च स्यात् । नात्र संदेहः ।

अथ द्रव्याणां कुशलत्वक्षीयमाणत्वयोः प्रश्न आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि द्वितीयगृहस्वामी प्रथम १ दश-

मे १० कादश ११ गृहेष्वन्वादेशरूपं कुर्यात्तदा द्रव्याणां कुशलत्वं विश्रामत्वं च वक्तव्यं तथा तस्माद्रव्यात्स्वात्मनोऽपि विश्रामप्राप्तिः स्यात्। ध्रुवं यदि स स्वामी शुभेन सहितः स्यात्कोऽर्थः शुभोऽपि शुभगृहे पतितश्चेत्तदा तस्य बलमाश्रित्य फलं ब्रूयात् । तदाह यदि सोऽन्वादेशः स्यादिति ।

अथ कस्यां दिशि गमिष्यामीति प्रश्न आह ।

तदा प्रथमगृहात्सप्तमगृहे ७ पश्येत्। तत्र को रूपी समागतो वर्त्तते। यदि वह्निमुखो भवेत्तदा पूर्वदिशं यायात् । वायुमुखरूपी भवेत्तदा पश्चिमदिशं यायात्। जलमुखेन सौम्यदिशि यायात् । भूमिमुखेन याम्यदिशि यायात् ।नात्र संदेहः ।

अथ प्रकारान्तरेण दिग्गमनमाह ।

तदा प्रथमगृहरूपिणं तृतीयगृहरूपिणा गुणयेत्। ताभ्यामुत्पन्नं पुनर्नवम ९ गृहरूपिणं गुणयित्वैकं रूपिणमुत्पाद्य तं पश्येत्। यदि वह्निमुखो भवेत्तदा पूर्वदिशि गमनं वाच्यम् । एवं वायुमुखेन पश्चिमदिशि जलमुखेन सौम्यदिशि। भूमिमुखेन दक्षिणस्यां दिशि गमनं ब्रूयात्। नात्र संदेहः ।

अथ कस्यां दिशि गमनं समीचीनं वर्त्तत इत्यत आह ।

तदा चैकादशगृह ११ रूपिणमेकादशगृहस्वामिनं च पश्येत्। तदुक्तदिशं गच्छेत्समीचीनं वर्त्तते । तत्र गते लाभाधिक्यं भवेत् । यदि स एव शुभगृहेष्वन्वादेशरूपो भवेत्तदा सुगमत्वं विश्रामत्वं च वाच्यम्। यद्यशुभगृहेष्वन्वादेशरूपो भवेत्तदा काठिन्यं परिश्रमत्वं च स्यान्नात्र संदेहः ।

अथ प्रवासो भविष्यति वा नेत्यत आह ।

तदा प्रथम १ नवम ९ पंचदश १५ षोडश १६ गृहेषु पश्येत्। यदि निर्गमाः स्युस्तदा प्रवासो भविष्यतीति ब्रूयात्। शुभे सुगमेन स्वेच्छया च। अशुभे काठिन्येनाऽनिच्छया च । यद्येतेषु गृहेषु

प्रवेशी भवेत्तथा पंचदश १५ गृहे मंदगः ⠃ समागतः स्यात्तदा प्रवासो नो भविष्यतीति वाच्यम् । नात्र संदेहः ।

अथ प्रवासे ममावस्था समीचीना भविष्यति वा नेत्यत आह ।

तदा प्रथमगृहरूपिणं पश्येत् । यदि दशम १० गृहे वा रुद्र ११-मितगृहेष्वन्वादेशरूपं कुर्यात्तदा स प्रवासो बहुसमीचीनो वर्त्तते । तस्मिन्प्रवासे कृते पदवीयशसोराधिक्यता वाच्या । यदि सोऽन्वादेशः पंचमगृहे वा पंचदशगृहे भवेत्तदापि तदेव फलं ब्रूयात् । परंतु तत्र गते बहुदिनानि तिष्ठेत् । अथ यदि प्रथमगृहरूपी चतुर्थगृहे वा द्वादशगृहेऽन्वादेशरूपं कुर्यात्तदा तस्मिन् प्रवासे रोगाधिक्यं स्यादिति वाच्यम् । यदि सोऽन्वादेशः षष्ठगृहे भवेत्तदापि तस्मिन् प्रवासे रोगाधिक्यं वाच्यम् । यदि सोऽन्वादेशोऽष्टमगृहे भवेत्तदा तस्मिन्प्रवासे भयाधिक्यं स्यादिति ब्रूयात् । मृत्युभयं वा । अथ यदि सप्तमगृहे त्रयाणां मध्ये कोऽपि समागतः स्यात् । ⠇ ⠇ ⠇ तथा स एव षष्ठगृहेऽन्वादेशरूपं कुर्यात्तदा तस्मिन्प्रवासे रोगाधिक्यं मृत्युभयादि वाच्यं यद्यष्टमगृहेऽन्वादेशरूपं कुर्यात्तदा बहुतरं भयं कोऽर्थः मृत्युरेव स्यादिति वाच्यम् । अथवा यदि पंचदश १५ गृहे मंदगो ⠃ भवेत्तदा स एवाष्टमगृहे ८ ऽन्वादेशरूपं कुर्यात्तदापि तस्मिन्प्रवासे रोगाधिक्यं स्यादिति वाच्यम् । अथ यदि लोहितो ⠇ नवम ९ गृहे पतितः स्यात्तथा स एव चतुर्थ ४-गृहे वा षष्ठ६गृहे ऽन्वादेशरूपं कुर्यात्तदा बहुनिषिद्धतरं फलं मृत्युतुल्यं वाच्यम् । यदि सोऽन्वादेशो द्वादशगृहे भवेत्तदा प्रवासी चास्तव्यस्तरूपः स्यात् ।

अथ प्रकारांतरमाह ।

प्रश्नरमलस्य सप्तमगृहे पश्येत् । यदि शुभो भवेत्तदा प्रवासी यस्यां दिशि गंतुमिच्छति तत्र बहुसमीचीनं वर्त्तत इति ब्रूयात् । तत्र गते सति सर्वाणि मनोऽभिलषितानि स्युः सिद्धानि । अथ यदि सप्तम-

गृहे निर्गमो भवेत्तदा प्रवासी यन्नगरं प्रति गंतुमिच्छति यत्राभिप्रायो वर्त्तते तत्र चिरकालं नो तिष्ठेच्छीघ्रतया बहिः समागच्छेत् । स्वाश्रमं प्रति । यदि सप्तमगृहरूपी मातृगृहेष्वन्वादेशरूपं कुर्यात्तदा प्रवासी शीघ्रतया स्वाश्रमं प्रत्यागच्छेत् । यदि दौहित्रगृहे तथा आपोक्लिमगृहेषु ३, ६, ९, १२, अन्वादेशरूपं कुर्यात्तदा प्रवासी यत्र गंतुमिच्छति तस्मात्स्थानादग्रे स्थानांतरे यायात् । अथ यद्येकादेश ११ गृहे मंदगो ⁝ वा सौरी ⁝ रूपी भवेत्तथाऽपरस्मिन्गहेऽप्यन्वादेशरूपं कुर्यात्तदा प्रवासी मनोऽभिप्रायस्थानादग्रे यायात् । अथ यदि चतुर्थगृहे शुभो भवेत्तदा स प्रवासी नूनं बहुसमीचीनो वर्त्तते । यदि द्वितीयगृहे शुभो भवेत्तदा यत्र गंतुमिच्छति तस्मिन्देशे येन येन सार्द्धं प्रवासी कार्य्यं कर्तुमिच्छेत्ते सर्वे सहाया उपकारं कुर्य्युरत एव मनोऽभिप्रायाः सिद्ध्येयुः । यदि पंचम ९ गृहे शुभो भवेत्तदा तद्वदेव तस्य स्थानस्य बृहज्जनाः प्रवासिने सहायदानं कुर्य्युस्तेन कारणेन मनोऽभिलषिताानि सिद्धानि स्युः यदि तेषु गृहेषु ४, २, ९, त्रिष्वपि शुभो भवेत्तदा प्रवासे कृते प्रवासिनोऽवस्था समीचीना वाच्या । यद्येतेषु गृहेषु ४, २, ९, प्रवेशी वा स्थिरो भवेत्तदा प्रवासे कृते प्रवासिनोऽवस्था समीचीना वाच्या । यद्येतेषु गृहेषु ४, २, ९, प्रवेशी वा स्थिरो भवेत्तदा प्रवासिनो द्रव्यं बहु व्ययितं न स्यात् । यद्यशुभनिर्गमो भवेत्तदाऽस्वेच्छया व्ययं कुर्य्यात् । यदि शुभनिर्गमो भवेत्तदा स्वेच्छया व्ययं कुर्यात् । अथ यदि दशम १०, गृहे शुभरूपी समागतः स्यात्तदा यत्र गंतुमिच्छति तस्मिन्स्थानेऽप्रसन्नमनसा तिष्ठेत्तथा कदाचिदपि मनोऽभिप्रायाः सिद्धा न स्युः । नात्र संदेहः । अथ यदि कोऽपि प्रवासिनोऽवस्थाज्ञानार्थं पृच्छेत्तदा तद्वदेव फलं ब्रूयात् । अथापरप्रवासिनोऽवस्थायाः समाचारं सप्तमगृहरूपिणा ब्रूयात् । अथ प्रवासिनो जीवनवृत्तिं दशमगृहरूपिणा ब्रूयात

अत्र रूपिणः शुभाशुभत्वं प्रवेशिनिर्गमत्वं च स्थिरद्विस्वभावत्व-मावश्यकेन पश्येत् । नात्र संदेहः ।

अथ स्वप्नस्य प्रश्न आह ।

प्रथम १, तृतीय ३, नवम ९, गृहेषु पश्येत् । यद्येतेषु गृहेषु शुभाः समागताः स्युस्तदा सुस्वप्नो दृष्टः स्यात् ।यदि स एव दशम-गहे १० वा एकादशगृहेऽ ११, थवा पंचम ५,गृहेऽन्वादेशरूपं कुर्या-त्तदा तत्स्वप्नं सत्यार्थं ब्रूयात्तस्यफलं साधुकार्यं समीचीनं वर्त्तते अथ यदि तेषु गृहेषु १,३,९,अशुभाः स्युस्तदा कुस्वप्नो दृष्टः स्यात्। यदि तस्यान्वादेशं केंद्रगृहेषु वा पणफरगृहेषु स्यात्तदा प्रष्टा स्वप्नस्य निषिद्धफलं प्राप्नुयात् । तद्दोषनिवारणाय जपदानादिकं कुर्य्यात् । यदि तस्याऽन्वादेश आपोक्लिमगृहेषु ३, ६, ९, १०, स्यात्तदा तत्स्वप्नं तथ्यतां नो यायात् ।तथा तस्य फलं पृच्छकाय निषिद्धितरं भवेदत्र केचिद्वदंति स्वप्नप्रश्नः स्वप्नफलं च तृतीय गृहरूपिणा तथा तस्याऽन्वादेशेन च वक्तव्यमिति । परं तु नवमगृहेण स्वप्नप्रश्न-कथनं बहुपरीक्षितं वर्त्तते बहवो जना नवम ९, गृहादेव स्वप्नप्रश्नं वदंति । अत एव नवमगहादेव स्वप्नप्रश्नयोः कथनं समीचीनं ज्ञेयमिति ।

अथ कोऽपि प्रवासार्थं पृच्छेदित्यत आह ।

यदि नवम ९ गृहे निर्गमो भवेद्वा द्विस्वभावो भवेत्तदा प्रवासः स्यात्प्रष्टा प्रवासं कुर्यात् । कृते प्रवासे बहुसमीचीनं स्यात् । अथ यदि प्रवेशी वा स्थिरो भवेत्तदा प्रवासः स्थिरत्वे पतेत्कोऽर्थः प्रवासो न स्यात् । अथवा प्रष्टा प्रवासकरणे स्वात्मोपरि बहुका-ठिन्यं जानीयात् । नात्र संदेहः ।

अथ मार्गस्य कशलादिकं षष्ठगृहरूपिणो ब्रूयात् । अपरं मनोऽ-भिप्रायसिद्धिकारकस्थानस्य समाचारं सप्तमगृहरूपिणा ब्रूयात् । अपरं प्रवासान्निवृत्तिं नवमगृहरूपिणोऽन्वादेशेन ब्रूयात्। अथ प्रवासे

रोगित्वं च तृतीयगृहरूपिणा ब्रूयात् । तथा नवम ९ गृहादपि प्रवासे रोगित्वकारणं वाच्यम् । नात्र संदेहः ।

अथ प्रवासी ह्यागमिष्यति वा नेत्यत आह ।

तदा त्रयोदश १३ चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु पश्येत् । यदि प्रवेशिनो बहुतराः स्युस्तदा प्रवासी स्वाश्रमं प्रत्यागच्छेत् । यदि निर्गमा बहुतराः स्युस्तदा नागच्छेत् । स्वाश्रमं प्रति नागमिष्यति वा । यदि स्थिरा बहुतराः स्युस्तदा प्रवास्यागमनं स्थिरत्वे पतेत् । यदि द्विस्वभावा बहुतराः स्युस्तदा वृत्तांतागमनं भवेत् । नात्र संदेहः । अथ प्रवासिनः शरीरे कुशलरोगादिज्ञानं सप्तमगृहरूपिणोऽन्वादेशेन ब्रूयात् । अथ पुनरपि प्रवासी मार्गे वर्त्तत इति वाच्यं नान्यथा । अथ किंचिद्विशेष उच्यते । प्रवासस्य सुगमकाठिन्यरूपां सर्वावस्थां प्रथमगृहरूपिणा ब्रूयात् । तथा द्रव्याणामवस्थां द्वितीयगृहरूपिणा ब्रूयात् । प्रचलनं तृतीयगृहरूपिणा ब्रूयात् । यस्मिन्समये प्रवासात्स्वगृहं प्रति समागच्छेत् । तदा गते सति प्रसन्नता नो भवेद्वा शोकातुर एव स्यादेतत्सर्वं चतुर्थगृहरूपिणा ब्रूयात् । तथा यस्मिन्स्थाने यास्यति तत्र गते विषण्णमना भवेद्वा प्रसन्नमना एतत्सर्वं पंचमगृहरूपिणा ब्रूयात् । प्रवासे चतुष्पदानां विचारं षष्ठगृहरूपिणा कुर्यात् । यस्मिन्देशे गंतुमिच्छति तत्र गते शुभाशुभोद्भवं सप्तमगृहरूपिणा ब्रूयात् । क्रयविक्रयमष्टमगृहरूपिणा ब्रूयात् । मार्गे किं भविष्यतीति नवम ९ गृहरूपिणा ब्रूयात् । प्रवासिनः परिणामे कीदृशं तथा वस्तुद्रव्यादिकं तस्य देशस्य कीदृशमेतत्सर्वं दशमगृहरूपिणा ब्रूयात् । नात्र संदेहः । प्राप्तिं व्ययं व्यापारं चैकादशगृहरूपिणा ब्रूयात् प्रवासस्य परिणामं द्वादशगृहरूपिणा ब्रूयात् । नात्र संदेहः ।

अथ शपथे सत्यानृतत्व आह ।

तदा नवमगृहे पश्येत् । यदि तत्र शुभो भवेत्तदा स शपथः सत्यो वर्त्तत इति वाच्यम् । यद्यशुभो भवेत्तदा स शपथोऽनृतो वर्त्तत इति ब्रूयात् । एवमेव सर्वग्रंथेषु कथितं वर्त्तते नात्र संदेहः ।

इति श्रीरमलरहस्ये सारसंग्रहे भयभञ्जनशर्मकृतौ नवमगृहस्य प्रश्नकथनं नाम नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

अस्मिन्दशमाध्याये दशमगृहप्रश्नकथनस्य व्याख्या वर्त्तते । तत्रादौ दशमगृहस्य विचारांशमाह । राज्यस्य विचारः । नृपाज्ञाया विचारः । पृथ्वीपतेर्विचारः । परमपदवीकस्य नायकत्वस्य प्रतिष्ठाया विचारः । गुरुत्वपदवीकस्य शुभनाम्नो विचारः । नृपतेजस्त्वकर्मकार्य्यादिकस्य विचारः । माण्डलिकस्य विचारः । नीतिकर्तुराचार्यस्य विचारः । श्रेष्ठजनस्य च । स्वस्वज्ञातिकर्मणो विचारः । गुरूणां विचारः । स्वसुखविचारः । पितृव्यबालकानां विचारः । स्वबालकानां रोगस्य विचारः । मातुर्विचारः । स्त्रीणां सतां भूमिवस्तुनो विचारः स्वस्थताविचारः । प्रवासिदेशग्रामस्य च । चौराणां गृहस्थानस्य विचारः । नृपतेजस्त्वदुष्टत्वस्य विचारः । यः परमपदवीतः पतितस्तस्य विचारः । स्वाज्ञाया विचारः । सर्वकार्याणां पूर्णत्वस्य विचारः । जीविकाया विचारः । इत्यादि विचारं दशमगृहे विचारयेत् । अथ यद्येतेषां प्रश्नं कोऽपि कर्यात्तदा दशमगृहे पश्येत् । यदि तत्र शुभप्रवेशी भवेत्तदा प्रष्टा कार्य्यादिभिः पृथ्वीपतितेजस्त्वादिभिश्च फलं प्राप्नुयात् । तथा सर्वैर्दशमगृहे विचारांशैः सह प्रश्नफलं प्राप्नुयात् । परंतु स्वायत्तत्वसुगमत्वाभ्यां कृत्वा । तथा प्रष्टा यस्यामवस्थायां तिष्ठेत्तस्यां बहुदिनानि तिष्ठेत् । तद्वत्पुनस्तद्विचारांशेभ्यः कीर्त्तिं प्राप्नुयात् । तेषां प्रसंगेन वा यशः । अथ यद्यशुभप्रवेशी भवेत्तदा तत्कार्यं नृपतेजस्त्वादिकं तत्तद्विचारांशे

महता कष्टेन काठिन्येन सिद्धिं प्राप्नुयात् । तद्विचारांशेभ्यो यशो न प्राप्नुयात् । विडंबना स्यात् । अथ यदि शुभनिर्गमो भवेत्तदा नृपतेजस्त्वं बलाधिक्यं वाच्यम्। परंतु स्वल्पफलं ब्रूयात्।पुनस्तेजस्त्वं स्वायत्त्यस्वेच्छाभ्यां कृत्वा तिरस्कारं कुर्यात् । अथवा कोऽपि प्रतिष्ठामर्यादादिभिः सह तं पुरुषं तस्मान्नृपतेजस्त्वपदवीतो बहिः कुर्य्यात् । येन तस्य द्रव्यादिके व्यत्ययो नो भवेत् । कोऽर्थः साहजिकत्वान्नृपत्वाद्भ्रष्टो भवेत् । एवं यानि वस्तूनि दशमगृहस्य विचारांशे तिष्ठंति सर्वेषां शुभत्वं वाच्यम् । अथ यद्यशुभनिर्गमो भवेत्तदा प्रष्टा नृपतेजस्त्वादिकस्य तिरस्कारं कुर्यात् । तथा प्रश्नकृतवस्तूनां तिरस्कारं कुर्यात् । तद्वत्स्वप्रश्नेभ्यः प्रष्टा च्युतो भवेत् । परंतु स्वायत्त्येन पुनः प्रष्टा पृथ्वीपतेः सकाशाद्दूरतरे स्थितिं कुर्यात् । नृपतेजस्त्वमातृभ्यः सकाशात्तथा पितृव्यसुतेभ्यः पितृभार्याभ्यस्तथा पुरुषसकाशाद्दूरतरे तिष्ठेत् । एवं यानि वस्तूनि विचारांशे तिष्ठंति तेभ्यः सर्वेभ्यः प्रष्टुः स्थितिर्दूरतरे भवेत्। अपरं भयमिदं द्रव्यादीनां बहुक्षयो भवेत् । येन केनोपायेन द्रव्यव्ययाः स्युः । अथ यदि शुभस्थिरो भवेत्तदा कर्मकार्येभ्यः फलं प्राप्नुयात् । अपरं यानि वस्तूनि चास्य गृहस्य विचारांशे तिष्ठंति सर्वेषां शुभत्वं वाच्यम् । तेभ्यः फलप्राप्तिः स्यात् । परं स्थिरतया स्वायत्त्येन सुगमेन च । यद्यशुभस्थिरो भवेत्तदा प्रष्टा भयत्रस्तो भवेत् । तथोद्विग्नचित्तः परखेदितश्च । पृथ्वीपतिमांडलिकेभ्यः सकाशाद्भयोत्पत्तिः प्रष्टुरुपर्य्युपद्रवः स्यान्नृपकार्यप्रसंगेन। अपरमस्य गृहस्य विचारांशे यानि वस्तूनि संति तेषां सर्वेषां निषिद्धत्वं वाच्यम् । अत्र केचिद्वदंति चत्वारो रूपिणः स्थिरा अस्मिन्दशमगृहेऽशुभ फलदा ज्ञातव्यास्तेन चतुर्भिश्चापिरूपिभिरस्य गृहस्य विचारांशो यावंति वस्तूनि तिष्ठंति सर्वेषां निषिद्धत्वं वाच्यम् ।तथा प्रष्टा तेभ्यः फलं न प्राप्नुयात् । नात्र संदेहः । अथ यदि शुभद्विस्वभावो भवे-

तदा कर्मकार्यादिषु नृपकर्मसु च सामान्यफलं वाच्यम् । परं प्रष्टा तेषां कर्म तथा तेभ्यः सामान्यफलं प्राप्नुयात् । नृपतेजस्त्वादिकं सामान्यं भवेत् । एवं यावंति वस्तूनि विचारांशे तिष्ठंति तेषु सर्वेषु द्विविधत्वं फलं वाच्यम् । अपरप्रष्टा तेषां कर्मकार्यादीनां कदापि तिरस्कारं कदापि ग्रहणं कुर्यात्। परं तु तिरस्करणग्रहणे चैते सुगमत्वस्वायत्त्याभ्यां कृत्वा स्याताम् । अथ यद्यशुभद्विस्वभावो भवेत्ततो नृपतेजस्त्वादिषु निषिद्धत्वं फलं वाच्यम् तथा प्रष्टुः कर्म्मकार्यादिषु नेष्टत्वं स्यात् ॥ तथैव कर्मकारिनृपतेजस्त्वेभ्यः प्रष्टोद्विग्नचित्तः परिखेदितश्च स्यात् । इदं तेजस्त्वादिकं सम्यग्दृढतरं भविष्यति वा नेति विचारे प्रत्यहं बहुधा तिष्ठेत् ॥ तथा लाभो भविष्यति क्षयो वेत्यपि विचारे प्रत्यहं तिष्ठेत्तं कदापि तिरस्कृतं कुर्यात्कदापि गृह्णीयात् । परंतु स्वायत्त्येन नोऽनिच्छया । परिणामे तेभ्यः प्रष्टा किमपि फलं न प्राप्नुयात् । दशमगृहस्य विचारांशेभ्य एवं यावंति वस्तूनि दशमगृहस्य विचारांशे तिष्ठंति सर्वेषाम निष्टत्वं ब्रूयात्।तथा कार्याणां सिद्ध्यसिद्धित्वेऽपि नेष्टत्वं वाच्यम् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

त्रयोदशादीं १३, १४, १५, १६, श्चतुरो गृहरूपिणः पश्येत् । यदि प्रवेशिनः स्युस्तदा झटित्येव नृपतेजस्त्वकर्मकार्य्यादीनां सिद्धत्वं स्यात् । तथा सर्वेषां दशमगृहविचारांशानां सिद्धत्वं वाच्यं यदि निर्गमाः स्युस्तदा तेषां नो सिद्धत्वं वाच्यं यदि स्थिराः स्युस्तदा स्थिरतया सिद्धत्वं वाच्यम् । यदि द्विस्वभावाः स्युस्तदा किंचित्सिद्धत्वं स्यात्सर्वत्रैव शुभे सुगमेन स्वेच्छया च । अशुभे काठिन्येनानिच्छया च । नात्र संदेहः ।

अथ नृपतेर्ज्जनको वा पितृभाया वा पितृव्यसुतस्तथा गुरुः प्रष्ट्रा सार्द्धं मित्रत्वं स्थापयंति वा दुष्टत्वमित्यत आह ।

तदा दशमगृहरूपिणोऽन्वादेशरूपं पश्येत् । यदि सोऽन्वादेशः

पंचमे ५ नवमे ९ च स्यात्तदा प्रष्टा सार्द्धं ते संपूर्णमित्रत्वं स्थापयंतीति ब्रूयात् । यदि सोऽन्वादेशस्तृतीये चैकादशे ३, ११ स्यात्तदाऽर्द्धमित्रत्वं स्थापयंति ते प्रष्टा सार्द्धमिति वाच्यम् । यदि सोऽन्वादेशः सप्तमगृहे समागतः स्यात्तदा संपूर्णदुष्टत्वं वाच्यम् । यदि चतुर्थे ४, १० दशमे सोऽन्वादेशः पतितः स्यात्तदाऽर्द्धं दुष्टत्वं प्रष्टा सार्द्धं ते कुर्य्युः सोऽन्वादेशः शेषगृहेषु २, १२, ६, १६ यदि समागतः स्यात्तदा न मित्रत्वं नो दुष्टत्वं ब्रूयात् । नात्र संदेहः ।

अथास्मिन्नृपतेजस्त्वादिके गणितदानसमये तेन नृपतिना सार्द्धं कीदृशं वर्त्तत इत्यत आह ।

तदा प्रथमगृहस्वामिनं तथा दशमगृहस्वामिनं पश्येत् । यद्येतौ स्वस्मिन्दुष्टत्वदृष्ट्या संमिलितौ स्याताम् । तथा चतुर्थगृहेऽशुभो भवेत्तदा गणितदानसमये बहुनेष्टत्वं वाच्यम् । यदि स एव दुष्टत्वावलोकनसम्भूते सति चतुर्थगृहे शुभः समागतः स्यात्तदा गणितपत्रदानसमये किंचित्कलहं दुःखञ्च भवेत् । परंतु परिणामे शुभम् । अथ यदि तौ स्वस्मिन्मित्रत्वदृष्ट्या मिलितौ स्यातां तदा गणितपात्रदानसमये प्रसन्नता स्यात् । तत्र मनोऽभिप्रायाः सिद्ध्यंति । अथ यदि प्रथमगृहस्वामी प्रश्नरमलेषु बलहीनो भवेत्तदा तत्कर्म्मकार्यतेजस्त्वेभ्यः फलं न प्राप्नुयात् । यदि दशमगृहस्वामी रमलेषु बलरहितो वा आपोक्लिमगृहेषु समा ३, ६, ९, १२ गतः स्यात्तदा तेजस्त्वस्थानाद्भ्रष्टो भवेत् । अथ यदि रमलतुला १५ गृहरूप्यन्वादेशेन बलहीनो वा पंचदश १५ गृहस्वामी हीनबलो भवेत्तदा सर्वे जनास्तं नृपं मांडलिकं वाऽनादरनिर्भत्सनान्यायमयं कुर्य्युः । नात्र संदेहः ।

अथ वर्त्तमानभविष्यरूपकार्यद्वयस्य प्रश्न आह ।

अत्र वर्त्तमानकार्यस्य दशमगृहं भविष्यरूपस्य चतुर्थगृहं ज्ञेयम् । यत्र शुभस्तदेव कार्यं कुर्यात्तदा समीचीनं नान्यथेति भावः । नात्र संदेहः ।

अथ तत्कर्मकारिभ्यः फलप्राप्तिर्भविष्यति वा नेत्यत आह ।

तदा प्रथमदशमगृहस्वामिनौ पश्येत् । यद्येतौ रमलेषु बलहीनौ स्यातां वापोक्लिमगृहेषु ३, ६, ९, १२ समागतौ चेत्तदा तत्कर्मकारिनृपव्यवहारेभ्यः किमपि फलं न प्राप्नुयात् । संयमकरणं समीचीनं तत्सर्वं निषिद्धफलदं ज्ञेयम् । अथ यदि दशमगृहे शुभस्तदा दशमगृहस्वामी च बलान्वितो भवेद्वा केंद्रपणफरयोर्मध्ये समागतः स्यात्तदा तत्कर्मकारिनृपव्यवहारेभ्यो बहुतरं फलं विश्रामादिकं सुखं च प्राप्नुयात् । ध्रुवं चैकादशगृहे शुभो भवेन्नात्र संदेहः ।

अथ कर्म्मकारिनृपव्यवहारादिकं साम्प्रति समीचीनं वर्त्तते वा नेत्यत आह ।

तदा दशमगृहस्वामिनं पश्येत् । यदि स प्रथमगृहरूपिणा सार्द्धं वा प्रथमगृहस्वामिना सार्द्धं मित्रत्वेन संमिलितो भवेत्तदा तत्कर्मकार्यनृपव्यवहारादिकं बहुसमीचीनं ध्रुवं यदि दशमगृहे शुभो भवेत्परन्तु दुष्टत्वदृष्ट्या संमिलितौ स्यातां तथा दशमगृहेऽप्यशुभस्तदा तत्सर्वं नेष्टफलं ज्ञेयम् । स्वयोग्यं नास्ति । अत एव संयम एव शुभः । तेभ्यः किंचिदपि संतुष्टिरूपं विश्रामं न प्राप्नुयात् ।

अथ नृपतेजस्त्वेषु परिणामः कीदृशस्तथा तस्य राज्ञश्छत्रचामरदेशादिकं सदैव दृढतया स्थास्यति वा नेत्यत आह ।

तदा तृतीयगृहरूपिणा दशमगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नं त्रयोदशगृहरूपिणा गुणयेत् । तदुत्पन्नं च पश्येत् । यदि शुभप्रवेशी वा स्थिरो भवेत्तदा सर्वदा मंगलं तथा छत्रचामरदेशादिकं सदैव दृढतया तिष्ठेत्तद्वत्कार्य्याणां परिणामे सम्यङ्नृपत्वं नीतिराज्यं च भवेत् । ध्रुवं यदि केंद्राणां मध्ये प्रथमदशमगृहेऽन्वादेशरूपं कुर्य्यात् । नान्यथा । व्यत्यये व्यत्ययफलं वाच्यम् ।

अथ प्रकारांतरमाह ।

प्रथमगृहस्वामिनं तथा दशमगृहस्वामिनं पश्येत् । यद्येतौ केंद्रगृहेषु वा पणफरेषु बलान्वितौ भवेतां तदा स्वदेशच्छत्रचामरादिकं

सदैव तिष्ठेत्तथा नृपत्वकार्य्यादिकं परिणामे दृढत्वेन स्थिरं भवेत्कोऽर्थस्तिष्ठेद्ध्रुवम् । यदि केंद्राणां मध्ये प्रथमदशमयोः स्थले समागतः स्यात्तदा तु स्वदेशच्छत्रचामरादीनां स्थितिश्चिरकालं बहुतरा भवेत् । अथ यदि प्रथमगृहे तथा दशमगृहे शुभो भवेत्तथा तयोर्मध्य एकः शुभः केंद्रगृहेष्वन्वादेशरूपं कुर्याद्ध्रुवम् । यदि चतुर्थगृहे भवेत्तदा स्वदेशच्छत्रचामरादीनां चिरकालं स्थितिः । नृपतेजस्त्वं सम्यग्बहुतरं भवेत् । प्रजा हृष्टमनसः स्युः न्यायादिभिः परिणामे कार्य्याणां शुभत्वं भवेत् । अथ यदि प्रथमगृहे दशमगृहे चाशुभो भवेत्तदा केंद्रगृहेषु शुभः पणफरगृहेषु च भवेत्तदाच्छत्रचामरदेशादिकं सर्वदा नो तिष्ठेत् । उपद्रवादिकं पापं च बहुतरं भवेत् । यतः प्रजा विषण्णमनसः स्युः । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

यदि देशराज्ययोः स्थितेः प्रश्नं कुर्यात्तदा केंद्रगृहेषु पश्येत् । यदि बलान्वितः शुभप्रवेशी वा स्थिरो भवेत्तदा लक्ष्मीः स्थिररूपा भवेत् । भाग्योदयश्च तथा स्वदेशराज्ययोरपि चिरकालं स्थितिः स्यात् । ध्रुवं यदि राज्यस्य रूपी दशमगृहे समागतश्चेत्तदा तु सर्वे मनोऽभिप्रायाः सिद्ध्यंति । राज्यप्राप्तौ निर्भयत्वं भवेत् । परंतु यदि दशमगृह स्वामी बलान्वितः शुभगृहे समागतः स्यात्तथा पंचदशगृहेपि शुभो भवेत् । अथ यदि दशमगृहरूपी दशमगृहस्वामिनौ द्वौ शुभावशिष्टौ स्वस्मिन्मित्रत्वदृष्ट्या पश्यतस्तदा तेषु कार्येषु सहायदातारो बहुतराः स्युः मित्रत्वकर्त्तारश्च परंतु यदि तौ प्रवेशिनौ वा स्थिरौ भवेताम् । अथ यदि तौ शुभौ दुष्टत्वदृष्ट्या स्वस्मिन्पश्यतस्तदा दुष्टा विघ्नकर्तारो न स्युः । यद्यशुभौ बलान्वितौ दुष्टत्वदृष्ट्या स्वस्मिन्पश्यतस्तदा दुष्टविघ्नकर्त्तारश्चबहुतराः स्युः । अथ राज्यरूपिण इमे ⁝ ⁝ ⁝ ⁝ अस्य फलं संप्रयुक्तं मयोपरि । नात्र संदेहः । अथ प्रकारांतरमाह ।

अथेदं तेजस्त्वं तस्य तिष्ठेद्वा नेत्यत आह ।

यदि प्रथमगृहे तीक्ष्णांशु ⁝ र्वासूरि ⁝ र्वा वाग्मी ⁝ र्वा कवि ⁝ र्वा रवि ⁝ र्भवेत्तथा चतुर्थैं ४ कादशे ११ गृहे ⁝ र्वा ⁝ र्भवेत्तदा तत्तेजस्त्वादिकं नृपत्वं च तस्य हस्ते तिष्ठेत् । तथा तस्मिन्नृपकर्मणि परिणामे सम्यग्भवेत् । यदि कदाचिन्नृपत्वं नास्ति तच्च वांछति तदाप्येवमेव फलं ब्रूयात् । ध्रुवं नृपत्वं राज्यं च प्राप्नुयाच्छुभमार्गेण । अथ यदि प्रथमगृहे शीतांशु- ⁝ र्भवेद्वा पातो ⁝ र्वा वक्रो ⁝ र्भवेत्तथा दशम १० चतुर्दश १४ गृहेऽपि तदेव रूपी स्यात्तदा तद्राज्यं तेजस्त्वं तस्य हस्ताद्व्रजेत् । परिणामे नेष्टम् । यदि चेद्राज्यमिच्छेत्तदा तु न प्राप्नुयात् । अथ यदि प्रथम-गृहे सौरि ⁝ र्वा मंदगो ⁝ र्वा बोधनो ⁝ र्भवेत्तदा तस्मिन्राज्ये स रोगग्रस्तः स्यात् । काठिन्यं क्लेशं च प्राप्नुयात् । सर्वाः प्रजा विषण्ण मनसः स्युः । अत्र साक्षीभूतमवश्य विलोकयेत् । तदाह । एकादश-गृहरूपिणं दशमगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नः साक्षीभूतो ज्ञेय इति नात्र संदेहः ।

अथ वादिप्रष्टृनीतिकर्तॄणां मध्ये कस्य जयः को बलवानित्यत आह ।

तदा प्रथमसप्तमदशमगृहेषु पश्येत् । तत्र प्रथमगृहं प्रष्टुः सप्तम-गृहं विवादिनः दशमगृहं नीतिकर्तुः । यस्मिन्गृहे शुभरूपी स्वामी च रमलेषु बलान्वितो भवेत्तथा केंद्रेषु वा पणफरेषु चान्वादेशरूपं कुर्यात्तदा तस्यैव जयः स एव बलवान् । यस्मिन्गृहेऽशुभस्वामी रमलेषु बलहीनो भवेत्तथान्वादेशरूपमापोक्लिमगृहेषु कुर्यात्तस्य पराजयः स एव हीनबलो नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रथमेन दशमरूपिणं गुणयेत्ताभ्यामुत्पन्नरूपिणं भिन्नं स्थापयेत् । तथा सप्तमरूपिणं दशमरूपिणा गुणयेत्तदुत्पन्नं भिन्नं स्थापयेत् । तद्वद्दशमं दशमेन गुणयेदुत्पन्नं भिन्नं स्थापयेत् । तद्द्वयं पश्येत् । त्रयाणां मध्ये य एव बलवान्प्रश्नरमलेषु तस्यैव जयः । प्रष्टृविवादि-

नोर्मध्ये त्वावश्यकेन विचार्य्यम् । यदि प्रष्टृविवादिनोस्ताभ्यामुत्पन्नरूपिणौ शुभौ स्यातां तदा द्वयोर्मध्ये संधिः स्यात् । यद्यशुभौ भवेतां तदा परस्परं कलहो भवेदिति भावः । अथ यदि दशमगृहे १० द्विस्वभावो वा सौम्यादिचतुर्णां मध्येऽप्येकोऽपि स्यात्तदा तयोर्वादिनोर्मध्ये चैकोऽपि नीतिकर्तुर्न्निकटे नो यायात्तदा सौम्यादिचत्वारो रूपिणो ⁝ ⁝ ⁝ ⁝ यदि दशमगृहरूपी वा दशम गृहस्वामी विवादिनो रूपिणं मित्रत्वदृष्ट्या पश्येद्वा यस्य मुशल्लसगृहे समागतः स्यात्स एव प्रथमं नीतिकर्तुर्न्निकटे यायात् । यदि प्रथमगृहस्वामी विवादिनो रूपिणं मित्रत्वदृष्ट्या पश्येत्तदा शत्रुपक्षात्समाधानं स्यात् । यदि सा दृष्टिश्चतुर्थदशमस्थानाद्भवेत्तदा कलौ याते पश्चात्समाधानं स्यात् । यदि रमलेषु शनिभौमयोः संमुखावलोकनं भवेत्तदा कलहं युद्धं मृत्युतुल्यक्लेशो बहुतरः स्यात् । ध्रुवं यदि चान्वादेशो बलहीनोऽशुभगृहेषु स्यात्तदात एव विवादकलहेभ्यः संयमं कुर्यात्तदा कुशलन्नात्रसंदेहः ।

अथ राज ( स्वामि) सेवां कर्तुमिच्छामि सा मह्यं कीदृशी भविष्यतीत्यत आह।

प्रथमगृहे दशमगृहे च पश्येत् । यद्युभयगृहे शुभौ भवेत्तदा प्रष्टुस्वस्था समीचीना सेवायां स्यात् । तेभ्यः सहायप्राप्तिर्द्धनादिलाभश्च । यदि तौ रूपिणौ पंचमैकादशगृहेऽन्वादेशरूपं कुर्य्यातां तदा तेभ्यो राजभ्यो द्रव्यप्राप्तिस्तथा शुभवस्तूनां प्राप्तिर्वस्त्रलाभश्च कंचुकादिलाभस्तथा शुभवार्ताश्रवणं यद्यत्प्रार्थयेत्तत्तत्प्राप्नुयात् । अथ यदि प्रथम १ दशम १० गृहे शुभप्रवेशी भवेत्तदा राज्यप्राप्तिर्नृपतिभ्यः प्रतिष्ठाया वर्द्धमानता स्यात् । नानावस्तुनः प्राप्तिः द्रव्यादिलाभः । तेजस्त्वाधिक्यं कञ्चुकादिवस्त्रलाभश्चेद्यदि चतुर्थगृहे प्रवेशी भवेत्तदा तस्मिन्राज्ये स्थिररूपेण बहुदिनानि तिष्ठेत्।प्रतिदिनं कार्यादिकं तेजस्त्वादिकं च वर्द्धमानं स्यात्तथा वांछासिद्धिश्च । अथ यदि प्रथमे दशमे चतुर्थे चाशुभो भवेत्तदा व्यत्ययं फलं ब्रूयात्।

अथ यदि प्रथमे दशमे शुभप्रवेशी तथा चतुर्थगृहेऽशुभस्तदा तस्मिन् राज्ये परिणामः समीचीनो वर्त्तते सदैव प्रतिष्ठया सह तिष्ठेत् । अथ यदि प्रथम १ दशम १० चतुर्थ ४ गृहेषु निर्गमः समागतः स्यात्तदा स्वयमेव राज्यं न प्राप्नुयात् यदि कोपि तस्मिन् राज्ये स्थितो भवेत्तमुत्सार्य प्रहारं दापयेद्राजा ।

अथास्मिन्राज्ये ममावस्था कीदृशी भविष्यतीति प्रश्न आह ।

तदा प्रथमे दशमगृहे च पश्येत् । यदि तीक्ष्णांश्वादित्रयाणां मध्ये चैकोऽपि भवेत्तदा तेन राज्येन बहुतरं फलं प्राप्नुयात् । प्रतिसमयं संतुष्टमना निश्चिन्तचित्तो भवेत् । यदि दशमे प्रथमे च १०, १ अनयो मध्ये चैकः स्यात्तदा चतुर्थगृहे शुभप्रवेशी समागतः स्यात्तस्मिन्राज्ये बहुतेजस्त्वं प्रभुत्वं चाज्ञाकरणं दृढ़तरं भवेत् । जनानां हृदि नेत्रे च तस्य प्रभुत्वं बहुतरं व्याप्तं भवेत् । प्रतिदिनं प्रभुत्वं चाज्ञाकरणं महत्वं वर्द्धमानं भवेत् । परंतु तस्मिन्नायकत्वे फलं स्वल्पं प्राप्नुयात् । अथ यदि प्रथम दशमचतुर्थगृहेषु विध्वादित्रयाणां मध्ये चैकः समागतः स्यात्तदा तेन राज्येन बहुतरं फलं प्राप्नुयात् । जनानां हृदि नेत्रे च तस्य क्षुद्रताव्याप्तिः स्यात् । परंतु तस्मिन्राज्ये बहुदिनानि स्थिररूपेण तिष्ठेत् । अथ यदि दशमप्रथमचतुर्थगृहेषु इमौ समागतौ स्यातां तदा समयं समयं प्रति तस्मिन्राज्ये परिश्रमान्वितः । कष्टान्वितश्च भवेत् । कार्य्यावसाने भयत्रस्तः स्यात् । यदि तेषु गृहेषु १, १०, ४, इमौ समागतौ स्यातां तदा तेन राज्येन सदैव हर्षितः स्यात् । तथा सर्वक्रीडासु प्रसन्नतासु मद्यपानादिषु च । तथा जारकर्मसु तत्परो भवेत् । यदि तेषु गृहेषु १, १०, ४, मंदगः समागतः स्यात्तदापि तेन राज्येन प्रसन्नचित्तो भवेत् । तस्यावस्था समीचीना स्यात् । परंतु प्रतिसमयं विषण्णमनाश्चिंतान्वितश्च म्लानचित्तो भवेत् ।

अथाहमस्माद्राज्यान्निर्गतो भविष्यामि वा नेत्यत आह ।

तदा दशम १० चतुर्थ ४ चतुर्दश १४ षोडश १६ गृहेषु पश्ये-द्यद्येतेषु गृहेषु शुभः स्यात्तदा स्वेच्छया राज्यं त्यजेत् । यद्यशुभो भवेत्तदाऽस्वेच्छयाऽस्वायत्त्येन च तद्राज्यं त्यजेत् । कोर्थो, बला-त्कारेण राज्यो जितः स्यात् । अथ यदि तेषु गृहेषु १०, ४, १४, १६, प्रवेशी समागतः स्यात्तदा तस्माद्राज्यात्कदापि भ्रष्टो नो भवेत् । तस्मिन्राज्ये स्थिररूपेण बहुदिनानि तिष्ठेत् । अथ यदि तेषु गृहेषु स्थिरः स्यान्न तु स एव षष्ठे ६ द्वादशे १२ऽन्वादेशरूपं कुर्यात्तदापि प्रवेशिन उक्तफलं ब्रूयात् । यदि तेषु गृहेषु स्थिरः पतितः स्यात्तथा स एव षष्ठे ६ द्वादशे १२ऽन्वादेशरूपं कुर्यात्तद्र-त्तेषां साक्षीभूता निर्गमा वा द्विस्वभावाः स्युस्तदा तस्माद्राज्या-दुज्झितो भवेत् । नात्र संदेहः । एवं राज्यप्रश्नवन्मातुरपि प्रश्नं दशमगृहरूपिणा शुभाशुभान्वितेन तस्यान्वादेशेन ब्रूयात् ।

अथ राज्यप्रश्ने प्रकारान्तरमाह ।

तदा दशमगृहेषु पश्येत् । यदि तत्र प्रवेशी वा मंदगो ⁝ वा लो-हितो ⁝ भवेत्तदा तस्मिन्राज्ये विश्रामाधिक्यं स्यात् । अस्मिन्दशम-गृहे स्थिरा अशुभफलदा ज्ञेयास्तथा द्विस्वभावाः शुभफलदा इत्याशयः । नात्र संदेहः ।

अथास्माद्राज्याद्धनादिलाभो भविष्यति वा नेत्यत आह ।

तदा द्वितीयगृहरूपिणा दशमगृहरूपिणं गुणयेत्ताभ्यामुत्पन्न-रूपिणं पश्येत् । यदि स प्रवेशी वा स्थिरस्तदा तस्माद्राज्याद्धना-दिलाभः स्याच्छुभे सुगमेनाशुभे काठिन्येन महता कष्टेन । यदि निर्गमो वा द्विस्वभावो भवेत्तदा धनादिलाभो न स्यात् । अथ तस्मिन्राज्ये प्रष्टुर्दुष्टत्वमित्रत्वज्ञानाय दशमगृहरूपिणोऽन्वादेशेन ब्रूयात् । नात्र संदेहः ।

अथ मातुरवस्थायाः प्रश्न आह ।

तदा दशमगृहे पश्येत् । यदि शुभो भवेत्तदा मातुरवस्था समीचीना वाच्या । अशुभो भवेच्चेत्तदा मातुरवस्था निषिद्धतरा वाच्या । अथ मातृभिः सह मित्रत्वं दुष्टत्वं च दशमगृहरूपिणान्वादेशेन ब्रूयात् । नात्र संदेहः ।

अथोभयोः सैन्ययोर्मध्ये कस्य जय इत्यत आह ।

यदि प्रथमगृहे शुभो भवेत्तथा सप्तमगृहेऽशुभः स्यात्तदा प्रष्टुर्जयो यदि प्रथमगृहेऽशुभस्तथा सप्तमगृहे शुभः स्यात्तदा द्वितीयसैन्यजयः परंतु यदि दशमगृहेऽशुभो भवेत् । यदि दशमगृहे शुभो भवेत्तदापि प्रष्टुरेव जयः।अथ यदि प्रथमे सप्तमे चैक एव रूपी स्यात्तदा परस्परं महद्युद्धं भवेन्नात्र संदेहः ।

अथ कार्यावसाने किं भविष्यतीति प्रश्न आह ।

तदा पंचदशगृहे १५ पश्येत् शुभे शुभमशुभे चाशुभं फलं वाच्यम् । अथोभयोः सैन्ययोर्द्विष्टयोर्मध्ये को बलवान्कस्य च विजय इत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तत्र पूर्वार्धे रमले प्रष्टुर्ज्ञेयं तथाहि । १, २, ३, ४, ९, १०, १३, एवमुत्तरार्धे द्वितीयसैन्याधिपस्य ज्ञेयं तथाहि ५, ६, ७, ८, ११, १२, १४, तथा पंचदशगृहं १५ नीतिकर्त्तुर्मध्यस्थजनस्य ज्ञेयं षोडश १६ गृहं संपूर्णप्रश्नरमलानां ज्ञेयम्।यस्मिन्नर्द्धभागे बलाधिका रूपिणः स्युः स बलवांस्तस्य विजयो वाच्यः यदि गुरुरूपी वा बुधरुपी पंचदशे नीतिकर्तृगृहे समागतः स्यात्तदोभयोः सैन्ययोर्मध्ये संधिः स्यात् । तयोर्युद्धं विपर्य्ययं ज्ञेयमिति । अथ यदि चेद्रमलेषु लोहितोऽ ꣸ दृश्यो भवेत्तदा द्वयोः सैन्ययोर्मध्ये रुधिरप्रवाहः स्यात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तत्र प्रथमद्वितीयतृतीयचतुर्थनवमदशमत्रयोदशपंचदशगृहाणि १, २, ३, ४, ९, १०,

१३, १५, प्रष्टुर्ज्ञेयानि । एवं पंचम षष्ठसप्तमाष्टमैकादशद्वादश चतुर्दशषोडशगृहाणि ५, ६, ७, ८, ११, १२, १४, १६, द्वितीयसैन्यस्य ज्ञेयानि। उभयपक्षे पश्येद्यदि प्रष्टृपक्षे निर्गमा बहुतराः स्युस्तदा प्रष्टुरेव जयः स एव बलवान् यदि द्वितीयपक्षे निर्गमा बहुतराः स्युस्तदा द्वितीयसैन्याधिपस्य जयो नात्र संदेहः ।

अथ प्रकारांतरमाह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तस्य पूर्वार्द्धं प्रष्ट्रे दातव्यमुत्तरार्धं च शत्रवे।उभयस्मिन्पक्षे पश्येत्को रूपी कस्मिन्पक्षे साक्षित्वं ददाति । तस्यैव जयः । तदाह यो रूपी यस्मिन्गृहे समागतः स्यात्तस्य चत्वारः साक्षीभूताः संति । एतत्प्रकृतिक्रमोपरि विचारयेत् । अथ यो रूपी वर्णक्रममतेन स्वगृहे समागतः स्यात्तस्य द्वौ साक्षीभूतौ ज्ञेयौ । तथा यो रूपी तत्त्वक्रममतेन स्वगृहे समागतः स्यात्तस्यैक एव साक्षीभूतो ज्ञेयः । एवं प्रश्नरमलेषु साक्षीभूतान्विलोकयेत् । यदि प्रष्टृपक्षे साक्षीभूता बहुतराः स्युस्तदा प्रष्टुरेवजयः । यदि शत्रुपक्षे साक्षीभूता बहुतराः स्युस्तदा शत्रोर्जयः ।

अथ प्रकारांतरमाह ।

द्वयोः पक्षयोः केवलबिंदून्गणयेत् । यस्य केवलबिंदवो बहुतरा स्युस्तस्यैव जयः स एव बलवान् । यद्युभयपक्षे केवलबिंदवः समानसंख्यांकाः स्युस्तदा द्वयोर्विवादिनोर्मध्ये संधिस्स्यान्नात्र संदेहः ।

अथ प्रकारांतरमाह ।

उभयपक्षे विलोकयेत् । यस्मिन्पक्षे शुभा बहुतरा स्युस्तस्यैव जयः । यदि द्वावपि पक्षौ समानरूपौ स्यातां तदा दशमगृहे १० च पश्येत् । यदि शुभो भवेत्तदा प्रष्टुर्जयो वाच्यः । अशुभश्चेत्तदा शत्रोर्जयः । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रथम १ द्वितीय २ नवम ९ त्रयोदश १३ गृहाणि प्रष्टुर्ज्ञेयानि।

तथा सप्ता ७ ष्ट ८ द्वादश १२ चतुर्दश १४ गृहाणि द्वितीयस्य ज्ञेयानि तदुभयपक्षे विलोकयेत् । यस्य पक्षे बहुबलयुता रूपिणः स्युस्तस्यैव जयो नात्र संदेहः ।

अथोभयोर्मध्ये संधिर्भविष्यति वा नेत्यत आह ।

तदा प्रष्टुश्चतुर्थगृहे १, २, ९, १३, तथा शत्रोश्चतुर्दशगृहे विलोकयेत् ७, ८, १२, १४ यदि पृच्छकपक्षगृहस्थरूपी कोऽपि शत्रुपक्षेष्वन्वादेशरूपं कुर्यात्तदा पृच्छकपक्षात्संधिः स्यात् । यदि शत्रुपक्षगृहस्थरूपी पृच्छकपक्षेऽन्वादेशरूपं कुर्यात्तदा शत्रुपक्षात्संधिः स्यात् । अत्र स्वगृहस्थरूपी ग्राह्यो नात्र संदेहः ।

अथ द्वयोर्मध्ये कस्य जय इत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तस्य पूर्वार्धे १, २, ३, ४, ९, १०, १३, १५, प्रष्टुर्ज्ञेयम् । तथोत्तरार्द्धे ५, ६, ७, ८, ११, १२, १४, १६, शत्रोर्ज्ञेयम् । यस्य पक्षे बहुबलान्विता रूपिणः स्युस्तस्यैव ज्ञेयो जयः स एव बलवान् ।

अथ प्रकारांतरमाह ।

प्रथम १ द्वितीय २ नवम ९ त्रयोदश १३ गृहाणि प्रष्टुर्ज्ञेयानि। तथा सप्तमा ७ ष्टम ८ द्वादश १२ चतुर्दश १४ गृहाणि द्वितीयसैन्याधिपस्य ज्ञेयानि। यस्य पक्षे बहुबलान्विता रूपिणः स्युस्तस्यैव जयः । यद्युभयपक्षे बलान्विता रूपिणः स्युस्तदा तयोर्मध्ये संधिः स्यात् । अथ यदि रमलतुला १५ गृहे सौम्यो ☰ वा बोधनः ⁝ समागतः स्यात्तदा द्वयोर्मध्ये संधिः ।

अथ प्रकारांतरमाह ।

तत्र प्रथम १ द्वितीय २ नवम ९ त्रयोदश १३ गृहाणि प्रष्टुर्ज्ञेयानि । तथा सप्तमा ७ ष्टम ८ द्वादश १२ चतुर्दश १४ गृहाणि शत्रोर्ज्ञेयानि । एवं द्वयोः पक्षं विभागप्रथमगृहसप्तमगृहरूपिणं पश्येत् । यद्येतौ रमलेषु तसली-

सदृष्ट्या वा तसदीसदृष्ट्या संमिलितौ स्यातां तदा युद्धात्प्रागेव द्वयोर्मध्ये संधिः स्यात्। परंतु यदि शुभद्विस्वभावाश्चेत्। अथ यदि प्रथमगृहरूपी। त्रि ३ पंचम ५ नवमै ९ कादश ११ गृहेष्वन्वादेशरूपं कुर्यात्तदा प्रष्टृपक्षात्संधिः युद्धविपर्ययः स्यात्। यद्येतेषु गृहेषु ३, ५, ९, ११, सप्तमगृहरूप्यन्वादेशरूपं कुर्यात्तदा शत्रुपक्षात्संधिः स्यात्। अथ यदि प्रथमसप्तमगृहरूपिणौ रमलेषु स्वस्मिन्मध्ये तरवीयदृष्ट्या वा मुकाविलादृष्ट्या संमिलितौ स्याताम्।तदा युद्धे जाते सति पश्चात्संधिः स्यान्नात्र संदेहः।

अथ द्वयोर्विवादिनोर्मध्ये समाधानकर्त्ता को भविष्यतीत्यत आह।

प्रथमलिशानुलअमररूपिणं तथा सप्तमं च पश्येत्तत्सदृशजनो मध्ये समाधानं कुर्याद्ध्रुवम्। यदि स एव पंचदश १५, गृहेऽन्वादेशरूपं कुर्यात्तदा तस्य रूपिणो ग्रहानुरूपेण मध्यस्थजनस्य देशस्थानप्रकृतिस्वरूपादिकं ब्रूयान्नात्र संदेहः।

अथ दुर्गभंगो भविष्यति वा नेत्यत आह।

तदा केंद्रगृहेषु १, ४, ७, १०, पश्येत्स यदि कोऽपि शुभः कोप्यशुभो भवेत्तदा तं दुर्गं झटित्येव गृह्णीयाद्यायी यदि केंद्रगृहेषु सर्वशुभाः स्युस्तदा तं दुर्गं कदापि ग्रहीतुं समर्थो नो भवेद्यायी परंतु संधिः स्याद्वाऽऽलस्यतया व्याजादिभिश्च दुर्गग्रहणाभावः। यदि केंद्रगृहेषु बुधरूपी समागतः स्यात्तदाऽऽलस्यतया कापट्येन च दुर्गग्रहणाभावो वाच्यः। दुर्गग्रहणासमर्थो यायी भवेन्नात्र संदेहः।

अथ प्रकारांतरमाह।

तदुद्देशं समाश्रित्य रमलं पातयेत्। तदनंतरं प्रथम १ चतुर्थ ४ षष्ठ ६ सप्तम ७ गृहरूपिणं मातृगृहं विरच्य द्वितीयरमलं पातयेत् तदा केंद्रेषु १, ४, ७, १०, तथैकादश ११ गृहे त्रयोदश १३ गृहे च पश्येद्यद्येतेषु गृहेषु प्रवेशिनः स्युस्तदा तं दुर्गं झटित्येव गृह्णीयाद्यायी। नान्यथा।

अथाखेटार्थं गच्छामि तत्प्राप्तिर्भविष्यति वा नेत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत् । तदनंतरं षष्ठ ६ सप्तम ७ पंचम ५ प्रथम १ गृहरूपिणा मातृगृहं विरच्य द्वितीयरमलं कुर्या-द्यदि केंद्रगृहे सूरी ⁝ रूपी वा दैत्यार्चितो ⁝ द्वावेतौ रूपिणौ स्यातां तदाऽऽखेटयात्रायां पक्षिविशेषाणां प्राप्तिः स्यात् । नात्र संदेहः ।

इति श्रीरमलरहस्ये सारसंग्रहे भयभञ्जनशर्म्मकृतौ दशमगृहस्य प्रश्नकथनं नाम दशमोऽध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः ।

तस्मिन्नेकादशाध्याये रुद्रमितगृहे प्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादावेकादशगृहविचारांशमाह । आशाया विचारः । भाग्योद-यस्य । सात्त्विकमित्राणां विचारः । परमपदवीप्राप्तेर्विचारः यद्द्रव्य-स्यागमनं तेजस्त्वेन तेजस्त्वप्रसंगेन च स्यात्तद्द्रव्यस्य विचारः । अशक्तताया विचारः । यद्वस्तु दृष्ट्या तिष्ठेत्तस्य विचारः । धर्म्म-निरीक्षकस्य विचारः । पारसीवचने अमीन इत्युच्यते । प्रथमपुरु-षेण जातस्य बालकस्य विचारः । तथा प्रथमस्त्रिया सह जातस्य बालकस्य विचारः । भ्रातृप्रवासस्य विचारोऽर्थोदयस्य विचारः । भूपकोषस्य विचारः । स्त्रीणामसक्तताया विचारः । तथा मातृद्रव्यस्य विचारः । तथा तासां संमेलनस्य विचारः । भाग्यस्य विचारः । लक्ष्म्या विचारः । धान्यकणस्य विचारः । ईश्वरस्तुतेर्विचारः । इत्यादि विचारांशमेकादशगृहे विचारयेत् । यदि मित्राशयप्रश्नं कुर्यात्तदा चैकादशगृहे ११ पश्येद्यदि शुभप्रवेशी भवेत्तदा सर्वासा सिद्धिः स्यात् । तथा मित्राणामवस्था समीचीना वक्तव्या । एव-मेकादशगृहविचारांशानां सर्वेषामवस्था शुभतरा वाच्या । तथा मित्रेभ्यः प्रष्टुर्मनोऽभिप्रायाः सिद्ध्यंति । परंतु स्वायत्त्यने स्वेच्छया सुगमेन च । यद्यशुभे प्रवेशी भवेत्तदा मित्रादीनामवस्था निषिद्ध-तरा वाच्या । मित्रादिभ्यः प्रष्टुर्मनोऽभिप्रायाः सिद्ध्यंति । तथा

तेभ्यः फलं प्राप्नुयात्प्रष्टा परंतु महता कष्टेन काठिन्येन च । अस्वायत्त्येन सर्वे मनोऽभिप्रायाः सिद्ध्यंति । अथ यदि शुभनिर्गमो भवेत्तदा मित्रादयः सन्तोषयुक्ताः स्युः । तथा निश्चितं मनसा प्रष्टा तेभ्यः सुखं विश्रामं च न प्राप्नुयात्। परंतु स्वायत्त्येन स्वेच्छया च। तिष्ठेदथ यद्यशुभनिर्गमो भवेत्तदा मित्रादीनामवस्था निषिद्धतरा वाच्या तेषु पृथक्त्वं तेभ्यः किंचिदपि फलं न प्राप्नुयात्प्रष्टा तथा कश्चिदपि मनोऽभिप्रायाः सेत्स्यति परंतु स्वायत्त्येन काठिन्येन च । अथ यदि शुभस्थिरो भवेत्तदा मित्रादीनामवस्था समीचीना वाच्या । तथा तेभ्यः फलं प्राप्नुयात्प्रष्टा । सर्वे मनोऽभिप्रायाः सिद्ध्यंति प्रष्टुः । परंतु स्थिरतया । अथ यदि शुभस्थिरो भवेत्तदा मित्रादीनामवस्था निषिद्धतरा वाच्या । एभ्यः प्रष्टा विषण्णमना भवेत् । तथा मित्रादिभ्यः फलं न प्राप्नुयात्प्रष्टा । प्रष्टुर्मनोऽभिप्रायाः केचिदपि न सिद्ध्यंति परं त्वस्वायत्त्येन काठिन्येन च।अथ यदि शुभद्विस्वभावोभवेत्तदा मित्रादीनामवस्था समीचीना वाच्या । तेभ्यः प्रष्टा द्विविधचित्तो भवेत् । कदापि प्रष्ट्रा सार्द्धं संमेलनं कुर्य्युः । कदापि दूरतरं व्रजेयुः । परंतु स्वायत्त्येन स्वेच्छया च । प्रष्टा तेभ्यः सामान्यफलं प्राप्नुयात् । न तु मनोऽभिलषितं किंचित् । अथ यद्युभयत्र द्विस्वभावो भवेत्तदा मित्रादीनामवस्था निषिद्धतरा वाच्या । ते मित्रादयः विषण्णमनसः स्युः । प्रतिसमयमवस्थांतरं प्राप्नुयुः । तथा तेभ्यः प्रष्टा किंचिदपि फलं न प्राप्नुयात् । एभ्यः कदापि मनोऽभिप्रायाः सिद्ध्यंति कदापि न।कस्मात्त भयत्रासामित्रत्वाद्द्विविधत्वात् । तेभ्यः प्रष्टा द्विविधचित्तो भवेन्नात्र संदेहः।

अथ स हितो मया सार्धं मित्रत्वं करिष्यति वा नेत्यत आह ।

तदैकादशगृहरूपिणमन्वादेशेन ब्रूयात् । यदि सोऽन्वादेशस्तृतीयै ३ कादश ११ पंचम ५ नवम ९ गृहेषु समागतः स्यात्तदा.

स हितो मित्रत्वं परमप्रीतिं च करिष्यतीति वाच्यम्। यदि सोऽन्वादेशः सप्तम ७ चतुर्थ ४ दशम १० द्वादश १२ गृहेषु पतितः स्यात्तदा प्रष्ट्रा सार्द्धं स हितो दुष्टत्वं कुर्य्यात्। यदि शेषगृहेषु सोऽन्वादेशः स्यात्तदा न मित्रत्वं न दुष्टत्वं कुर्य्यात्। प्रष्ट्रा सार्धं स हित एवं संपूर्णविचारेषु फलं वाच्यम्। नात्र संदेहः।

अथ मनोऽभिप्रायसिद्ध्यर्थं प्रष्टा कुत्रापि गच्छेत्तत्र सिद्धिर्भविष्यति न वेत्यत आह।

तत्रैकादशगृहस्वामिनमेकादशगृहरूपिणं च पश्येद्यदि दशमप्रथमगृहस्वामिनं मित्रत्वदृष्ट्या पश्येत्तदा सुगमेन मनोऽभिप्रायाः सिद्ध्यंति यदि दुष्टत्वदृष्ट्या पश्येत्तदा काठिन्येन मनोऽभिप्रायाः सिद्ध्यंति। यदि चेन्नो पश्येत्तदा मनोभिप्राया न सिद्ध्यंति। नात्र संदेहः।

अथ मनोऽभिप्रायसिद्ध्यर्थं प्रष्टा कुत्रापि गच्छेत्तत्राभिप्रायाः सिद्ध्यंति वा नेत्यत आह।

तदा सप्तमगृहरूपिणमेकादशगृहरूपिणश्चान्वादेशरूपं पश्येत्। यदि शुभगृहेषु पतितःस्यात्तदा तत्र गते सति मनोऽभिप्रायाःसिद्ध्यंति। परंतु सुगमेन स्वायत्त्येन स्वेच्छया च। यदि सोऽन्वादेशोऽशुभगृहे समागतः स्यात्तदा मनोऽभिप्रायाः सिद्ध्यंति। परंतु काठिन्येन महता कष्टेन च। यदि कुत्राप्यन्वादेशरूपो नो भवेत्तदा केचिदपि मनोऽभिप्राया न सिद्ध्यंति। एष प्रकारो बहु परीक्षितो वर्त्तते। नात्र संदेहः।

अथ तेभ्यो मित्रादिभ्यो मनोभिप्रायाः सिद्ध्यंति वा नेत्यत आह।

तदा प्रथमगृहरूपिणमेकादशगृहस्थेन गुणयेत्। ताभ्यामुत्पन्नरूपी यदि द्वितीयगृहे समागतः स्यात्तदा ध्रुवं तेभ्यो मनोऽभिप्रायाः सिद्ध्यंति अत्रावश्यकं तस्य रूपिणो निर्गमत्वं प्रवेशित्वं स्थिरत्वं द्विस्वभावत्वं तथाऽन्वादेशं च विलोकयेत्। तादृशं फलं ब्रूयात्। नात्र संदेहः।

अथ मित्राणि मित्रत्वं करिष्यंति तेभ्यश्च शुभफलप्राप्तिर्भविष्यति वा नेत्यत आह ।

तदा चैकादशगृहे ११ पश्येद्यदि तत्र शुभप्रवेशी भवेत्तदा मित्रादयो मित्रत्वं करिष्यंति मित्राणि बहुतराणि भविष्यंतीति ब्रूयात् । यदि स एव प्रथमगृहे वा पंचमगृहेऽन्वादेशरूपं कुर्यात्तदा प्रष्टृमित्रयोर्मध्ये मित्रत्वं हितत्वं संमेलनत्वं च बहुतरं भवेत् । तथैकस्थानस्थितत्वात्स्वस्मिन्मध्ये प्रसन्नरूपौ स्याताम् । अथ यद्यपि चैकादशगृहेषु शुभो भवेत्पुनः स एव षष्ठे ६ द्वादशेऽ१२ न्वादेशरूपं कुर्यात्तदा प्रष्टुर्मित्रादयो मित्रत्वे सात्त्विकरूपा नो भवेयुः । अपि तु मित्रत्वलंपटरूपाः स्युः । उक्तं च । "परोक्षे कार्य्यहंतारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुंभं पयोमुखम्" इति ॥ एवं ते मित्रादयः स्युः। अथ यद्येकादशगृहे ११ ऽशुभो भवेत्तदा मित्राणां कारणेन प्रष्टा क्लेशपरिश्रमान्वितो भवेत् । यदि स एव पंचमगृहेऽन्वादेशं कुर्यात्तदा तेभ्यो मित्रादिभ्यो निषिद्धतरां वार्त्तां शृणुयात् । तथा तेभ्यः शुभत्वं न प्राप्नुयात् । अथ यदि द्वादशगृहेऽन्वादेशो भवेत्तदा मित्रादयो दुष्टत्वं कुर्य्युः । यदि सोऽन्वादेशः षष्ठे ६ ऽष्टमे वा स्या ८ त्तदापि तदेव फलं मित्रादयो दुष्टत्वं कुर्य्युरिति । अथ यदि प्रथमगृहरूपिणा सार्धं रूपी चैकादशगृहे समागतः स्यात्तदापि हितमित्रैः सार्द्धं वाग्वादः कलहश्च स्यात् । तथा तेभ्यः प्रष्टा क्लेशपरिश्रमान्वितः स्यात् । नात्र संदेहः ।

अथ मनोऽभिप्रायसिद्ध्यर्थं प्रकारांतरमाह ।

तदा प्रथमगृहे १ पश्येद्यदि शुभप्रवेशी भवेत्तथा स एव रुद्रमितगृहे-११ ऽन्वादेशरूपं कुर्यात्तदा ध्रुवं मनोऽभिप्रायाः सिद्ध्यंति तथा चाशापि सिद्ध्येत् ।यदि प्रथमगृहरूपी चैकादशगृहेऽन्वादेशरूपं नो कुर्यात्परंतु रुद्रगृहस्य रूपी ११ द्वितीयगृहेऽन्वादेशरूपो भवेत्तदापि मनोऽभिप्रायाः सिद्ध्यंति।यदि स शुभप्रवेशी भवेत्तदा सुगममार्गेण । यद्य-

शुभो भवेत्तदा काठिन्येन। अथ यदि स्थिरो वा द्विस्वभावो भवेत्तदा यथा पूर्वोक्तं मया पश्चिमदेशीयानां प्रश्नकथनोपाये तदेव फलं ब्रूयादेवं चतुर्दश १४ पंचदश १५ षोडश १६ गृहरूपिणोऽपि विलोकयेत् । अनेन मनोऽभिप्रायाः सिद्ध्यंति वा नो सिद्ध्यंतीति ब्रूयात्। तदाहैतेषां साक्षीभूतान्दृष्ट्वा तेषां बलं प्राप्य फलं ब्रूयात् । तदा प्रश्नाः सत्यरूपाः स्युः । नात्र संदेहः ।

इति श्रीरमलरहस्ये सारसंग्रहे भयमञ्जनशर्म्मकृतौ भवगृहस्य प्रश्नकथनं नामैकादशोऽध्यायः ॥११॥

---

## अथ द्वादशोऽध्यायः ।

अस्मिन्द्वादशाध्याये द्वादशगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादौ द्वादशगृहविचारांशमाह। दुष्टानां विचारः निषिद्धवक्तुर्विचारो बृहच्चतुष्पदानां विचारस्तथा बृहच्चतुष्पदानां क्रयविक्रययोर्विचारः। केचिद्वदंति येषां चतुष्पदानां खुरा वृत्ता भवंति तेषां चतुष्पदानां विचारः कर्त्तव्यः। बन्धस्य विचारः । तथा बन्धस्थगृहस्य विचारः । रुद्धस्य विचारः । धार्य्यवस्तुनो विचारः । अभाग्य विचारः। कार्येभ्यो भिन्नताया विचारः । पृथक्करणस्य विचारः । तथा नृपार्प्पितपरमपदवीविचारः पृथग्भूतस्य विचारः। राज्यभ्रष्टस्य विचारः । इत्यादिविचारो द्वादशगृहे विचार्यः ।

अथ दुष्टाः केन कारणेन दुष्टत्वं कर्वंतीत्यत आह ।

यदि द्वादशगृहरूपी प्रवृत्तिगृहे वा संख्यागृहे वा प्रसन्नताया गृहे वा हर्षितगृहे चान्यस्थाने समागतः स्यात्तदा तावत्संख्यं बलं दुष्टानां वाच्यम्। यदि द्वादशगृहरूपी अन्वादेशं पश्येत् सोऽन्वादेशश्च प्रथमगृहे १ भवेत्तदा प्रष्टुः शरीरकारणेन यदि द्वितीयगृहे भवेत्तदा द्रव्याणां कारणेन तथा सहायकारणेनेति । अथ तृतीयगृहे भवेत्तदा गोत्रकुटुम्बिनां कारणेन तथा कुत्रापि गमनागमनकारणेनेति । यदि चतुर्थगृहे भवेत्तदा पितुः कारणेन ग्रामस्वसत्ताभूमीनां

कारणेन च । एवमग्रेऽपि गृहानुसारेण दुष्टत्वकारणं ब्रूयात् । नात्र संदेहः ।

अथ दुष्टानां बलं बलहीनत्वं च द्वादशगृहेण ब्रूयात् ।

· यदि द्वादशगृहरूपी प्रकृतिगेहे वा संख्यागृहे वा प्रसन्नताया गेहे वा हर्षितगृहे चान्यस्थाने समागतः स्यात्तदा तावत्संख्यं बलं दुष्टानां वाच्यम् । यदि द्वादशगृहरूपी अप्रसन्नतागृहे म्लानतागृहे बलहीनगृहे नीचगृहे समागतः स्यात्तदा दुष्टानां बलहीनत्वं ब्रूयात् यदि स अशुभो भवेत्तदा दुष्टाः प्रष्टुरुपरि बहुतरं बलं कुर्युः । पृच्छकाय क्लेशदातारश्च स्युः । यदि स शुभो भवेत्तदा तेषु समायाति तदा फलानि स्युः ।

अथ स दुष्टः कोपि शिष्टजनो वा निर्नामा वा प्रसिद्धो वर्त्तेत इत्यत आह ।

तदा द्वादशगृहरूपिणाऽन्वादेशं विलोकयेत् । यदि केंद्रगृहेष्वन्वादेशरूपं कुर्यात्तदा स दुष्टः कोऽपि शिष्टमनुष्यो वर्त्तते। यदि पणफरेषु समागतः स्यात्तदा स दुष्टः कोऽपि प्रसिद्धजनो वर्त्तते । यद्यापोक्लिमगृहेष्वन्वादेशरूपं कुर्यात्तदा स दुष्टो निर्न्नामा नीच जनो वर्त्तते नात्र संदेहः ।

अथ यदि कोऽपि पृच्छेन्मम जयो वा शत्रोरित्यत आह ।

तत्र प्रथम १ द्वितीय २ नवम ९ गृहाणि प्रष्टुर्ज्ञेयानि । तथा सप्तमा ७ ऽष्टम ८ द्वादश १२ गृहाणि शत्रोर्ज्ञेयानि यदि पृच्छकपक्षे बहवो बलान्विता रूपिणः स्युस्तदा प्रष्टुरेव जयः । यदि शत्रुपक्षे बहुबलान्विता रूपिणः स्युस्तदा शत्रोर्जयो यदि रमलतुलायां १६ बोधनो ⁝ वा सूरी ⁝ रूपी वा तीक्ष्णांशु ⁝ वा शीतांशु ⁝ भवेत्तदा तयोर्मध्ये संक्षेपः समाधानं स्यात् ।

अथ यदि कोऽपि पृच्छेत्संक्षेपः स्थिररूपो भवेद्वा नेत्यत आह ।

तदा द्वादशगृहरूपिणं प्रथमगृहरूपिणा गुणयेत् ताभ्यामुत्पन्न-

रूपिणं पश्येत्। यदि स शुभस्थिरो भवेत्तदा संक्षेपः स्थिररूपो बहुदिनानि तिष्ठेत्। नान्यरूपिभिः।

अथ यदि कोऽपि दुष्टानां बृहच्चतुष्पदानां तथा बद्धपुरुषाणां प्रश्नं कुर्यात्तदाह।

तदा द्वादशगृहे पश्येत्। यदि शुभप्रवेशी भवेत्तदा दुष्टा बहुतराः संति बलिष्ठास्ते दुष्टत्वं कुर्य्युरिति। परंतु तेभ्यः किंचिदपि क्षयत्वं नो भवेत्। स्वायत्त्येन। तथा बृहच्चतुष्पदा अपि बहुतरा स्युः बद्धचमानपुरुषः सदैव बद्ध एव तिष्ठेदिति। अथ यदि वा शुभप्रवेशी भवेत्तदा दुष्टाः संति ते चास्वायत्त्येन दुष्टत्वं कुर्य्युस्तेषां दुष्टानां कोऽपि निषिद्धशिक्षां करोति। अत एव निषिद्धकर्मणि निरतास्ते दुष्टाः संति। प्रष्टा तेभ्यः संयमं कुर्य्यात्तदा भव्यम्। अथ यदि शुभनिर्गमो भवेत्तदा दुष्टाः क्षीयमाणाः स्युस्ते च स्वायत्त्येन दुष्टत्वं तिरस्कारं च कुर्य्युः। तथा बृहच्चतुष्पदानामपि क्षयो भवेत्। बंधगतपुरुषाणां मोक्षः स्यात्। सुगममार्गेण एवं सर्वबंधगतानां मोक्षो वाच्यः। अथ यद्यशुभनिर्गमो भवेत्तदापि दुष्टा दुष्टत्वं तिरस्कारं च कुर्य्युः। परंतु स्वायत्त्येन तदा दुष्टानां मनोऽभिप्राया नो सिद्धचंति। तेषामवस्था निषिद्धतरा स्यात्। एवं बृहच्चतुष्पदा अपि क्षीयमाणाः स्युः। बंधगतानां मोक्षः स्यात्। परंतु स्वायत्त्येन। अथ यदि शुभस्थिरो भवेत्तदा दुष्टा बहुतराः स्युः। तेषामवस्था समीचीना स्यात्। परंतु दुष्टत्वं प्रकटतया नो कुर्य्युः। गुप्तत्वेन स्वमनसि दुष्टत्वं स्थापयेयुः। प्रष्टुरुपरि सदैव दुष्टत्वं व्याजेन कुर्य्युः। परंतु तेभ्यः किंचिदपि क्लेशं नो प्राप्नुयात्प्रष्टा। एवं बृहच्चतुष्पदा अपि बहुतराः स्युस्तेषां वर्द्धमानता स्यात्। बंधगतो बंध एव तिष्ठेत्। परंतु स्वायत्त्येनाथ यद्यशुभस्थिरो भवेत्तदा ते दुष्टाः परोक्षे दुष्टत्वं कुर्य्युरग्रे दुष्टत्वं प्रकटं नो कुर्युः। अत एव तेभ्यो दुष्टेभ्यः संयमेन तिष्ठेत्प्रष्टा तदा समीचीनं स्यात्। एवं बृहच्चतुष्पदा अपि क्षीयमाणाः स्युः। तथा बंधगतपुरुषस्यापि शिरश्छेद-

नस्य भयं वाच्यम् । नात्र संदेहः । अथ यदि शुभद्विस्वभावो भवेत्तदा ते दुष्टाः प्रतिसमयं स्वरूपांतरं व्रजेयुः । तथा बहुतराश्चिन्तः कुर्य्युस्ते झटित्येव चिंताभिन्नौ मुक्ताः स्युः । कदापि दुष्टत्वं कुर्य्युः कदापि न । परं अष्टुः किंचिदपि क्षीयमाणत्वं नो भवेत् । एवं बृहच्चतुष्पदाः स्वहस्ताद्गच्छेयुः । पुनरपि तेषामागमनं भवेत् । परंतु स्वायत्त्येन । तथा बंधवान्बधान्मुच्येत पुनरपि बंधगतः स्यात् । परंतु किमपि क्षयत्वं नो भवेत् । अथ यद्यशुभद्विस्वभावो भवेत्तदा दुष्टा दुष्टत्वं कुर्य्युः परंतु स्वायत्त्येन तथा ते दुष्टा अनेकविडंबनां कुर्य्युस्तेषां दुष्टानां कोऽपि निषिद्धशिक्षां कुर्य्यात्तेन दुष्टाः सदैव दुष्टत्वं कुर्य्युः । यदि भाग्योदयगृहेषु शुभो भवेत्तदा सुगममार्गेणाशुभश्चेत्तदा काठिन्येन अथ यदि भाग्योदयेषु कतिपयप्रवेशिनः कतिपयनिर्गमा भवेयुस्तदा बलवांस्तथैव फलं ब्रूयात् । यदि तावपि बलिनौ सौम्यौ स्यातां तदा तौ गुणयेत् । ताभ्यामुत्पन्नरूपिणः फलं ब्रूयात् । व्यत्यये व्यत्ययं फलं वाच्यम् ।

अथ प्रकारांतरमाह ।

यदि द्वादशगृहे निर्गमो भवेत्तदा बंधवान्बन्धान्मुच्येत शुभे सुगममार्गेणाशुभे काठिन्येन।परंतु यदि साक्षीभूताः साहाय्यं कुर्युस्तदा यदि दशमगृहस्य साक्षीभूतेषु निर्गमो भवेत्तदा तु ध्रुवमेव झटित्येव बंधवान्बधान्मुच्येत । शुभे सुगमेनाशुभे काठिन्येन यदि प्रवेशी भवेत्तदा बंधवान्बद्ध एव तिष्ठेत् । शुभे विश्रामेणाशुभे कष्टेन । स्थिरश्चेत्तदा प्रवेशिवत्फलं ब्रूयात् । यदि द्विस्वभावो भवेत्तदा बंधवान्बंधान्मुच्येत पुनरपि बंधगतो भवेत् । शुभे परिणामे मोक्षः । अशुभे सदैव बन्धगतः । अथ किंचिद्विशेष उच्यते । यदि द्वादशा १२ ष्टम ८ तृतीय ३ गृहेषु लोहितः ⁝ समागतः स्यात्तदा

बन्धवतः शिरश्छेदं वा केनाप्युपायेन मृत्युरिति वाच्यम् । अत्र केषु चित्पुस्तकेषु तृतीयगृहरहितामित्युक्तं वर्त्तते नात्र संदेहः ।

अथ प्रकारांतरमाह ।

चतुर्थ ४ षष्ठा ६ ष्टम ८ द्वादश १२ गृहरूपिभिर्बंधगतस्य प्रश्नं ब्रूयात् । द्विस्वभावनिर्गमाभ्यां मोक्षं प्रवेशिस्थिराभ्यां बंधगतत्वं द्विस्वभावेन मोक्षं पुनरपि बंधगतत्वं वदेत् । नात्र संदेहः । एवमेव बहुग्रंथेपूक्तं वर्त्तते ।

अथ बद्धमोक्षणप्रश्ने प्रकारांतरमाह ।

तदुद्देशं समाश्रित्य रमलं पातयेत्।तत्र चतुर्थाष्टमाभ्यां रूपिणमुत्पादयेत्।एवं सप्तमदशमाभ्यां रूपिणमुत्पादयेत् । द्वाभ्यामेकरूपिणमुत्पाद्यानेन षष्ठगृहरूपिणं गुणयित्वा रूपिणमुत्पादयेत् । तं पश्येत् । यदि शुभनिर्गमो भवेद्यथा तदा बंधनाञ्झटित्येव मोक्षं प्राप्नुयात्। परंतु स्वायत्त्येनसुगमेन चायद्यशुभनिर्ग्गमो भवेद्यथा तदा बंधवान्केषांचित्सहायदानेन मोक्षं प्राप्नुयात्।परंतु स्वायत्त्येन काठिन्येनचायदि शुभप्रवेशी भवेद्यथा तदा स्थिरतयामोक्षं प्राप्नुयात्।यद्यशुभप्रवेशी भवेद्यथा तदा बंधवान्बद्ध एव मृत्युं प्राप्नुयात् । यदि स लोहितो भवेत्तथा स एव चतुर्थगृहेऽपि स्यात्तदा ध्रुवमेव सम्यक् प्रकारेण बंधवांस्ताडितो भवेत्। यदि स एव लोहितो भूत्वा दशमगृहे समागतः स्यात्तदा बद्धं कोऽपि हस्ताभ्यां हतवान्वा केनाप्युपायेन हतो भवेद्यदि स सौरि र्वा मंदगो भवेत्स एव च दशमगृहे समागतः स्यात्तदा बद्धं शिरसाऽन्तरिक्षे फलवत्स्थापयेत् । यदि स पातो भवेत्तदा बहुपरिश्रमेण बहुकष्टेन चोपद्रवेण बन्धवान्मोक्षं प्राप्नुयात् । अथ यद्येतेभ्यः शेषरूपिणः स्युस्तदा सुगममार्गेण मोक्षं प्राप्नुयान्नात्र संदेहः ।

अथ दुष्टाः कीदृशाः संतीत्यत आह ।

तदा द्वादशगृहे पश्येद्यद्येतेष्वे कः समागच्छेत्तथा पचदश-

१५ षोडश १६ गृहेषु शुभप्रवेशिनः स्युस्तदा दुष्टः प्रष्टुरुपरि दुष्टत्वं कुर्यात्परंतु प्रष्टा कमपि संदेहं न कुर्य्यात् । तथा दुष्टोपि दुष्टत्वमात्रमेव कुर्य्यान्नतु किंचित्क्लेशं दद्यात् । अथ यदि शुभप्रवेशिनः स्युस्तदा दुष्टो दुष्टत्वं कर्तुमिच्छेत्कुर्याच्च । अथ यदि शुभनिर्गमो भवेत्तदा दुष्टो दुष्टत्वं त्यजेत् । तयोर्मध्ये संक्षेपोत्पत्तिः स्यात् । परंतु स्वायत्त्येन । यद्यशुभनिर्गमो भवेत्तदा दुष्टो दुष्टत्वं त्यजेत् । परं त्वस्वायत्त्येन । संक्षेपस्तु कदापि न स्यात् । अथ यदि शुभस्थिराः स्युस्तदा तयोर्मध्ये संक्षेपो न स्यात् । स दुष्टो दुष्टत्वं कुर्यात्परंतु दुष्टत्वकर्मणि निरतो नो भवेत् । यद्यशुभस्थिरो भवेत्तदा तयोर्मध्ये संक्षेपो न स्यात् । परंतु दुष्टो दुष्टत्वं कुर्यात् । अथ यदि शुभद्विस्वभावाः स्युस्तदा तयोर्मध्ये संक्षेपसमाधानं स्यात् । तथा प्रष्टा निर्भयो भवेत् । परंतु संक्षेपो बहुदिनानि नो तिष्ठेत् । कदापि कलियुद्धे भवेताम् । यद्यशुभद्विस्वभावो भवेत्तदा तयोर्मध्ये दुष्टत्वं युद्धं च स्यात् । अत एव प्रष्टा निर्भयो नो तिष्ठेत् । सभयः समीचीनः संक्षेपसमाधानं न स्यात्प्रत्यहं कलहो बहुतरो भवेत्स दुष्टोऽपि दुष्टत्वं बहुतरं कुर्यान्नात्र संदेहः ।

अथ बंधवाञ्जनो मोक्षं प्राप्नुयाद्वा नेत्यत आह ।

तदा प्रश्नरमलेषु पश्येत् । यदि प्रथमगृहरूपी वा प्रथमगृहस्वामी केंद्रगृहेषु समागतः स्यात्तदा बंधने बहुदिनानि तिष्ठेत् । यदि पणफरगृहेषु समागतः स्यात्तदा कतिपयदिनोपरि मोक्षं प्राप्नुयात् । यद्यापोक्लिमगृहेषु स्यात्तदा झटित्येव बंधवाञ्जनो मोक्षं प्राप्नुयात् । अथ यदि षष्ठे द्वादशे च निर्गमो भवेत्तदा स्वबाहुबलेन झटित्येव मोक्षं प्राप्नुयात् । यदि प्रवेशी वा स्थिरो भवेत्तदा तस्मिन्बंधने बहुदिनानि तिष्ठेद्यदि शुभो भवेत्तदा विश्रामेण । यद्यशुभो भवेत्तदा क्लेशेन । अथ यद्यशुभद्विस्वभावो भवेत्तदा पूर्वबंधगृहाद्द्वितीयबंधगृहे बंधवाञ्जनः पतेत् । मोक्षं न प्राप्नुयात् । यदि शुभद्विस्वभावो भवे-

त्तदा मोक्षं प्राप्नुयात् । पुनरपि बंधने पतेत् । येन केनोपायेन बद्धः स्यात् । यदि तृतीय ३ नवम ९ पंचमै ५ कादश ११ गृहेष्वशुभाः समागताः स्युस्तदा केषां चित्साहाय्यदानेन बलं प्राप्य मोक्षं प्राप्नुयात् । यो रूपवान्गुणवान्यशस्वी सुप्रकृतिको भवेत्तस्य साहाय्यदानेनेति ज्ञेयम् । नात्र संदेहः ।

अथ बंधवान्रोगी वा गुर्विणी वा क्लेशवेष्टितो वा दासादयो वर्त्तमानावस्थातो मुक्ता भविष्यंति वा नेत्यत आह ।

तदा प्रथम १ द्वितीय २ पंचमै ५ कादश ११ दशम १० गृहेषु पश्येत् । एतानि गृहाणि भाग्योदयस्य ज्ञेयानि । यद्येतेषु प्रवेशिनः समागताः स्युस्तदा तस्मात्क्लेशान्मोक्षं प्राप्नुयात् । तथा भाग्योदयः स्यात् । परंतु यदि षष्ठा ६ ष्टम ८ द्वादश १२ गृहेषु निर्गमाः स्युः । एतानि गृहाणि ६,८, १२, नैराश्याभाग्यपरिश्रमक्लेशादीनां ज्ञेयानि अत्रावश्यके सहायदातारं पश्येत्तत्र तेषां भाग्योदयगृहाणां १, २,५, १०,११ तृतीयनवमगृहे सहायदातृणी ज्ञेये । यद्येतयोर्मध्ये निर्गमः स्यात्तदा गतः स्यात्तदा दुष्टा बलान्वितास्तेजोयुक्ताः शुभावस्थका वक्तव्याः । परंतु प्रष्टुः किमपि क्षीयमाणं नो कुर्य्युः कस्मात् । " इमे रूपिणोऽशुभत्वमेव नो दद्युः " इति वचनात् । अथ यदि तेषां मध्ये चैकोऽपि द्वादशगृहे १२ समागतः स्यात्तदा स एव पंचमै ५ कादश ११ गृहे वा प्रथमगृहेऽन्वादेशरूपं कुर्यात्तदा पृच्छकस्य दुष्टयोर्मध्ये संक्षेपसमाधानं स्यात् । दुष्टा दुष्टत्वं त्यजेयुः । यदि प्रथमे १ सप्तमे ७ ऽन्वादेशं कुर्याद्वा त्रयोदशे १३ चतुर्दशे १४ तदा पृच्छकदुष्टयोर्मध्ये वाग्वादः कलहो युद्धं च स्यात् । नात्र संदेहः । अथ यद्येतेषां मध्ये ⠿ ⠿ ⠿ ⠿ चैकोऽपि द्वादशगृहे १२ समागतः स्यात्तदा दुष्टानामवस्था निषिद्धतरा वाच्या । परंतु ते दुष्टत्वं बहुतरं कुर्य्युः । सदैव धूर्त्तत्वं बहुतरं कुर्य्युः । एवं सति यदि प्रथमगृहे शुभः समागतः स्यात्तदा पृच्छकैः सार्धं दुष्टानां नो वि-

जयो भवेत् । नान्यथा । अथ यद्येतेषां मध्ये ⁞ ⁞ ⁞ द्वादशगृहे पतितः स्यात्तदा दुष्टानामुद्विग्नचित्तत्वं परिखेदित्वं बलहीनत्वं च वाच्यम् । अत एव दुष्टा विनाशं प्राप्नुयुः । नात्र संदेहः । अथ यद्येतेषां मध्ये ⁞ ⁞ ⁞ द्वादशगृहे समागतः स्यात्तदा दुष्टानां बलाबलयोर्मध्ये समानं फलं वाच्यम् । यदि द्वादशरूपी एकादशगृहे ११ वा पंचमगृहे५वा प्रथमगृहे १ऽन्वादेशरूपं कुर्यात् । तदा शत्रुपृच्छकयोर्म्मध्ये संक्षेपसमाधानं स्यात् । यदि त्रयोदश १३ चतुर्दश १४ प्रथम १ सप्तम ७ गृहेषु । चान्वादेशं कुर्यात्तदा तयोर्मध्ये वाग्वादकलहं स्यात् । यदि षष्ठे ६ वाऽष्टमेऽन्वादेशं कुर्यात् तदा दुष्टा उद्विग्नचित्ताः परिखेदिता बलहीना भवेयुः । अथ यदि द्वादशगृहे सौम्यः ☰ पतितः स्यात्तदा पश्येत् । द्वाभ्यां शुभाभ्यामुत्पन्नो वाऽशुभाभ्यां यदि शुभद्वयाभ्यां समुत्पन्नस्तदा दुष्टानां भाग्योदयो बलाधिक्यं च स्यात् । यदि शुभद्वयाभ्यामुत्पन्नः स्यात्तदा दुष्टानामभाग्योदयो बलहीनत्वं च वाच्यम् । यदि स मिश्रतद्वाभ्यां समुत्पन्नः । स्यात्तदा तेषामवस्था मिश्रितरूपा वाच्या । नात्र संदेहः ।

अथ बृहच्चतुष्पदानां प्रश्न आह ।

द्वादशगृहे पश्येद्यदि शुभो भवेत् । तदा चतुष्पदानामवस्था समीचीना वाच्या । यदि स एव षष्ठे ६ प्रथमे १ऽन्वादेशं कुर्यात्तदा तेषां क्रये विक्रये बहुधा लाभो बहुफलप्राप्तिश्च स्यात् । यदि चैकादश ११ गृहे वा पंचम ५ गृहेऽन्वादेशरूपं कुर्यात्तदापि तेषां क्रये विक्रये बहुफलप्राप्तिः स्यात् । यदि सोऽन्वादेशः शेषगृहेषु स्यात्तदा तेषां क्रये विक्रये नो फलप्राप्तिः । अथ द्वादश १२ गृहेऽशुभः समागतः स्यात्तदा तेषां चतुष्पदानामवस्था निषिद्धतरा वाच्या । यदि स एवाशुभगृहेष्वन्वादेशं कुर्यात्तदा तस्य रूपिणोऽशुभत्वं स्वल्पतरं भवेत् । यदि शुभगृहेष्वन्वादेशं कुर्यात् । तदा तस्याशुभत्वं बहुतरं वाच्यं प्रतिगृहेष्वन्वादेश

फलं प्रागुक्तवत् । अथ यदि द्वादशगृहे मिश्रितरूपी समागतः स्यात्तदा चतुष्पदानामवस्था मिश्रितरूपा वाच्या । नात्र संदेहः ।

अथ तेषां चतुष्पदानां मृत्युर्भविष्यति वा नेत्यत आह ।

तदा द्वादश १२ गृहे पश्येद्यदि मंदगो ⁘ भवेत्तदा ते चतुष्पदा मृत्युं प्राप्नुयुः । यदि प्रथम १ गृहे सौरिः ⁘ पतितः स्यात्तदापि मृत्युभयं वाच्यम् । अथ यो रूपी प्रथमगृहे समागतः स्यात्स एव यदि स्वगृहात्सप्तमगृहेऽन्वादेशरूपं कुर्यात्तदा चतुष्पदादीनां सर्वेषां मृत्युभयं वाच्यम् । एवं नराणामऽपि मृत्युभयं ब्रूयात् । यदि शुभो भवेत्तदा नो मृत्युभयं यद्यशुभो भवेत्तदा ध्रुवं मृत्युं प्राप्नुयादत्र मृत्युविचारणे षष्ठा ६ ऽष्टम ८ गृहे पश्येत् । आवश्यकेन शुभाशुभेन तस्याऽन्वादेशेन फलं ब्रूयात् । नात्र संदेहः ।

इति श्रीभयभंजनशर्मकृते रमलरहस्ये सारसंग्रहे द्वादशगृहस्य भिन्नभिन्नप्रश्नकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

## अथ स्फुटप्रश्नानां मिश्रितप्रकरणं प्रोच्यते ।

तत्र प्रथमं मुष्टिज्ञानादिकं द्वितीयं चौरादीनां नामोत्पादनज्ञानम् । एवं मनोऽभिप्रायकथनम् । निधेरुद्धारणम् । मूकप्रश्ननामोत्पादनम् । रमलभेद इति तेषां मध्ये मनोऽभिप्रायकथनं निधेरुद्धारणं च पूर्वमुक्तं मया । अधुना मुष्टिचिन्तनं नामोत्पादनं च कथ्यते । तत्रादौ मुष्टिचिन्तनमाह । तस्य ज्ञापनं चतुर्विधम् । प्रथमं त्विदं मुष्टौ किमपि वर्त्तते वा नेति द्वितीयं यो मुष्टौ प्रष्टव्यवस्तु स्थापयाति स अस्मिञ्जनसमूहे कुत्र तिष्ठति । तृतीयं—तद्वस्तु प्रष्टुर्दक्षिणहस्ते वर्त्तते वा वामे चतुर्थकं त्विदं तद्वस्तु धातुमूलजीवानां मध्ये किमिति । तत्रादौ मुष्टिप्रश्नस्य सत्यानृतत्वमाह । यदि प्रश्नरमलेषु लोहितः ⁘ प्रत्यक्षः स्यात्तदा ध्रुवं मुष्टौ वस्तु वर्त्तते । स जनोऽस्यामेव सभायां तिष्ठति । यदि कुत्रापि नो समा-

गतः स्यात्तदा मुष्टौ किमपि नास्ति प्रष्टाऽनृतप्रश्नं करोति । सजनश्चास्यां सभायां नास्ति । अथ यदि चारो ⁖ रमलेषु वर्त्तमानः स्यात्तदा मुष्टौ वस्तु वर्त्तत इति वाच्यम् । यदि आरः ⁖ कुत्रापि नो समागतः स्यात्तदा मुष्टौ किमपि नास्ति प्रष्टाऽनृतप्रश्नं करोति । अथ यदि लोहितः ⁝ प्रश्नरमले रूपसमूहं कुर्यात्तदा तद्वस्तु एकतो बहुतरं वाच्यम् । यावत्संख्यो रूपसमूहः स्यात्तावत्संख्यं वस्तु वाच्यम् । एवं चारः ⁖ रूपिणामपि फलं ब्रूयात् । एवं सति यदा ज्ञातं मुष्टौ वस्तु वर्त्तते ऽस्मिन्नेव जनसमूहे तदा पश्येदेषां मध्ये कस्य हस्ते वर्त्तते । अथैषां जनानां मध्ये मुष्टिवस्तुसहितः कुत्र तिष्ठतीत्यत आह-ताञ्जनान्स्वाग्रे पंक्ति क्रमेणोपवेशयेत् । तदुद्देशं समाश्रित्य रमलं पातयेत् । तदा सप्तम गृहरूपिणो वक्ष्यमाणरीत्या संख्यांकं गृह्णीयात् । यदि नवमगृहे प्रवेशो भवेत्तदा तत्संख्यांकं तेषु जनेषु स्वदक्षिणांगाद्दापयेत् । यस्योपरि संख्या पूर्णतां यायात्स एव मुष्टिप्रश्नाधिकारी यदि नवमगृहे निर्गमो भवेत्तदा तत्संख्यांकं स्ववामभागात्तेषु जनेषु दद्यात् । यत्र संख्या पूर्णतां याति स एव मुष्टिप्रश्नाधिकारी । अत्र नवमगृहे स्थिरश्चेत्तदा प्रवेशवत्फलं वाच्यम् । यदि द्विस्वभावश्चेत्तदा निर्गमवत्फलं ब्रयात् । अत्र ध्रुवं दशपरिमितानामेव जनानां समूहो ग्राह्यः दशभ्योऽधिकजनाश्चेत्तदा पृथक्पृथग्देशानामेव समूहं विधाय रमलं पातयेत् । एकादिदशपर्य्यंतानामेवेष्टिः । यदि रमली आत्मानं गणानां मध्ये गणयेत्तदा तासु संख्यासु आत्मानं गृह्णीयाद्यदि स्वयं नो गणितः स्यात्तदाऽऽत्मानं विहाय जनसमूहं कुर्यात् । अथ मुष्टिप्रश्नाधिकारिज्ञानाय रूपि ( शकल ) णां संख्यांका यदि पातरूपिप्रभृतीनामंकाः प्राप्यंते । तदा दशभक्ते शेषांकाञ्जनसमूहेषु दद्यात् । अथवा सप्तमगृहरूपिणां केवलबिंदून्विलोकयेत् वह्नेरको १ वायोर्द्वौ २ जलस्य त्रयः ३ पृथिव्याश्चत्वार ४ एवं बिंदुसंख्या-

| ○ — — — | — ○ ○ ○ | ○ ○ ○ — | — — — | ○ ○ — ○ | — ○ — — | ○ — ○ ○ | ○ — ○ | ○ ○ — — | — ○ ○ | ○ — ○ — | — ○ — ○ | — — ○ — | — — — ○ | — ○ ○ — | ○ ○ ○ ○ | श |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | सं |

समूहं कृत्वा दक्षिणवामावर्त्तेन जनसमूहेषु दद्यात्। यत्र संख्या पूर्णतां यायात्स एव मुष्टिप्रश्नाधिकारी दक्षिणवामावर्त्तनं पूर्वोक्त-नवमगृह एवं चौरादिष्वपि कर्त्तव्यम्। नात्र संदेहः। एवं यदा ज्ञात-मस्य हस्ते वर्त्तते तदा पुनरपि विचारयेत्। कस्मिन्हस्ते दक्षिणे वामे वाऽस्ति।

अथ दक्षिणवामहस्तयोर्ज्ञानमाह।

पंचम ५ षष्ठ ६ गृहरूपिभ्यां ब्रूयात्। परंतु साक्षीभूतस्य बलं प्राप्यास्य साक्षीभूतं नवम ९ गृहे विलोकयेत्। यदि तयोर्गृहयो ५, ६ मध्ये प्रवेशी भवेत्तदा दक्षिणहस्ते यदि निर्गमो भवेत्तदा वामहस्ते। परंतु तत्सदृशो यदि नवमगृहेऽपि स्यात्तदा। अथ यदि स्थिरश्चेत्तदा प्रवेशवत्फलम्। द्विस्वभावश्चेत्तदा निर्गमवत्। यद्येक-स्मिन्गृहे प्रवेशस्तथैकस्मिन्गृहे निर्गमः स्यात्तदा ताभ्यामन्यं रू-पिणमुत्पाद्य फलं ब्रूयात्। अथवा तयोर्मध्ये यो बलवांस्तस्यैव फलं वाच्यम्। नात्र संदेहः।

अथ किंचिद्विशेष उच्यते।

तस्य मुष्टिस्थितस्य लक्षणं चिह्नं स्वभावं च प्रथमगृहरूपिणा ब्रूयात्। अग्निजनितं वायुजनितं जलजनितं वा पृथिवीजनितमिति। नम्रत्वादि रूपिणोऽग्रे कथयिष्यामि। नम्रत्वं कठोरत्वं तथा तस्य श्वेतादिवर्णं द्वितीयगृहरूपिणा ब्रूयात्। एवं मुष्टिस्थितस्य स्वरूपं तृतीयगृहरूपिणा ब्रूयात्। चतुर्थगृहरूपिणा तस्य संमेलनं। ब्रूयात्। तन्मुष्टिगतं वस्तु कस्मै कार्य्याय गृह्यते तेन किं घटितं भ-वतीति पंचमगृहरूपिणा ब्रूयात्। तथा पंचमगृहरूपिणा तस्य मुष्टिगतस्य मूल्यं ब्रूयात्। षष्ठगृहरूपिणा तस्य गुरुत्वलघुत्वे ब्रूयात्

सप्तम गृहरूपिणोऽन्वादेशेन तस्य संख्यां ब्रूयात्। एकं वर्त्तते वा बहु। अन्वादेशसंख्यया मुष्टिगतस्य वस्तुनः संख्या वाच्या । यदि चेत्कुत्राऽप्यन्वादेशो नो भवेत्तदैकमेव तथा दशमगृहरूपिणा तस्य रसस्वादं ब्रूयात् । अत्र केचिद्वदंति । यदि पंचदश १५ गृहे शुभो भवेत्तदा तन्मुष्टिजं वस्तु रत्नबहुमूल्यं ब्रूयात् । अशुभश्चेत्तदा विपरीतं फलं वाच्यम् । नात्र संदेहः ।

अथ धातुमूलजीवानां ज्ञानमाह ।

तदाष्ट ८ द्वादश १२ गृहरूपिभ्यां धातुमूलजीवं ब्रूयात् । यदि तयो ८, १२ मध्ये मिश्रतरूपी समागतः स्यात्तदा चतुर्थगृहरूपिणं द्वादश गृहरूपिणा गुणयित्वा रूपिणमुत्पादयेत् । तथाष्टमगृहरूपिणमेकादशगृहरूपिणा गुणयेत् । आभ्यामुत्पन्नरूपिणं भिन्नं स्थापयेत् । पश्चाद्द्वाभ्यामेकं रूपिणं कुर्यात् । अनेन द्वादशगृहरूपिणं गुणयेत् । ताभ्यामुत्पन्नरूपिणा धातुमूलादिकं ब्रूयात् । अत्र केचिच्चतुर्थगृहरूपिणैव धातुमूलजीवं वदंति । नात्र संदेहः ।

अथ विशेषमाह ।

उक्तं च ग्रंथांतरे । तद्वस्तु शुभं वर्त्तते वा निषिद्धमिति दशमगृहेण ब्रूयात् । तद्वस्तु संपूर्णं वर्त्ततेऽर्द्धमिति चैकादशगृहरूपिणा ब्रूयात् तद्वस्तूनामुत्पत्तिस्थानं द्वादशगृहरूपिणा ब्रूयात् । अथ यदि ज्ञातुमिच्छति तद्वस्तु गुरु वर्त्तते वा लघु तदा संपूर्णरमलस्य वह्निवायुबिन्दोः केवलसंख्यांकं गृह्णीयात् । तस्मिन्समूहे सप्तभिर्भजेच्छेषेण फलं ब्रूयात् । यदि विषमशेषस्तदा तद्वस्तु लघु यदि चेत्समस्तदा गुरु यदि ज्ञातुमिच्छेत्तद्वस्तु कृष्णवर्णं रक्तादिवर्णं वा तदा संपूर्णरमलस्य केवलबिंदवो गणनीयाः समूहे कृते पंचभिर्भजेत् । शेषेण फलम्ब्रूयात् । एकशेषे श्यामं द्विशेषे श्वेतं त्रिशेषे रक्तं चतुः शेषे पीतं पंचशेषे सर्ववर्णमिश्रमिति नात्र संदेहः ।

अथ नम्रत्वादिज्ञानाय रूपिण आह ।

नम्र (०———) (—००) (००००) (—००—) (०—०) (—०—) रूपिणः कठोर (००—) (०००) (———) (—०—) (०——) (—०—) रूपिणो मिश्रित (०—०) (——०) (००—) (०००) रूपिणः कठोरत्वनम्रत्वाभ्याम्। अथ पश्चिमदेशीयं धातुजीवादिकं बिंदूनामाधिक्येन वदंति । तदाह यदि वह्निबिंदवो बहुतरास्तदा धातुः । यदि प्रश्नरमलेषु वायुबिंदवो बहुतराः स्युस्तदा जीवः । यदि जलबिंदवो बहुतरास्स्युस्तदा मूलम् । यदि भूमिबिंदवो बहुतराःस्युस्तदा धातुः । मिश्रतसमाने मिश्रतफलं वाच्यम् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रथमरूपिणं नवमगृहरूपिणा गुणयित्वा रूपिणमुत्पादयेत् । तथा दशमगृहं प्रथमगृहस्थेन गुणयित्वा रूपिणमुत्पादयेत् । द्वाभ्यामेकं रूपिणं विधाय तेन धात्वादिकं ब्रूयात् । नात्र संदेहः ।

अथैकं शुभकौतुकम् । रमलं पातयित्वा षोडशरूपिण उत्पाद्याः केनापि प्रश्नः कृतश्चतुर्दशगृहे को रूपी समागतो वर्त्तत इति श्रुत्वा तमेव पृच्छेत्स रूपी चतुर्थगृहसमबिंदूनां वा विषमबिदूनां वर्त्तते । समरूपी चेत्तदा द्वौ वह्निस्थाने रेखा स्थाप्या । विषमश्चेत्तदा केवलबिंदुरेव । एवं द्वितीयगृहरूपिणं वायुस्थाने पूरयेत् । समबिंदुरूपिणो रेखा विषमबिंदुरूपिणः केवलबिंदुरेव । तथा तृतीयगृहरूपिणं जलस्थाने पूरयेत् । चतुर्थगृहरूपिणं भूमिस्थाने पूरयेत् । एवं यो रूप्युत्पन्नो भवेत्स एव चतुर्थगृहरूपी समाविषमसमरेखाः विषमकेवलप्रथमगृहाच्चतुर्थगृहपर्यन्तं चतुर्थआदिप्रथमगृहोपरि तृतीय प्रथमप्रथमैकैःचतुर्थवद्ध्रुवं चतुर्दशगृहरूपिणो भविष्यंतीति वाच्यम्।

अथ वह्निवायुजलभूमीनां क्रमेण प्रथमद्वितीयतृतीयचतुर्थगृहरूपिभिः समविषमै रूपिणं उत्पादयेदेवं चतुर्दशगृहरूपी भवति । नात्र संदेहः ।

अथ त्रयोदश १३ गृहे कौ रूपी समागतौ वर्त्तेत इति प्रश्न आह ।

तदोक्तप्रकारवत्पंचमषष्ठसप्ताष्टमगृहरूपिणः समविषमान्कृत्वा रूपिणमुत्पादयेत्स एव त्रयोदशगृहरूपी स्यात् ।

अथ प्रथमादिचतुर्णामुपरि पंचदशगृहरूपिणमाह ।

तदा प्रथमादिचतुर्णां १, २, ३, ४, वह्निस्थानस्य रेखाः केवल बिंदून्गणयेत्तस्मिन्समूहे प्रथमगृहरूपिणां बिंदून्योजयेत् । युक्ते सति यदि समूहो विषमो भवेत्तदा वह्निस्थाने बिन्दुः स्थापनीयः समसमूहश्चेद्रेखा स्थाप्या । एवं पुनरपि प्रथमादिचतुर्णां १, २, ३, ४, वायुस्थानस्थरेखा केवलबिंदून्गणयेत् । तत्र तद्गृहरूपिणां सर्व-बिंदवो योजनीया यदि समूहः समस्तदा तुलागृहरूपिणो वायुरेखा विषमश्चेत्तदा केवलबिंदुरेव । तथा प्रथमादिचतुर्णां जलस्थानस्य सर्वबिंदून्गणयेत् । अत्र तृतीयगृहरूपिणो बिंदवो योजनीयाः युक्ते यदि समूहः समः स्यात्तदा तुलागृह १५ रूपिणोऽपि जलस्थाने रेखा एव । विषमश्चेद्बिंदुरेवं पुनरपि प्रथमादिचतुर्णां भूमिस्था-नस्य बिंदुसमूहं कुर्यात् । तत्र चतुर्थगृहरूपिणो बिंदवो-योजनीया युक्ते सति यदि समूहः समः स्यात्तदा भूमिस्थाने रेखाः स्थाप्य । विषमश्चेत्तदा बिंदुरेव । एवं यो रूपी उत्पन्नः स एव तुला-गृहे १५ रूपी भविष्यतीति वाच्यन्नात्र संदेहः ।

अथ प्रकारांतरमाह ।

प्रथमगृहरूपिणो पंचमगृहरूपिणं गुणयेत् । ताभ्यां यो रूपी उत्पन्नो भवेत्तं पश्येद्यदि स समबिंदुरूपी स्यात्तदा वह्निस्थाने रेखा स्थाप्या । विषमबिंदुरूपी स्यात्तदा वह्निस्थाने केवलबिंदुरेवं स्थापनीयः । एवं द्वितीयगृहरूपिणं षष्ठगृहरूपिणं गुणयित्वा रू-पिणमुत्पाद्य पश्येत् । समविषमाभ्यां वायुस्थाने पूरयेत् । पुनस्तथा तृतीयगृहरूपिणा सप्तमगृहरूपिणं गुणयित्वा रूपिणमुत्पाद्य विलो-कयेत् । समविषमाभ्यां कृत्वा जलस्थानं पूरयेत्तथैव पुनश्चतुर्थगृहे

रूपिणमष्टमगृहरूपिणा गुणयित्वाऽन्यद्रूपिणमुत्पाद्य वा समविषमाभ्यां भूमिस्थानं पूरयेत् । एवं कृते सति यो रूप्युत्पन्नो भवेत्स नूनं पंचदशगृहरूपी भविष्यतीति वाच्यम् । नात्र संदेहः ।

अथ प्रश्नरमलस्य साधारणेन सर्वफलानां ज्ञानमाह ।

केनापि प्रश्नः कृतो रमलमुत्पाद्यामुकगृहे को रूपी समागतो वर्त्तते । इति प्रश्ने सम्पूर्णरमलस्य वह्निरूपाः केवलबिंदवो गणनीया एवं वायुजलभूमीनां केवलबिंदवो गणनीयाः पृथक्पृथक् परं तु प्रश्नगृहं षोडशगृहं च विहाय यदि वह्निकेवलबिंदवः समाः स्युस्तदा प्रश्नरूपिणो वह्निस्थाने रेखा स्थाप्या यदि चेद्विषमाः स्युस्तदा केवलरेखाः स्थापनीयाः । एवं समविषमकेवलवायुबिंदुभिः प्रश्नरूपिणो वायुस्थानं पूरयेत् । तथा जलबिंदुभिः प्रश्नरूपिणो भूमिस्थानं पूरयेत् । एवं कृते यो रूप्युत्पन्नो भवेत्तदा स एव प्रश्नरूपी स्यात् । नात्र संदेहः ।

अथ तद्यथोदाहरणम् ।

वह्निकेवलबिंदवो दश १० अत एव रेखा स्थाप्या वह्निस्थाने वायोः पंच बिंदवः ५ अतः केवलबिंदुरेव । जलस्य सप्त ७ विषमत्वाद्बिन्दुरेव पृथिव्या अष्टौ ८ समत्वाद्रेखा एवं कृते यातः प्रश्नरूपी बोधनः । अथ यदि केवलवह्निबिन्दवो वा वायुबिंदवो जलबिन्दवो वा भूमिबिन्दवः प्रश्नरमलेषु कुत्रापि न स्युस्तदा केवलबिन्दुस्थाने रेखामेव गृह्णीयात् । एवं तदा यदा प्रश्नरमलेषु कुत्रापि केवलबिन्दुर्नो प्राप्यते । नात्र संदेहः ।

अथास्मिन्प्रश्नरमले वह्निवायुजलानां कति बिंदवः संतीति प्रश्ने प्राह ।

तदा वक्ष्यमाणप्रमाणेन प्रथम १ पंचम ५ गृहरूपिणा संख्यांकं गृह्णीयात् । सा संख्या वह्नेः केवलबिंदूनां भवेत्संपूर्णरमलेषु । अस्यैकादिपंचदशपर्य्यंतानामिवेष्टः । एवं द्वितीय २ षष्ठ ६ गृहरूपिणः संख्याकं गृह्णीयात् एवं संख्या वायोः केवलबिंदूनां स्याद्रम-

लेषु । तथा तृतीय ३ सप्तम ७ गृहरूपिणो संख्यांकं गृह्णीयात् युक्ते-यं संख्या जलस्य केवलबिंदूनां स्यात्प्रश्नरमलेषु पुनस्तद्वच्चतुर्थां ४ ष्टम ८ गृहरूपिणां संख्यांकेन पृथिव्याः केवलबिंदूनां संख्यां वदेद्रमलेषु । परंतु द्वयोरूपिणोः संख्याकं गृहीत्वा विलोकयेत् । यदि चेद्विषमं भवेत्तदैकमपरमपि योजनीयं ध्रुवं सा संख्या बिंदूनां भवेत् । अथ षोडशरूपिणां संख्यांकान्यत्र रूपिषु संदेहोस्ति-नात्र संदेहः ।

अथ मया किं भक्षितमित्यत आह ।

| ०<br>०<br>—<br>— | —<br>—<br>०<br>० | ०<br>—<br>—<br>— | —<br>—<br>—<br>० | ०<br>—<br>—<br>० | —<br>०<br>०<br>— | —<br>०<br>—<br>० | ०<br>—<br>०<br>— | ०<br>०<br>०<br>० | ०<br>०<br>—<br>० | ०<br>—<br>०<br>० | —<br>०<br>०<br>० | ०<br>०<br>०<br>— | —<br>०<br>—<br>— | —<br>—<br>०<br>— | —<br>—<br>—<br>— | रू. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | सं |

तदा दशमे भोज्यगृहे विलोकयेत् को रूपी समागतो वर्त्तते । तस्मिन्रूपिणः कति केवलबिंदवः संति। तथा स एव कस्मिन्कस्मिन्गृहेऽन्वादेशरूपोऽस्ति एतत्सर्वं विलोक्य फलं ब्रूयात्। तथा हि । यदि वह्निबिंदुर्भवेत्तदा मधुरवस्तु भक्षितमिति वाच्यम् । यदि वायुबिंदुर्भवेत्तदा जीवजनितवस्तु किंचिद्भक्षितमितिवाच्यम् । तथा मांस-घृतदधिक्षीरादिकं यदि जलबिंदुर्भवेत्तदा किंचित्फलं विशेषेण भक्षि-तमिति वाच्यम्। यथा नानाप्रकाराण्यमृतफलानि । यदि भूमिबिंदुर्भवेत्तदा गरिष्ठं वस्तु तिक्तं विरसं वाच्यम् । यथा तक्रशुष्ककरप-ट्टिकाशैत्यमाण्डयूश्नादिकम्। नात्र संदेहः ।

अथ ग्रंथांतरमाह ।

उक्तं भोजनचिंतायाम्। "स्यादन्नदो लग्नपतिः१ सुखेशो ४ भो-ज्यं च कंदर्प्प ७ पतिर्बुभुक्षा॥भुक्तांबरेशः। १० शुभयुक्तदृष्टौ विलग्न-१ लाभौ ११ददतुः सुभोज्यम्" ॥१॥ बुभुक्षेति क्षुधा । "भोज्यात्रिदौ जीवासितौ तनुस्थावारार्कमंदैस्तनुगैरनर्थः ॥ पापग्रहाः सौम्ययुतेक्षि-ताः स्युः कष्टेन चान्नं लभते मनुष्यः ॥ २ ॥ तुर्य्ये ४ श्वरे तुर्यगते

स्थिरस्थे स्यादेकवारं चरभे सकृच्च । द्व्यंगे द्विवारं बलतश्च तस्मा-द्दिने दिने भोजनलब्धिरग्र्या"॥३॥अत्र निर्गमश्चररूपस्तथा प्रवेशी स्थिरसदृशः॥ अन्यत्सुगमम् । "सूर्यें वीर्यसमन्विते तिलयुतं चन्द्रे च शाल्योदनं। भूपुत्रे चणकान्नमिन्दुतनये सद्वल्कमुद्गाशनम् ।गोधूम-प्रचुरं प्रियंगुसहितं गीर्वाणवंद्ये तथा शुक्रे चर्प्पटिकायवान्नमुदितं मंदे च माषोद्भवम्।४॥सूर्ये च वीर्यसहिते कटुकं च चंद्रे क्षारं च तिक्तम-वनीतनये च सौम्ये। मिश्रं गुरौ च मधुरं भृगुजे तथाम्लं मंदे कषाय-ममलं रसमामनंति ॥ ५ ॥" अत्र सर्वत्रैव ग्रहस्थाने ग्रहस्वामिनं रूपिणं विजानीयात् । नात्र संदेहः ।

अथ चौरादीनां नाम निष्कासनमाह ।

रमलेषु नामनिष्कासनं बहुकठिनं विजानीहि कस्मान्नाम्नः केवलसर्ववर्णास्समुत्पद्यंते तदनु दुर्ल्लभमिति वचनात् । परं त्वेवं भव-ति नाम्नः कतिपयवर्णा उत्पद्यंते । तस्मिन्मध्ये यथा समुचित-नामवर्णानुपयुक्ते सति नामोत्पत्तिः स्यात् ।अथवा नामाक्षरसंख्यातो बहुतरा वर्णा उत्पद्यंते । तेषु नामसमुचितान्वर्णान्समागृह्य । नामोत्पादनं कर्त्तव्यमिति शेषानपास्य । एवं द्विविधं नामोत्पादनं ज्ञेयम् तत्रादौ बहुवर्णेषूत्पादितेषु चौरनामोत्पत्तिमाह । यावंतो वर्णा उत्पन्ना भवंति तेषु नामसमुचितान्वर्णान् समागृह्य नाम साधयेत् । एवं लोकप्रसिद्धं स्वदेशभाषायोग्यं नाम साधयित्वा प्रष्टारं पृच्छे-दस्मिन्नेव नामोपरि तव संदेहोऽस्ति वा नास्तीति यदा प्रष्टा वदेत्तदेव नाम ग्राह्यं तन्नाम चौरस्य ज्ञेयम् ।

अथ स्वल्पानां कतिपयवर्णानामुत्पत्तौ नामोत्पादनमाह ।

नामसमुचितवर्णानां समूहं कृत्वा शेषान्परसमुचितान्वर्णा-न्मनसि विचारयित्वा योजयेत् । तेन लोकप्रसिद्धं स्वदेशभाषा-योग्यं नाम साधयित्वा तदनंतरं पृच्छकं पृच्छेदिदं नाम वर्त्तते वा नेति । यदा पृच्छको वदेत्तदा तदेव नाम गृह्णीयात् । तन्नाम चौरे-

दीनां ज्ञेयमिति । अथवा यदक्षरं प्रथमं समुत्पन्नं भवेत्तदेव प्रष्टारं पृच्छेदयं वर्णो नाममध्ये वर्त्तते वा नास्ति । एवं शनैः शनैर्मनसि विचारयित्वा नामसमुचितान्वर्णान्संगृह्णीयात् । यावन्नामोत्पत्तिः स्यात् । बुध एवं चौरादीनां नाम ब्रूयात् । नात्र संदेहः । अत्र नामोत्पादने बहवः प्रकाराः संति तेषां मध्ये प्रकारत्रयं सुगमतरं बहुपरीक्षितं प्रवच्मि ।

अथ प्रथमः प्रकारः ।

संपूर्णप्रश्नरमलस्यैकादि पंचदश १५ पर्यंतस्य । वायुजलयोः केवलयुग्मकान्बिंदून्गणयेत्तस्मिन्समूहे नवभिर्भजेत् । शेषांका न्नवमगृहप्रभृतिषु दद्यात् । यत्र पूर्णता यायात्स एव वर्णो नाम्नो भवेत् । रूपिणासुद्भवो वा गृहोद्भवः । अथ यत्र शेषांकस्यावसानं जातम् । तस्य रूपि संख्यांकं गृह्णीयात् । पुनस्तद्भूतानंकान्नवमगृह-प्रभृतिषु दद्यात् । यत्र पूर्णतां यायात्स एव वर्णो नाम्नो ज्ञेयः । रूपिसमुद्भवो वा गृहोद्भवः । एवं पुनरपि यत्र संख्या पूर्णतां यायात्त-स्य रूपिणः संख्यांकं गृहीत्वा नवमगृहादिषु दद्याद्यत्रावसानं भवे-त्स एव वर्णो नाम्नो ज्ञेयः । एवं पुनः पुनः कर्त्तव्यं यावन्नाम्नो वर्णाः सर्वे उत्पद्यन्ते । अथ यद्येवं कृतेऽपि नामोत्पत्तिर्नो-स्यात्तदा किं कर्त्तव्यमित्यत आह । प्रथममेकादिपंचदशपर्यंतस्य प्रश्नरमलस्य वायुजलयोः केवलयुग्मकान्बिदून्गणयेत् । अत्र नव ९ भिर्भक्ते शेषांकान्नवमगृहादिषु दद्यात् । यत्रावसानं भवेदब-जदमतेन तस्य रूपिण उर्द्ध्वाधःस्थयोरक्षरयोः संख्याकं गृह्णीयाद्वा तस्यैव च रूपिणः संख्याक्रमेण यावत्परिमितं संख्यांकः स्यात्ताव-देव तस्मिन्शेषांके योजयेत् । पुनरपि नवम ९ भिर्भजेदुर्व्वरितान् । अय ८ क ८ गादिषु नवसु दद्यात् । यथोदाहरणम् । पंचदशगृहपर्यंतं वायुजलयोर्युग्मकेवलबिंदुसंख्यापंचाशत्परिमिता ५०, अत्र नवभि-र्भक्ते शेषं पंचमितं ५ तस्मिन्नवमगृहादिषु दत्ते त्रयोदशगृहमवसानं

यातं तत्र सौम्यः ≡ प्राप्तस्तस्य वर्णो मकार एक एव तस्य प्रभृति तच्छेषा क ९ युक्ते यातं पंचचत्वारिंशद ४५ भक्ते शेषं नवमं ९ अयकारादिषु नवमः प्राप्त एवं सर्वत्र। अय ऽ क ऽ ग १ वकर २ जलश ३ दमत ४ हनत्स ५ व सष ६ ऽ ज ऽ अ ऽ य ७ ऽ ह ऽ फ ऽ व ८ ऽ त्व ऽ स्व ऽ ज्व ९। अत्राकारे षोडश स्वरा ज्ञेयाः। तथा वयफभा एकरूपाः। एवं वर्णानां विभागं जानीहि। यत्र संख्या पूर्णतां याति तस्मिन्नेव मध्ये को रूपी वर्णनाम्नो भविष्यति स एव ग्राह्यः। तेन चौरादीनां नाम्नः। प्रथमाक्षरं वदेत्। नात्र संदेह।

अथ द्वितियः प्रकारः।

संपूर्णरमलस्य केवलयुग्मरूपा वह्निबिंदवो गणनीयाः नवभि ९ र्भजेत्। शेषे वायुबिंदवो योजनीया अत्रैकादशभिर्भ ११ जेच्छेषे जलबिंदवो योजनीयाः पुनश्चतुर्दश १४ भिर्भजेत्। शेषे भूमिबिंदवो गणनीयाः। अत्र षोड १६ शभिर्भजेत्। शेषं प्रथमगृहप्रभृतिषु दद्यात्। यत्रावसानं स्यात्स एव वर्णो ग्राह्यः। रूपिसमुद्भवो वा। तेन च चौरादीनां नाम साधयेन्नात्र संदेहः।

अथ तृतयिप्रकारः।

चौरादीनां नामानि वक्ष्यमाणचक्रोपरि साधयेत। तेन चक्रेण नाम्नः सर्ववर्णा उत्पद्यंते। परंतु यथा क्रमेणोत्पन्ना भवंति प्रथमतो नाम्नः प्रथमाक्षरं पश्चाद्द्वितीयादिकम्।

अथ तत्रादौ नाम्नः प्रथमाक्षरोत्पत्तिमाह।

तदुद्देशं समाश्रित्य रमलं पातयेत्। तस्य रमलस्य प्रथमगृहरूपिणा त्रयोदशगृहरूपिणं गुणयेत्ताभ्यामुत्पन्नरूपिणं पश्येत्। कस्य गृहस्य स्वामी विजदहक्रमेण प्रश्नरमलेषु कस्मिन्गृहे समागतो वर्त्तत इति। द्वयोर्गृहयोर्गृहांकं गृह्णीयात्। एकं चक्रस्य तिर्यक्पंक्तौ दद्यादेकं चोर्द्धाधःपंक्तौ दत्वा विलोकयेत्। यस्मिन्कोष्ठे साम्यता स्यात्स एव वर्णो ग्राह्यः। तन्नाम्नः प्रथमाक्षरं ज्ञेयम्।

अथोदाहरणम् ।

रमलं पातयित्वा तस्य प्रथमगृहरूपिणं त्रयोदशगृहरूपिणा गुणयेत् । रूप्युत्पन्नो मंद $\frac{\cdot}{\cdot}$ संज्ञकः । अयं च विजदहक्रमेण दशमगृहस्वामी तथा प्रश्नरमलस्य षष्ठगृहे समागतो वर्त्तते । अत एव दशम १० स्तिर्यक्पंक्तौ षष्ठश्चोर्द्ध्वाधःपंक्तौ चक्रस्य दत्तः । द्वयोः संमेलनं कोष्ठके द्रष्टव्यं सकारं प्राप्नुयात् । इदं नाम्नः प्रथमाक्षरंज्ञेयम् । अथ नाम द्वितीयाक्षरं तस्यैव रमलस्य चतुर्थगृहरूपिणं

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | .. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | | | | | | |
| अ | ब | ज | द | ह | व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | १ |
| ब | ज | द | ह | व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | २ |
| ज | द | ह | व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ३ |
| द | ह | व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | ४ |
| ह | व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | ५ |
| व | ;ज | ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | ६ |
| ;ज | ; | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ७ |
| ;ह | ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ८ |
| ;त्व | य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ९ |
| य | क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | १० |
| क | ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;ज | ११ |
| ल | म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;जं | ;ज्व | १२ |
| म | न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;ज | ;ज्व | ;ग | १३ |
| न | स | ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;ज | ;ज्व | ;ग | अ | १४ |
| स | अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;ज | ;ज्व | ;ग | अ | व | १५ |
| ;अ | ;फ | ;स्व | ;क | र | श | त | ;स | ;ष | ;ज | ;ज | ;ज्व | ग | अ | व | ज | १६ |

चतुर्दशगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नरूपिणं पश्येत् । स

कस्मिन्गृहे समागतो वर्त्तते। तथा कस्य गृहस्य स्वामी विजदह-क्रमेणेति तदा द्वयोर्गृहमेकं चक्रे दत्त्वा विलोकयेत्। यस्य गृहस्य स्वामी स्यात्तदंकं चक्रस्य तिर्यक्पंक्तौ दद्याद्द्वितीयांकमूर्द्ध्वाधः पंक्ताविति यस्मिन्कोष्ठे साम्यता स्यात्तदक्षरं ग्राह्यम्। तन्नाम्नो द्वितीयाक्षरं ज्ञेयम्। उदाहरणम्। तस्यैव रमलस्य चतुर्थ ४ चतुर्दशाभ्यां रूप्युत्पन्नः सौरिः ⁝ संज्ञकः। अथाष्टमगृहस्वामी प्रश्नरमलेषु। गुप्तो वर्त्तते। कोऽर्थः कुत्रापि न समागतस्तदाष्टमगृहे दृष्टव्यं तत्र तीक्ष्णांशुः ⁝ स्थितः। अयं च नवमगृहस्वामी ९ नवमांकस्तिर्यक्पंक्तौ दत्तः। तथाष्टमांकं ८ श्चक्रोर्द्ध्वाधःपंक्तौ द्वयोः संमेलनकोष्ठकेनाकाराक्षरं प्राप्तम्। तन्नाम्नो द्वितीयाक्षरम्। अथ तृतीयाक्षरम्। तस्यैव रमलसप्तमपंचदशगृहाभ्यां रूपिणमुत्पाद्य चक्रेषु दृष्ट्वा वर्णान्गृह्णीयात्। प्रागुक्तप्रकारवत्। तद्यथोदाहरणम्। ताभ्यामुत्पन्नो वाग्मी ⁝ अयं द्वितीयगृहस्वामी प्रश्नरमलेषु तृतीयगृहे ३ समागतो वर्त्तते। तदा द्वौ तिर्यक्पंक्तौ तथोर्द्ध्वाधः पंक्तौ त्रयः। द्वयोः संमेलनेन दकाराक्षरं प्राप्तम्। एवं कृते साद इति नामोत्पत्तिर्ज्जाता तदा प्रष्टारं प्रागुक्तं तव नाम सादेति वर्त्तत इति ब्रूयान्नात्र संदेहः। अथ चतुर्थाक्षरनाम्नः प्रागुक्तवत्फलं दशम १०षोडश १६ भ्यां रूपिभ्यामुत्पादयेत्तं चक्रे दृष्ट्वाप्रागुक्तप्रकारवदक्षरं निष्कासयेत्। तन्नाम्नश्चतुर्थाक्षरं ज्ञेयम्। अथपंचमाक्षरम्। तस्यैव रमलस्य विषमगृहरूपिणः १,३,५,७, ९,११,१३,१५, केवलबिंदवो गणनीयाः पश्चात्समूहं कुर्यात्। षोडश १६ भक्ते शेषांकांस्तस्यैव रमलस्य प्रथमगृहादिषु दद्यात्। यत्रावसानं स्यात्तस्मिन्गृहे पश्येत्। को रूपी समागतो वर्त्तते। तं रूपिणं गृहीत्वा प्रागुक्तप्रकारवच्चक्राद्वर्णान्गृह्णीयात्। तदा नाम्नः पंचमाक्षर उत्पन्नः स्यात्। नात्र संदेहः। अथ षष्ठाक्षरम्। तस्यैव रमलस्य केंद्रगृह १, ४, ७, १०, रूपिणां सर्वबिंदवो गणनीयाः केवलयुग्मकानां बिंदूनां समूहं कृत्वा षोडशभि १६ भंजेत्। शेषां-

कान्प्रथमगृहादिषु दद्यात् । यत्र संख्या पूर्णतां यायात्तस्य गृहस्य रूपिणं गृहीत्वा प्रागुक्तप्रकारवत्तस्माच्चक्राद्वर्णं निष्कासयेत्। तन्नाम्नः षष्ठाक्षरं ज्ञेयम् । सप्तमाक्षरम् । तस्यैव रमलस्य त्रयोदशादि चतुर्णां १३, १४, १५, १६, गृहरूपिणां सर्वबिंदवो गणनीयाः । षोडशभि- १६ र्भजेच्छेषांकान्प्रथमगृहादिषु दद्याद्यत्र संख्यांकः पूर्णतां याया- त्तस्य गृहस्य रूपिणं गृहीत्वा प्रागुक्तप्रकारवत्तस्माच्चक्राद्वर्णं निष्का- सयेत् । तन्नाम्नः युक्ताक्षरं ज्ञेयम् । अथ सप्तमाक्षरम् । नात्र संदेहः । अत्र सर्वत्रैव विजदहक्रमोपरि विचारयेत् ।

अथ तस्मिन्नाम्नि कति वर्णाः संतीत्यत आह ।

तदा तस्मिन्नेव रमले दैत्यार्चितं ⠢ पश्येत् । कुत्र समागतो वर्त्त ते । तद्गृहांकसमानवर्णान्नाम्नि ब्रूयात् । यथा सप्तमगृहे चेत्तदा सप्तव- र्णात्मकं नाम विद्धि । तथाहि यदि प्रथमगृहे भवेत्तदाऽबजदक्रमेण तस्यैव रूपिणा संख्यांकसमानि नामाक्षराणि ज्ञेयानि । कोऽर्थः सप्त- वर्णात्मकं नाम यदि द्वितीयगृहे भवेत्तदा द्विवर्णात्मकं नाम यदि तृतीयगृहे भवेत्तदा त्रिवर्णात्मकं नाम यदि चतुर्थगृहे भवेत्तदा चतु- र्वर्णात्मकं नाम यदि पंचमगृहे भवेत्तदा पंचवर्णात्मकं नाम यदि षष्ठगृहे भवेत्तदा षष्ठवर्णात्मकं नाम यदि सप्तमगृहे भवेत्तदा सप्तवर्णा- त्मकं नाम । यद्यष्टमगृहे भवेत्तदाष्टवर्णात्मकं नाम । यदि नवम- गृहे भवेत्तदा पंचवर्णात्मकं नाम यदि दशमगृहे भवेत्तदा चतुर्वर्णा- त्मकं नाम । यदि चैकादशगृहे भवेत्तदा त्रिवर्णात्मकं नाम । यदि द्वादशगृहे भवेत्तदा प्रथमगृहरूपिणं पश्येत् । अबजदक्रमेण तस्य रू- पिणः संख्यांकं गृह्णीयात् । तत्समाना नामवर्णाः स्युः । यदि स दैत्या- र्चित ⠢ स्त्रयोदशगृहे भवेत्तदा द्वितीयगृहरूपिणोऽबजदमतेन संख्यांकं गृहीत्वा नामवर्णान्वदेत् । यदि चतुर्दशगृहे भवेत्तदा चतुर्वर्णात्मकं

नाम । पंचदशगृहे कदापि नायाति । अथ यदि च द्वित्रिचतुर्थादिस्थले समागतः स्यात्तदा बलाधिक्यात्फलं ब्रूयात् । अथ यदि रमलेषु कुत्रापि नो समागतो भवेत्तदा प्रथमगृहरूपिणं पश्येत् । रूपी गृहस्य स्वामी तद्गृहांकसमा नामवर्णाः स्युः । नात्र संदेहः ।

अथ यदि ज्ञातुमिच्छेत्प्रावृट्काले प्रतिमासेऽपि कस्मिन्दिने वृष्टिवायुशीतधर्म्मादिकं भविष्यतीत्याह ।

एष विचारः यदा सूर्यो वृश्चिकराशौ पंचदशांशेभ्योऽर्वाक्स्थितो भवेत्तत्समयात्कुर्यात् । तदा ध्रुवः सत्यं स्यात् । तथाहि मासप्रारम्भदिने प्रतिपदि वा संक्रांतौ रमलं पातयेत् । अत्र पंचदशगृहाणां मध्ये वृष्टिः प्रत्येकगृहेण प्रतिदिनस्य फलं ब्रयात् । विचारयित्वा । पश्चात्पंचदशदिनपक्षोपरि पुनरपि रमलं पातयेत् । तस्य पंचदशगृहपर्य्यंतानां रूपं भिन्नं क्रमशः प्रतिदिनस्य ब्रूयात् । यावन्मासः पूर्णो भवेत् । अनेन चक्रेण सर्वमासस्य प्रतिदिनेषु वृष्ट्यादिकं विचारयेत् । नात्र संदेहः ।

अथ वक्ष्यमाणचक्रोपरि प्रश्नकथनोपायमाह ।

| | | | |
|---|---|---|---|
| \|\|\|० | घर्मसुष्णत्वं सुतरांभवेत्. | मेघच्छिन्नवृष्टिश्च. | \|०\|\| |
| ०\|०\| | प्रवातउग्रत्वं दिनावसाने शीतम्. | घर्मोदय उष्णत्वं च. | \|\|०० |
| \|०\|० | घर्ममूल वं प्रवातश्च. | मेघच्छिन्नवृष्टिश्च. | ००\|\| |
| \|\|\|\| | शीता धिक्यं तुषारपतनम्. | घर्मःप्रवातवृष्टिश्च. | \|००० |
| ०\|०० | घर्मादयः प्रवातः शीतं च. | मेघच्छिन्नवृष्टिः वायुश्च. | ००\|० |
| ०\|\|० | घर्मादयः परंतु शीताधिक्यं. | मेघच्छिन्नवृष्टिर्दिनां ते शीतम्. | ०००\| |
| ०\|\|\| | बहूष्णं निर्वातः शीतं च. | मेघच्छिन्नवृष्टिः प्रवातो भवेत्. | \|००\| |
| \|\|०\| | प्रवात उष्णत्वं घर्मादयः | मेघच्छिन्नवृष्टिः शीताधिक्यं. | ०००० |

तच्चक्रं परमरहस्यं बहुभेदयुतं सर्वसुज्ञैः परीक्षितं ज्ञेयम् । तस्मिन्मध्ये शतद्वयषट्पंचाश २५६ त्प्रश्नाः संति सर्वे रमलज्ञास्तच्चक्रं प्रीत्या स्थापयंति । तस्माच्चक्रादेव सर्वान्प्रश्नान्कथयंति च । आदौ पृच्छकस्याग्रे रमलं पातयेत् । पश्चाद्विलोकयेत् । कस्य गृहस्य प्रश्नं वर्त्तत इति । तस्मिंश्चक्रे तत्प्रश्नसम्मुखस्थास्त्रयो-ध्रुवांकास्तान्गृह्णीयात् । तत्रादौ मनोऽभिप्रायं गृहरूपिणं प्रथम-ध्रुवांकं समगृहस्थरूपिणा गुणयेत् । आभ्यामुत्पन्नं रूपिणं तत्प्र-श्नस्य द्वितीयध्रुवांकसमगृहस्थरूपिणा गुणयेत् । आभ्यामुत्पन्नरू-पिणोऽबजदमतेन संख्यांकं गृह्णीयात् । एतत्संख्यांकं भिन्नं स्थापयित्वा पश्चात्तत्प्रश्नस्य तृतीयध्रुवांकं गृहस्य रूपिणं प्राप्य विजदहमतेन संख्यांकं गृहीत्वा तत्र भिन्नस्थे योजयेत् । एवं पिंडं कृत्वा । मनोऽभिप्रायं गृहप्रभृतिषु दापयेत् । यत्र संख्या पूर्णतां यायात्तस्यैव गृहस्य रूपिणः । प्रश्नानां सिद्धत्वं तथा प्रष्टः । शुभाशुभत्वं ब्रूयात् ।

## अथोदाहरणम् ।

यथा रमलं पातितं मम प्रवासो भविष्यति वा नेति प्रश्ने प्रवासस्य तु नवमं गृहं तस्मिन्नवमगृहे चोष्णगुरूपी ⁝ स्थितः । तस्मिंश्चक्रे प्रवाससंमुखस्था ध्रुवांकास्त्रय३स्तत्रादौ प्रथमसध्रुवांके ३ समगृहे ⁝ दैत्यार्चितोऽस्ति । तदा नवमगृहस्थः ⁝ दैत्यार्चितः ⁝ तेन गुणितं रूपी उत्पन्नः सौरि ⁝ संज्ञकः । पश्चाद्द्वितीयध्रुवांके पंचम ५ गृहे तु कवि ⁝ रस्ति सौरिकविभ्यां गुणितंरूपी उत्पन्नो बोधन ⁝ संज्ञकः । अस्याऽबजदमतेन संख्यांकाः पंचम ५ परि-मिताः संति । पश्चात्तृतीयध्रुवांके १ समगृहे सौरि रूपी ⁝ चास्ति अस्याऽबजदमतेन संख्यांकाः सप्त ७ परिमिताः । पूर्वसंख्यांके युक्ते

जाता द्वादश १२ परिमिताः । एतत्समूहं नवमगृहप्रभृतिषोडशगृह-पर्य्यंतेषु दत्तः । पुनः प्रथमगृहप्रभृतिषु तदाऽवसानं चतुर्थगृहे जातम् ४ चतुर्थगृहे तु शीतांशुरस्ति ⁝ तदा मयोक्तं प्रष्टारं प्रति प्रवासो भविष्यति सुखविश्रामभाग्योदयद्रव्यादिलाभैः सहितः । एवं सर्वान्प्रश्नान्ब्रूयात् । नात्र संदेहः । एतद्रहस्यं परमं त्रिषुलोकेषु दुर्लभम् । गोपनीयं कुशिष्येभ्यो यदीच्छेदात्मनोहितम् ॥१॥ यस्मै कस्मै न दातव्यं दातव्यं न च शत्रुषु ॥ शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥२॥ अनेन सर्वे प्रश्नाश्च सुतथ्याः प्रभवंति हि ॥ तस्मादिदं प्रयत्नेन स्थापयेद्ध्रुवमादरात् ॥३॥ यो ददाति कुशिष्याय क्षुद्रपाखंडरूपिणे ॥ तथा मिथ्या भवेद्वाणी यदि शक्रसमो भवेत् ॥ ४ ॥ तदाह चक्राणि ।

## अथ प्रथमगृहस्य ध्रुवांकानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| २ | ५ | २ | भविष्यकालस्य प्रश्नः |
| २ | ४ | १६ | भूतकालस्यैतेषाम्. |
| १३ | ८ | १४ | वयःक्रमस्यावस्था. |
| ५ | ७ | ११ | मित्रसंमेलनस्य. |
| ५ | ७ | ९ | शुभत्वनिषिद्धत्वयोः |
| १ | ३ | ५ | कार्याणां प्रारंभस्य. |
| ११ | ३ | १६ | विश्रामपरिश्रमयोः |
| ४ | ५ | १३ | उत्तालिकाऽनुतालिकयोः |
| ७ | १६ | ११ | प्रतिष्ठानिंदयोः |
| ५ | ६ | १४ | शोकमंगलयोः |
| ३ | १३ | ५ | स्थितिप्रचलनयोः |
| ९ | ५ | ९ | तूर्णींभूतत्ववचनकथनत्वयोः |
| ६ | १४ | १ | पथि पथिकस्य. |
| ३ | १३ | ४ | स्वभोगक्लेशयोर्विचारः |
| ३ | १४ | ४ | जीवनावस्थायुर्दाययोर्विचारः |
| ४ | ४ | ९ | शरीरसुखदुखादिकविचारः |

ध्रुवाङ्कान्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ द्वितीयगृहस्य ध्रुवांकाः ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ३ | ५ | १३ | भविष्यकालस्य प्रश्नः |
| १ | ३ | २ | भूतकालस्य प्रश्नः |
| ५ | १० | ५ | मातृभ्रात्रोरवस्था. |
| ११ | ५ | २ | खानपानादिभोगस्य प्रश्नः |
| ३ | ७ | १४ | मित्रत्वसहायदानस्य. |
| १० | १४ | १० | कृपणत्वदातृत्वयोः प्रश्नः |
| ७ | २ | ७ | सत्पात्रवराकयोः प्रश्नः |
| १० | ७ | ११ | प्रवास्यागमनस्य प्रश्नः |
| ५ | १० | ८ | विवादो भवेद्वानेति प्रश्नः |
| ८ | ६ | २ | ऋणग्रहणप्रश्नः |
| ८ | ३ | १० | ऋणदानप्रश्नः । कदा१४३०१० |
| १४ | ८ | १४ | द्रव्यागमनस्य प्रश्नः कदागमिष्यतीति प्रश्नः |
| ११ | ५ | १४ | जीवनवृत्तेरवस्थाप्रश्नविचारः |
| ५ | ४ | २ | व्ययलाभयोर्विचारः |
| ८ | १४ | २ | द्रव्यादीनामवस्थाप्रश्नः |

## अथ तृतीयध्रुवांकप्रश्नगृहाणि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ५ | १ | ५ | भविष्यकालस्य प्रश्नः |
| ३ | १ | ३ | भूतकालस्य प्रश्नः |
| १ | ७ | १३ | कृषिकरणस्य प्रश्नः |
| १ | ५ | १३ | अक्षप्रारंभप्रश्नः |
| १ | ४ | ५ | वने गमनस्य प्रश्नः |
| ४ | १ | ३ | हट्टायां गमनस्य प्रश्नः |
| १ | ६ | १३ | सदैव स्थितस्वसंगतजनस्य प्र० |
| १ | ४ | ३ | स्वसंगतजने विश्रामदुःखप्राप्तिप्रश्नः |
| १ | ७ | ३ | गोत्रकुटुंबानां कुशलप्रश्नः |
| १२ | १ | ६ | मूर्खत्वस्य प्रश्नः |
| ९ | ३ | १ | पांडित्यस्य प्रश्नः |
| १ | ४ | ३ | प्रवासस्यारंभ करणम् |
| ५ | ९ | ९ | स्वप्नदर्शनफलम् |
| ९ | ५ | १३ | निकटगमनप्रश्नः |
| ९ | १२ | ५ | स्वसंगतजनस्यावस्थाप्रश्नः |
| २ | १ | १३ | भातृगोत्रकुटुंबानामवस्था प्रश्नः |

ध्रुवाङ्काद्यधस्तात् व्युत्क्रमेण पठनीयम् ।

## अथ चतुर्थध्रुवांकगृहाणां प्रश्नः ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ५ | १ | ५ | भविष्यकालस्य प्रश्नः |
| १ | २ | ३ | भूतकालस्य प्रश्नः |
| ३ | १ | ४ | गृहभूमीनां कथनम् |
| १ | ३ | ७ | पिता द्रव्यं स्थापयेद्वा न |
| ६ | १ | ४ | वाटिकातोऽमृतफलप्राप्तिर्वा न |
| ७ | ५ | ३ | दुष्टत्वामित्रत्वयोः प्रश्नः |
| ८ | ५ | २ | गृहभूमौ प्रसादकरणस्य विचारः |
| ३ | १० | ४ | स्वायुर्दायपरिणामस्य विचारः |
| ७ | १ | ४ | भूमितलेनिधिर्वर्त्तते वा न |
| ८ | ३ | ५ | भ्रातृहस्ताद्द्रव्यं भवेद्वा न |
| ५ | ४ | ५ | गृहभूमिवर्द्धमानतः |
| २ | ५ | २ | वृक्षादिरोपणम् |
| २ | १ | १० | गृहभूमि विक्रयः |
| ६ | ८ | ४ | भयनिर्भय प्रश्नः |
| ५ | ८ | १३ | परिणामावस्था प्रश्नः |
| १ | १० | ४ | पितुरवस्था प्रश्नः |

## अथ पंचमप्रश्नध्रुवांका ज्ञेयाः ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ७ | ३ | २ | भविष्यकालस्य प्रश्नः |
| ४ | १ | १ | भूतकाल प्रश्नः |
| १० | २ | ५ | बालानांरोगत्व प्रश्नः |
| ११ | ४ | १ | आत्मक्लेशशोकादिमुक्तो भविष्यति |
| २ | ४ | ५ | अनायासेन प्राप्तिर्भविष्यति वा न |
| २ | ८ | २ | अनेन सार्द्धंप्रसन्नो भविष्यामि वा न |
| ११ | ६ | २ | कदा शोकदुःखाद्विमुक्तो भविष्यामि |
| २ | ३ | ९ | कुतश्चिद्वृत्तांतस्यागमनं भवेद्वा न |
| २ | ८ | ६ | अदत्तवस्तुनः प्राप्तिः स्याद्वा न |
| ३ | १ | ३ | मित्रामित्रत्वं स्थापयति वात |
| ७ | ९ | ५ | मित्रादिनामवस्था प्रश्नः |
| ११ | २ | ६ | बालकानां मृत्यु प्रश्नः |
| ११ | ६ | १५ | तिष्ठेद्वा नेति प्रश्नः |
| १० | ३ | ६ | गुर्विणी वर्त्तते वा न |
| ६ | ५ | ७ | पुरुषो वर्त्तते वा स्त्रियः |
| ३ | १ | ५ | संतानावस्था प्रश्नः |

ध्रुवाङ्काद्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ षष्ठगृहध्रुवांकप्रश्नज्ञेयानि ।

| प्र.ध्रु. | द्वि.ध्रु. | तृ.ध्रु. | |
|---|---|---|---|
| ७ | ३ | २ | भविष्यकालस्यैतेषाम् |
| २ | ५ | २ | भूतकालस्य प्रश्नः |
| ५ | ३ | ५ | भ्रातॄणां परिणामस्य विचारः |
| १ | ७ | ३ | पित्रा सार्द्धमुपवेशनस्य विचारः कर्त्तव्यः |
| ३ | २ | ६ | दासानां क्रयविक्रयकरणम् |
| २ | ६ | ७ | भ्रातृस्थानप्रश्नः |
| ६ | ९ | ७ | पितृसाटिकस्य प्रश्नः |
| ४ | ७ | १ | कुक्कुटादीनां क्रयविक्रयकरणम् |
| ५ | १ | ५ | भूमीकीटकानामवस्थाप्रश्नः |
| १ | १ | ६ | बालानामवस्थाप्रश्नः |
| ५ | २ | ६ | एकाडादीनामवस्था प्रश्नः |
| २ | १० | ६ | भेदो गुप्तत्वेन तिष्ठेद्वा न |
| १२ | ३ | ६ | दासदासीक्रयकरणम् |
| १२ | ७ | ४ | कदा शुभं भविष्यति |
| ९ | २ | ६ | केन कारणेन रोगत्वं, रोगो निवर्त्तते वान |
| ४ | २ | ६ | रोगिणामवस्था प्रश्नः |

## अथ सप्तमगृहध्रुवांकप्रश्नज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ८ | ९ | ८ | एतेषांभविष्यकालस्य प्रश्नः |
| ६ | २ | ९ | भूतकालस्य तेषाम् |
| २ | ७ | ९ | प्रवास्यागमिष्यतिवा न |
| २ | १ | ७ | मम विजयो भविष्यतिवान |
| २ | ६ | २ | दुष्टानामवस्थाप्रश्नः |
| ९ | ५ | २ | प्रवासी कदाऽगमिष्यति |
| ११ | ७ | ५ | प्रवासी स्वगहंप्रत्यागंतुमिच्छति वान |
| १० | १५ | १४ | प्रवासी जीवति वामृतोविदेशे |
| १६ | ७ | ६ | पलायमानआगमिष्यतिवान |
| १६ | ६ | १६ | पलायमानस्य प्रश्नः |
| ९ | ८ | ७ | चौराणांस्वरूपचिह्नानि |
| ९ | ७ | ५ | प्रवास्यवस्थाप्रश्नः |
| १ | ८ | २ | साटीसमीचीना वर्ततेवान |
| १ | ११ | ७ | स्त्रीणांजातिस्वभावप्रश्नः |
| ११ | ९ | ७ | साली सुंदरी वर्त्तते वाकुरूपा |
| १ | ६ | ७ | दंपतिरमणंसम्यग्वर्त्ततेवान |

ध्रुवाङ्कान्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथाष्टमगृहप्रश्नध्रुवांकाः ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ९ | ११ | ९ | भविष्यकालस्यावस्थाप्रश्नः |
| ७ | २ | ५ | भूतकालस्यावस्थाप्रश्नः |
| ३ | ७ | ३ | भ्रातृदासानामवस्थाप्रश्नः |
| ३ | ९ | ६ | दासीदासप्रचलनस्यप्रश्नः |
| ४ | २ | ९ | स्वमित्रपितृप्रश्नः |
| ७ | ४ | ४ | पितृमित्रस्त्री प्रश्नः |
| २ | ७ | ६ | भार्याद्रव्यस्यप्रश्नः |
| ३ | ६ | ८ | भातृरोगस्यप्रश्नः |
| १ | ५ | ८ | रोगिणीमृत्युर्वर्त्ततेवान |
| ५ | १६ | ५ | पारिणामोबालकानांम् |
| ४ | २ | ८ | मित्राणांस्थानगृहादिकंम् |
| ६ | १४ | ८ | तद्रव्यचौरेणपायितंवान |
| २ | १४ | ८ | स्वाशांप्राप्स्यामिवान |
| ६ | १४ | ८ | रोगी मृत्युंप्राप्स्याद्वान |
| ४ | १ | ८ | मृत्युकारणंम् |
| १ | ७ | ६ | भयंभवेद्वा त्रासः |

## अथ नवमगृहध्रुवांकप्रश्नगृहाणि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| १० | ३ | १० | भविष्यकालस्यविचारः |
| ३ | २ | १ | भूतकालस्यविचारः |
| ३ | २ | ११ | भातृसंगतजनानामवस्थाप्रश्नः |
| ११ | ९ | ५ | संतानमित्रस्त्रीप्रश्नः |
| ११ | २ | ९ | भातृभार्यावस्थाप्रश्नः |
| ५ | ५ | ३ | पौत्राणामवस्थाप्रश्नः |
| १ | ३ | ९ | अस्मिन्संबंधेप्रश्नकरोमि. |
| २ | ३ | ९ | इदंकर्मसत्यं वर्त्तते वा न. |
| ३ | ४ | ९ | जनकरोगस्यंप्रश्नः |
| ५ | १ | ३ | स्वधर्ममार्गाणांमित्रत्वंम्. |
| ६ | ५ | १ | आशां करोमि वा नेति. |
| ३ | ११ | ५ | विद्याभ्यासस्य प्रश्नः |
| ३ | ३ | ७ | स्वप्नफलानां प्रश्नः |
| ११ | २ | ९ | प्रवासिनिवर्त्तनस्य. |
| ५ | ३ | ९ | मार्गेनिर्भयं वर्त्तते वा न |
| ३ | ५ | १ | प्रवासंकुर्याद्वान |

ध्रुवाङ्काद्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ दशमगृहप्रश्नध्रुवांकज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ३ | १ | १ | एतेषांभविष्यकालस्य विचारः |
| ३ | १ | १ | भूतकालस्य विचारः |
| ७ | ९ | ९ | दासपुत्राणां विचारः पुत्रदासानाम् |
| ५ | ७ | ९ | भार्यापरिणामस्यप्रश्नः |
| ५ | ४ | ७ | भार्याग्रामभूम्थवस्थाप्रश्नः |
| ४ | ७ | ७ | भ्रातृमृत्वोर्विचारः |
| ३ | ६ | १० | पितृसंगतजनानांप्रश्नः |
| ७ | २ | ९ | संतानरोगाणां प्रश्नः |
| ५ | १६ | ९ | पितृभार्यावस्थाप्रश्न. |
| ४ | ३ | १० | मातुरवस्था कीदृशी वर्त्तते |
| ३ | ७ | ३ | तत्रगते कीदृशव्यवहारःस्यात् |
| २ | ७ | २ | व्यापारार्थंगच्छामि वा न |
| २ | ५ | १० | स्वप्रतापतेजस्त्वकारणस्य. |
| ३ | ४ | १ | शासनप्रचालनस्य, |
| १३ | २ | १ | लक्ष्मीस्थिरतायाःप्रश्नः |
| २ | ७ | १० | पृथीपतेरवस्थाप्रश्नः |

## अथैकादशगृहध्रुवांकज्ञेयानि.

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| १४ | ७ | १२ | भविष्यकालस्यविचारः |
| १० | २ | १० | एतेषांभूतकालस्यविचारःकर्तव्यः |
| ९ | ५ | ३ | पृथीपतिभ्रातुर्विचारः |
| १६ | ११ | ६ | दासपुत्राणामवस्थाप्रश्नः |
| ४ | २ | १४ | पितृमृत्युकारणस्य विचारः |
| ३ | ३ | ३ | भ्रातृप्रवासस्य विचारः |
| ४ | १ | ५ | भार्यामित्राणांतथास्वसदृशजनपित्रागांप्रश्नः |
| १३ | ९ | १२ | संतानमृत्वोर्विचारः |
| १ | ७ | ११ | हितमित्राणांनिमित्तप्रश्नः |
| १५ | ९ | ११ | पुत्राणांसाटीप्रश्नः |
| १ | ५ | १० | पृथीपतिद्रव्याणाम् |
| १५ | ९ | ११ | मित्रैःसहसंमेलनस्य. |
| ११ | १५ | ११ | पितृभयस्यप्रश्नः |
| १५ | ३ | १४ | आशामित्रेभ्यइति |
| १ | ५ | ११ | पृथ्वीपतिमित्रस्य प्रश्नः |
| ५ | ९ | ११ | मित्राणांमवस्थाप्रश्नः |

ध्रुवाङ्काद्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ द्वादशगृहध्रुवांकज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ३ | १० | ३ | भविष्यकालस्य प्रश्नः |
| ११ | ८ | ११ | भूतकालस्य प्रश्नः |
| ३ | ९ | ११ | बंधमोक्षप्रश्नः |
| १२ | १ | १२ | चतुष्पदविक्रयप्रश्नः |
| ३ | ९ | ३ | पितृप्रवासस्य प्रश्नः |
| ८ | १२ | १ | हितामित्रभयप्रश्नः |
| ७ | १२ | ५ | भ्रातृप्रतापतेजस्त्वविचारः |
| ६ | ७ | ६ | भार्यारोगस्य विचारः |
| ५ | ७ | १२ | शत्रुभिः सार्द्धसंक्षेपस्य प्रश्नः |
| ७ | २ | १४ | शत्रुभिः सह कलहस्य विचारः |
| ७ | ५ | १२ | स्पर्धाकर्तुरवस्थाप्रश्नः |
| ४ | १२ | १२ | बंधगतावस्थाप्रश्नः |
| ६ | ३ | ६ | चतुष्पदानां क्रयप्रश्नः |
| १५ | ७ | १२ | परिणामो दुष्टानाम् |
| ६ | ४ | १ | शत्रुभिः सह दुष्टत्वस्य विचारः |
| १५ | ७ | २ | दुष्टानामवस्थाप्रश्नः |

## अथ त्रयोदशगृहप्रश्नः ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ३ | २ | १० | पृथ्वीपतिमांडलिकस्थ विचारः |
| ६ | ५ | १४ | भविष्यकालस्य प्रश्नः |
| १४ | ५ | १० | भूतकालस्य प्रश्नः |
| १० | ४ | ७ | पृथ्वीपतिस्थानस्यविचारः |
| ४ | ७ | १५ | पृथ्वीपतिकार्याणां परिणामप्रश्नः |
| ३ | ११ | १३ | भ्रातृजायाप्रश्नः |
| ३ | ११ | ३ | हितमित्राणां प्रचलनप्रश्नः |
| ७ | ८ | ११ | स्वसंबंधसंबंधिप्रश्नः |
| ५ | ४ | ८ | पितृप्रतापतेजसोर्विचारः |
| ७ | १५ | १ | पृथ्वीपतिपरिणामस्य विचारः |
| १२ | ६ | ५ | धर्मवेतृनीतिकरणस्य विचारः |
| ५ | ९ | ३ | शत्रुद्रव्याणां विचारप्रश्नः |
| १० | १ | १ | मित्रप्रवासस्य प्रश्नः |
| ४ | १० | ७ | मातृपरिणामस्य प्रश्नः |
| ५ | ९ | ६ | कुशलक्षेमयोः प्रश्नः |
| ३ | ५ | ४ | दूरप्रवासस्य प्रश्नः |

ध्रुवाङ्काद्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ पंचदशप्रश्नस्य ध्रुवांकज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ६ | १२ | ९ | इदंस्वांशप्राप्त्यर्थं कलहं करोमिवान |
| ६ | १२ | ३ | अनेनसार्धंसंमेलनंकरोमिवान. |
| ८ | ११ | १२ | अस्मिन्नुपायेफलप्राप्तिर्वर्त्ततेक्षीयमाणत्वंवा |
| ४ | ५ | १२ | स्वस्थानेस्थापितजनस्यस्वाग्रबालकस्यप्रश्नः |
| ४ | १२ | १ | पितृबन्धस्यगृहस्यप्रश्नः |
| १४ | ११ | ४ | पितृदुष्टानांविचारः |
| १५ | ११ | १ | एनंगृहीत्वानीतिंकरिष्यतिनवा. |
| ३ | ५ | ९ | मित्रेभ्यःआशासिद्धिर्वान |
| १४ | ६ | १ | ममोपरितिष्ठद्वान । |
| ८ | ९ | १ | पृथ्वीपतिरोगस्यविचारः |
| ७ | ९ | १२ | पठामिवानेति. |
| ३ | ५ | ९ | अभ्यासंकरोमिवान. |
| ७ | ६ | १२ | उपद्रवस्यविचारः |
| ९ | ३ | ५ | यत्नोपायस्यविचारः |
| ६ | २ | १५ | न्यूनकरणस्यविचारः |
| ९ | ३ | ५ | समूहकरणस्यप्रश्नः |

ध्रुवाङ्कान्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

## अथ चतुर्दशगृहध्रुवांकज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| ३ | ७ | ४ | भ्रातृवचनप्रश्नः |
| ५ | २ | ११ | पृथ्वीपतिमंत्रविचारः |
| ३ | ७ | १४ | हितमित्राणां विचारः |
| ३ | १० | ११ | हितमित्राणां स्थानविचारः |
| ४ | ७ | १२ | पितुराशाविचारप्रश्नः |
| ५ | ३ | ४ | विवाहितभार्याभयस्य विचारः |
| ७ | ९ | ६ | दासानां प्रवासविचारः |
| ३ | ९ | ७ | स्वसदृशजनस्य मृत्युप्रश्नः |
| ६ | ९ | ३ | प्रवासे क्लेशं प्राप्नुयाद्वा न |
| ३ | २ | १० | आखेटार्थंगच्छामि वा न |
| ५ | ३ | ४ | भ्रातृदुष्टानां विचारः |
| २ | ७ | ९ | मित्रप्रतापतेजसोर्विचारः |
| ४ | ३ | २ | समर्घमहर्घयोर्विचारः |
| १० | ५ | १ | कार्याणां कारणविचारः |
| ६ | ९ | ३ | दैवीवृत्तान्तस्य प्रश्नः |
| १२ | १२ | १४ | कथनश्रवणप्रश्नः |

अथ षोडशगृहप्रश्नध्रुवांकज्ञेयानि ।

| प्रथम | द्वि० | तृ० | |
|---|---|---|---|
| १० | १० | ५ | परिणाममनोभिप्रायःसिद्ध्यतिवान. |
| ६ | १२ | ३ | हितमित्राणांरोगस्यविचारः |
| ५ | १५ | १२ | सिद्धांतःसर्ववस्तूनाम् |
| २ | २ | ११ | दृष्टिःसर्वकार्येषु |
| ७ | ११ | ५ | इदंवाक्यंवदामिवान. |
| २ | ७ | ११ | पृथ्वीपतिभ्योवांछामिवान |
| ५ | ११ | ३ | दुष्टानांवृत्तांतप्राप्तिःस्याद्वान |
| १५ | १६ | १२ | सम्यग्वर्त्तते वान |
| ३ | ४ | ९ | दुष्टानांमित्रस्याविचारः |
| १४ | ११ | ५ | न्यायकरःसम्यग्वर्त्ततेवान |
| ७ | २ | ९ | स्वसुखस्याविचारः |
| ४ | १४ | २ | कार्याणांसमाप्तिप्रश्नः |
| ५ | ३ | १२ | मित्राणांदुष्टत्वस्याविचारः |
| १४ | ९ | ३ | कार्याणांनिरीक्षणकरणाविचारः |
| ९ | १० | १४ | देशानांसुखप्राप्तिःस्याद्वान |
| १४ | २ | ६ | कार्याणांपरिणामस्याविचारः |

ध्रुवाङ्काद्यधस्ताद् व्युत्क्रमेण पठनीयम् ।

"इदं चक्रं परं गुह्यं गोपनीयं प्रयत्नतः । यस्मै कस्मै न दातव्यं नैव देयं कदाचन । अथ रमलविद्याया विवादप्रश्नोत्तराणि । रमलविद्याया विवादप्रश्ना बहुतरास्तेषां मध्ये त्वावश्यकांश्चात्र प्रवच्मि ।

अथ रमलदर्पणं किमित्यत आह ।

चतुर्दश १४ पंचदश १५ गृहे दर्प्पणरूपे ज्ञेयेः कस्मात् । चतुर्दशगृहं मनोऽभिप्रायस्य । तथा पंचदशगृहं धर्माधर्मनीतिकर्तुराज्ञां ज्ञेयं मनोऽभिप्रायासिद्धासिद्धौ चेति वचनात् । नात्र संदेहः ।

अथ रमलरहस्ये तुलागृहं किमित्यत आह ।

रमलतुला पंचदशगृहं ज्ञेयं कस्मात् । यदि कुत्रापि रमलेष्वशुद्धो भवेत्तदा पंचदशगृहेण शुद्धं विजानीयात्समविषमबिंदुरूपाभिरिति वचनात् ।

अथ रमलजिह्वारूपी क इत्यत आह ।

पारशीवचने निसानुल अम्र इत्युच्यते । स द्विधा प्रथमो द्वितीयश्च । तत्र तावत्प्रथमं मनोऽभिप्रायगृहरूपिणा । प्रथमगृहरूपिणं गुणयेत्ताभ्यामुत्पन्नरूपिणो निसानुलअमर इति संज्ञा ज्ञेया । अत्र केचिद्वदंति मनोभिप्रायगृहरूपिणोऽन्वादेशो निसानुलअमर इति ज्ञेयः । अथ द्वितीयः । षोडशगृहरूपिणो निसानुलअमरसानीति संज्ञा ज्ञातव्या । नात्र संदेहः ।

अथ यदि कोऽपि पृच्छेदुपद्रवसंक्षेपः कस्मात्स्थानाज्ज्ञेय इत्यत आह ।

उपद्रवसमाधाने द्विप्रकारे । तत्र तावत् प्रथम मनोभिप्रायगृहचतुर्दशगृहाभ्यां ज्ञेयम् । उभयस्मिन्समानरूपी संक्षेपसमाधानं स्पर्द्धारूपरूपिणा नोपद्रवो ज्ञातव्यः । उपद्रवोऽसंक्षेपमात्रो ज्ञेयः । अथ द्वितीयसमाधानं मनोऽभिलषितदातुर्ज्ञेयम् । यदि स्पर्द्धारूपरूपिणो तयोर्मध्ये १४, १५, प्रश्नरूपी समागतः स्यात्तदा । अथ द्वितीयम् । यदि मनोऽभिप्रायरूपी शुभगृहेष्वन्वादेशं कुर्यात्तदा संक्षेपसमाधानं ज्ञेयम् । यद्यशुभगृहेष्वन्वादेशो भवेत्तदा चोपद्रवो ज्ञातव्यः । नात्र संदेहः ।

अथ यदि पृच्छेत्सौररमलस्य किमित्यत आह ।

रमलचलनप्रारंभः प्रथमगृहप्रभृतिषु । प्रथमगृहं प्रथममेव वा कल्पितप्रथमगृहं तत्प्रभृति गणयेद्यावद्वाञ्छितगृहं प्राप्नुयात् । द्वादशगृहपर्यंतानामेवावधिः पुनरपि प्रथमगृहप्रभृति गणयेत् । पश्चिमदेशीयास्तु षोडशगृहपर्यंतं गणयंति ।

अथ रमलेषु निषेधकर्त्ता सिद्धिकर्त्ता च कः संभवतीत्याह ।

द्वावपि द्विप्रकारौ ज्ञेयौ । तत्र तावत्प्रथमप्रकारः । यदि चतुर्दशे पंचदशे च मनोऽभिप्रायं कुर्यात्तदा मनोऽभिप्रायदाता ज्ञेयो यद्यशुभगृहेष्वन्वादेश ९ गृहरूपी सदृशरूपी समागतः स्यात्तदा निषेधकर्ता

ज्ञातव्यः। अत्र केचित्केवलपंचदश १५ गृहस्यैव विश्वासं कुर्वंति परंतु तथैव।

अथ द्वितीय प्रकारो यदि प्रश्नरूपी शुभगृहेष्वन्वादेशो भवेत्तदा निषेधकर्त्ता ज्ञेयः। नात्र संदेहः।

अथ प्रश्नरमले वक्ता मुग्धो जंगमः स्थावरश्च क इत्यत आह।

पारसीवचने वक्ताशब्दार्थो नीतिक इति तथा मुग्धशब्दार्थः सामीतेति। जंगमशब्दार्थो सुतहीरक इति तथा स्थावरशब्दार्थः साकनेति संज्ञकः कथितो वर्त्तते। तत्र वह्निबिंदुर्वक्ता वायुबिंदुर्जंगमो जलबिंदुः स्थावरो भूमिबिंदुर्मुग्धरूपः। अत्र केचिद्वदंति वह्निर्वक्ता वायुर्मुग्धो जलविंदुर्जंगमो भूमिविंदुः स्थावरः।

अथ वक्तादि चतुर्णां विविधनिरूपणमाह।

वह्निरेकादिकः। वायुर्दशाधिकः। जलं शताधिकम्। भूमिः सहस्राधिका। एवमेकदशशतसहस्राणि यातानि। १,१०,१००, १००० अग्निस्तिक्तो वायुर्मधुरः। जलं क्षारम्। भूमिराम्लरसा। अत्र केचिद्वदंति जलमाम्लरसं पृथ्वी विरसा। अथ वह्निवायूकर्त्तारौ तथा जलभूमी कार्यरूपौ ज्ञेयौ। अथ वह्निर्दिवसः। वायुर्दिनसप्तकः। जलमासरूपम्। पृथिवी वर्षरूपा। अथ वह्निःपूर्वादिक्। वायुरुत्तरा दिक्। जलं पश्चिमा दिक्। पृथिवी दक्षिणादिक्। अथ वह्निःपित्तरूपः। वायूरुधिररूपः। जलं कफरूपम्। पृथिवी वातरूपा। अथ वह्निः स्वलोचनः। वायुर्वाक्यरूपः। जलं संधिरूपम्। पृथिवी निषेधकर्त्री। अथ वह्निर्जीवः। वायुर्बुद्धिरूपः। जलं स्वांशम्। पृथिवी शरीररूपा। अथ वह्निः प्रकाशः। वायुर्दया। जलं दानं। पृथ्वी तमोरूपा। अथ वह्निर्ज्जवरीलगणः। वायुर्मिकाईलगणः। जलं इसराफीलगणम्। पृथिवी इजराईलगणा अथ वह्निर्मेषादित्रि १,२, ३, मासिकः। वायुः कर्कादित्रि ४, ५, ६, मासिकः। जलं तुलादित्रि ७, ८, ९, मासिकम्। भूमिर्मकरादित्रि १०, ११,१२, मासि-

कः। एतत्सर्वं सायनमेषार्काज्ज्ञातव्यम्। अथ वह्निस्त्रयाणामुपरि बलिष्ठो वर्त्तते। वायुर्द्वयोरुपरि जलमेकोपरि बलिष्ठं ज्ञेयम्। तदाह भूमिरेका १ जलं द्वयं २ वायुस्त्रयं ३ वह्निश्चत्वारः ४ अथ वह्निरुष्णशुष्करूपः। वायुरुष्णजलमयः। जलं शीतमयम्। भूमिः शीतला शुष्करूपा तु मुख्यस्वभावो वह्निरुष्णात्मकः शुष्कस्तु विशेषेण। एवं वायुर्मुख्यस्वभावे जलमयस्तथोष्णस्तु विशेषेण। जलं मुख्यस्वभावे शीतलम्। उष्णं तु विशेषेण वर्त्तते। तथा पृथ्वी मुख्यस्वभावे शुष्करूपा शीतलरूपा तु विशेषेण नात्र संदेहः।

अथ किंचिद्विशेष उच्यते।

यो रूपी यस्मिन्गृहे समायाति स तद्गृहस्य प्रकृतिं गृह्णाति स्वकां प्रकृतिं गृहाणि ददाति। यथोदाहरणम्। विधुरूपी ⁝ पंचमगृहे समागतः गृहं वह्निमुखं रूपी तु जलमुखः। तदा रूपीस्वकां शीतलतां गृहाय ददाति। तथा गृहस्थमुष्णत्वं गृह्णाति एवं सर्वत्रैव ज्ञातव्यं नात्र संदेहः।

अथ तृतीयप्रश्नस्य फलकथने मूलं किमित्यतआह।

मनोऽभिलषितगृहरूपिणं तृतीयगृहरूपिणा गुणयेत्ताभ्यामुत्पन्नरूपिणो नाम अमरसालसेति तेन तृतीयप्रश्नं ब्रूयात्। नात्र संदेहः।

अथ प्रश्नस्य मुख्यमूलसंख्यां ज्ञानञ्चाह।

प्रश्नरमलस्य मुख्यमूलानि षोडशपरिमितानि संति। प्रथममाशा पारसीवचने गरज इत्युच्यते। तस्य ज्ञानं प्रथमगृहात्। द्वितीयं कारणं पारसीवाक्ये सवक इत्युच्यते। तज्ज्ञानं चतुर्थगृहात तृतीयभेदः पारसीवाक्ये शिर इत्युच्यते। तस्य ज्ञानं चाष्टमगृहात्। चतुर्थकं सिद्धासिद्धत्वं पारसीवाक्ये हासिललाहासिलेति तस्य ज्ञानं दशमगृहात्। पंचमं संमेलनं पारसीवाक्ये इमतजाज इत्युच्यते। तस्य ज्ञानं प्रश्नगृहज्ञानञ्च मुसल्लसगृहात। षष्ठो मुत्कलिकत्वविक-

सितरूपः पारसीवाक्ये हल्लसंज्ञकः स तु रूपोऽस्ति यो द्वाभ्यां विषमबिंदुसमबिंदुरूपिभ्यां विषमबिंदुरूपी स्यात् । सप्तमो बंधरूपः पारसीवाक्ये अकदनामा सोपि रूपी चास्ति यद्द्वाभ्यां समबिंदुरूपी समरूपबिंदुः स्यात् । हल्लअकदो निरूपणं तस्याग्रे कथयिष्यामि । अष्टमे निकटसाक्षीभूतः पारसीवाक्ये शाहदकरीबं इत्युच्यते । तस्य ज्ञानं मनोऽभिप्रायगृहाद्द्वितीयगृहेण । नवमो दूरसाक्षीभूतः पारसीवाक्ये शाहदबरद इत्युच्यते । तस्य ज्ञानं प्रश्नगृहात्पंचमगृहेण । दशमो निकटदृष्टिकर्त्ता पारसीवाक्ये नाजीरबइद इत्युच्यते । तस्य ज्ञानं प्रश्नगृहात्तृतीयगृहेणैकादशो दूरदृष्टिकर्त्ता । पारसीवाक्ये नाजीरबइद इत्युच्यते । तस्य ज्ञानं प्रश्नगृहात्सप्तमगृहेण । द्वादशः स्वस्मिन्संमेलनरूपः । पारसीवाक्ये मुमातजीज इत्युच्यते स तु रूपी चास्ति । यः प्रश्नगृहाद्द्वादशगृहरूपिभ्यामुत्पन्नो भवेत् । त्रयोदशे च वक्तृत्वं वचनकथनम् । पारसीवाक्ये नुत्क इत्युच्यते । तस्य ज्ञानं वह्निवायुबिंदुभ्याम् । चतुर्दशो मुग्धस्वरूपः पारसीवाक्ये समुत इत्युच्यते । तस्य ज्ञानं तलभूमिबिंदुभ्याम् । पंचदशः स्थावररूपः पारसीवाक्ये साकनेति । तस्य ज्ञानं बहुभीरेखारूपैः । षोडशो जंगमरूपः पारसीवाक्ये मुतहरिकितस्तस्य ज्ञानं बहुभिः केवलबिंदुभिः एवं प्रश्नरमलस्य षोडश मुख्यमूलानि जातानि । नात्र संदेहः ।

अथ जिलईकुत्तरिज्ञानमाह ।

तदा प्रश्नरमलस्य त्रयोदशगृहे पश्येत् । यदि समबिन्दुरूपी भवेत्तदा रमलस्य जिलइ ज्ञेयो यदि चेद्विषमबिन्दुरूपी भवेत्तदा रमलकुत्तरो ज्ञातव्यः । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

सम्पूर्णरमलस्य केवलबिन्दवो गणनीयाः समूहं कृत्वा विलोकयेत् । यदि द्वात्रिंशदधिकाः स्युस्तदा कुत्तररमलः । यदि चेद्द्वात्रिं-

शङ्भ्यो न्यूनास्तदा जिलइरमलो ज्ञेयः । अथानयोः फलम् । जिलइकस्य विचारः संमेलनोपरि । तथा कुत्तरकस्य विचारांशः पृथक्करणोपरि ज्ञातव्यः । अथ कुत्तररमलश्चेत्तदा नव ९ भिर्भजेत् । यदि जिलई रमलो भवेत्तदा द्वादश १२ भिर्भजेत । अनयोः प्रयोजनमाह ।

अथेदं कार्यं कुर्यां वा नेत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत्।तदा प्रथमगृहरूपिणं पञ्चमगृहरूपिणा गुणयेत्ताभ्यामुत्पन्नरूपिणा तृतीयगृहरूपिणं गुणयित्वा रूपिणमुत्पादयेत्तस्य रूपिणोऽबजदमतेन संख्यांकं गृह्णीयात्तथा पंचमगृहरूपिणोऽपि संख्यांकं गृहीत्वा योजयेत्। एवं संख्यांकसमूहं कृत्वा विलोकयेत् । यदि जिलइरमलो भवेत्तदा तस्मिन्समूहे द्वादश १२ भिर्भजेत् । यदि चेत्कुत्तरमलः स्यात्तदा नव ९ भिर्भजेत्।शेषांकान्प्रथमगृहप्रभृतिषु दद्यात्। यत्र संख्या पूर्णतां यायात्। तेन रूपिणा गृहस्वामिनं गुणयेत्ताभ्यामुत्पन्नरूपिणं प्रश्नरमलेषु विलोकयेत्कुत्र समागतो वर्त्तत इति तद्गृहमाश्रितरूपिणां फलं ब्रूयात् । यदि प्रश्नरमलेषु गुप्तो भवेत्तदा तद्गृहस्य स्वामिवत्तद्गृहरूपिणः शुभाशुभफलं ब्रूयात् । अत्र तस्य रूपिणः प्रवेशत्वं स्थिरत्वं निर्गमत्वं द्विस्वभावत्वं शुभाशुभत्वं च विलोकयेत् । तेन प्रश्नसदृशफलं ब्रूयात् । नात्र संदेहः । उदाहरणम् ।

अथेदं कार्यं प्रारभेयं वा नेत्यत आह ।

रमलं पातितं मया । अत्र प्रथमगृहे दैत्यार्चितोऽस्ति ⁝ तथा पंचमगृहेऽपि दैत्यार्चित ⁝ एव द्वावेतौ गुणितौ सौम्य ☰ उत्पन्नः । अनेन तृतीयगृहरूपिणा कवौ ⁝ गुणिते रूप्युत्पन्नः कवि ⁝ रेव अस्य संख्यांकमबजदमतेन नव९परि मितम् । तथा पंचमगृहस्य दैत्या ⁝ र्चितसंज्ञकस्य संख्यांकं सप्तपरिमितं७ द्वयोर्योगे जातम्।१६

अत्र जिलकुत्तररमलं च विचारयेत्। त्रयोदशगृहे दैत्याचिंतो ⁝ ऽस्ति स तु विषमबिंदुः पंचात्मकोऽतः कुत्तररमलः। तदा षोडशे १६ नव भि ९ र्भजेत्। भक्ते शेषं शेषांकान्प्रथमगृहादिषु दद्यात्सप्तमगृहेष्ववसानं यातं तत्र सूरी ⁝ रूपी चास्ति। एवं सप्तमगृहस्वामिना सौरि ⁝ र्गुणितो रूप्युत्पन्नो ⁝ विधुसंज्ञकः। विधू रमलेषु दृष्टः कुत्रापि न प्राप्तस्तदा स्वगृहे दृष्टव्यः को रूपी समागतो वर्त्तते ⁝ अस्य गृहं नवमं ९। तत्र तीक्ष्णांशुः ⁝ पतितोऽस्ति स तु प्रवेशी शुभश्च। अत एवोक्तं मया प्रष्टारं प्रति कार्यस्य प्रारंभोऽयं सम्यग्वर्त्तते कर्त्तव्यमिति। एवं पश्चादुद्भवरूपी प्रश्नरमलेषु कुत्रापि समागतः स्यात्तदा तद्गृहफलं मिश्रितं रूपिणामुक्तं फलं ब्रूयात्। तदभावे गृहं विलोकयेत्। नात्र संदेहः।

अथ हल्लअकदयोर्व्याख्यानमाह।

प्रत्येकहल्लअकदौ द्विप्रकारकौ ज्ञेयौ। एकः स्वभावजो द्वितीयः संयोगजः। कस्मात्। पृथक्पृथग्रूपिभ्यामुत्पन्नत्वात्। एको हल्लस्वभावो द्वितीयः संयोगजः। तथैकोऽकदः स्वभावजो द्वितीयः संयोगजः। पारसीवाक्ये हल्लहकीकी हल्लमिजाजी। तथा अकदहकीकी अकदमिजाजीति संज्ञा कथिता वर्त्तते तदाह। यदि द्वाभ्यां समबिंदुभ्यां समबिंदुरुत्पन्नः स्यात्तदा तस्य नाम अकदहकीकीति वदंति। यदि द्वाभ्यां विषमबिंदुरूपिभ्यां समबिंदुरूपी उत्पन्नः स्यात्तदा तस्य नाम अकदमिजाजीति। अथ यदि दशसमबिंदु विषमबिंदुरूपिभ्यां विषमबिंदुरूप्युत्पन्नः स्यात्तदा तस्य नाम हल्लमिजाजीति। यदि वह्निमुखो जलमुखगृहे पतितः स्यात्तदा भूमिमुखो वायुमुखगृहे समागतश्चेत्तदा तस्य नाम हल्लहकीकीति। हल्लशब्दाऽर्थौ मुक्तो विकसित-

रूपः । अकदशब्दार्थस्तु बद्धो बद्धरूपः हकीकीशब्दार्थः स्वभावजः तथा मिजाजीशब्दार्थः संयोगजो नात्र संदेहः ।

अथ किंचिद्विशेष उच्यते ।

यस्य रूपिणः केवलबिंदुद्वितीयरूपियोगेन रेखारूपं प्राप्नुयात्तस्य नाम अकदइति । यदि द्वाभ्यां केवलबिंदुभ्यामेका रेखा स्यात्तदा तस्य नाम अकदमिजाजीति । यदि द्वाभ्यां रेखाभ्यामेका रेखा स्यात्तदा तस्य नाम अकदहकीति वदंति । अथ यदि रेखाबिंदुभ्यो बिंदुरुत्पन्न स्यात्तदा तस्य नाम हल्लमिजाजीति । अत्र हल्लहकीकी न संभवति । कस्मात् । द्वाभ्यां बिंदुभ्यां बिंदुसंभवाभावात् । रेखासंभवे बंधत्वं बिंदुसंभवे मुक्तत्वमिति ज्ञेयम् ।

अथोदाहरणम् ।

वाग्मी ⁝ अस्य वह्निर्मुक्तरूपोऽस्ति । वायुजलभूमयो बंधरूपाः यद्येवं दैत्यार्चि ⁝ स्तेन सार्द्धं गुणितस्तदा रूप्युत्पन्नस्तीक्ष्णांशु ⁝ संज्ञकः । अत्र वाग्मिनो ⁝ वह्निरकदरूपो यातो वायुर्हल्लरूपः । जलमप्यकदरूपम् । भूमिर्हल्लरूपा परंतु वह्नेरकदो मिजाजी वर्त्तते । तथा वायोर्हल्लोपि मिजाजी । जलस्याकदो हकीकी । भूमिहल्लो मिजाजी ।

अथ द्वितीयोदाहरणम् ।

यदि चोष्णरूपी ⁝ वक्रे ⁝ ण सार्द्धं गुणितस्तदोत्पन्नो ⁝ विधुसंज्ञकस्तदा तयोरग्निवायू बद्धरूपौ जातौ जलमुक्तरूपम् । पृथ्वी बद्धरूपा । अत एव विधुरूपिणा वह्निवायू संयोगजौ बद्धौ ज्ञेयौ । तथा जलमपि संयोगजं ज्ञेयम् । तस्य विधोर्भूमिर्द्विस्वभावजबद्धरूपा ज्ञातव्या नात्र संदेहः ।

अथ तयोर्ज्ञानस्य प्रकारांतरमाह ।

यदि द्वाभ्यां प्रवेशिभ्यां प्रवेश्युत्पन्नः स्यात्तस्य नाम अकदहकीकीति । यदि चेद्द्वाभ्यां निर्गमाभ्यां प्रवेश्युत्पन्नः स्यात्तदा तस्य नाम

अकदमिजाजीति। अथ यदि प्रवेशिनिर्गमाभ्यां निर्गम उत्पन्नः स्यात्तदा तस्य नाम हल्लमिजाजीति वदंति । यदि वह्निमुखो जलमुखगृहे तथा भूमिमुखो वायुमुखगृहे समागतः स्यात्तदा तस्य नाम हल्लहकीकीति ज्ञेयम् । अथैतेषां प्रयोजनमाह । प्रश्नरमलस्य मनोऽभिलषितरूपिणः प्रथमगृहरूपिणा गुणयित्वा रूपिणं उत्पाद्य तं रूपिणं पश्येद्यदि स हल्लहकीकीरूपो भवेत्तदा मनोऽभिप्रायनिर्बन्धाः सिद्ध्यंतीति वाच्यम् । यदि सोऽकदहकीकीरूपो भवेत्तदा मनोंभिप्रायाः सार्गलोपायेन सिद्ध्यंति । अत्र फलकथनयोः स्वभावजयोरेव ग्रहणं न तु संयोगजयोर्नात्र संदेहः ।

अथ किंचिद्विशेष उच्यते ।

प्रश्नरमलेष्विदमपि विलोकयेत् । निर्गमः कुत्र प्रवेशीरूपस्तथा प्रवेशी कुत्र निर्गमत्वं प्राप्नोति द्विस्वभावः स्थिरत्वं स्थिरश्च कुत्र द्विस्वभावत्वं प्राप्नोति यादृशाभ्यां रूपी चोत्पन्नः स्यात्तादृगेव फलं वाच्यम् । नतूत्पन्नसदृशं कदापि य एतं प्रकारं जानीयात्स प्रश्न कथने विमनस्को नो भवेत् । उदाहरणम् । यथा वक्रदैत्याचिंतौ ⠑ ⠇ अत्र वह्निवायुमुखौ वर्तेते तथा जलभूमी च । अतएव बद्धौ वह्निवायू बलिष्ठौ ज्ञेयौ । अनयोर्विचारस्तु निर्गमोपरि वर्त्तते । ताभ्यामुत्पन्नरूपी ⠓ यद्यप्ययं प्रवेशिरूपोस्ति तथापि फलं निर्गमो भवेत् । निर्गमाभ्यां समुत्पन्नत्वात् । एवं सर्वत्रैव द्वाभ्यामुत्पन्नरूपिणां फलं वाच्यम् । नात्र संदेहः ।

अथ मनोभिप्रायप्रश्नकथने ज्ञानोपायमाह ।

पंचदश १५ गृहाबिंदून्प्रचालयेद्यत्रावसानं भवेत्तद्गृहरूपिणा प्रश्नस्याज्ञाकरणं मनोभिप्रायश्च वाच्यः । एष प्रकारो बहुपरीक्षितो दृढतरो ज्ञेयः । तत्रादौ प्रश्नस्याज्ञाकरणमाह। पंचदशगृहाद्द्वौद्वौ बिंदू प्रचालयेत् । प्रचालिते यदि प्रत्येकबिंदुः प्रत्येकरूपिणं प्राप्नुयात्तदा तौ रूपिणौ ग्राह्यौ । ताभ्यां रूपिणमुत्पादयेत् । तं च दैत्या ⠓ चिं-

तेन गुणयित्वांऽन्यरूपिणमुत्पाद्य तेन रूपिणा सर्वप्रश्नस्याज्ञां कुर्यात् । परंत्वत्राकदोद्भवं हल्लोद्भवं वावश्यकेन स्मरणं कुर्यात् । तदा प्रश्नस्तथ्यतां याति ।

अथ मनोभिप्रायकथनोपायः ।

तौ द्वौ बिंदू पंचदशगृहात्प्रचालितौ तयोर्मध्ये यदि प्रत्येकबिंदुः प्रत्येकगृहरूपिणं प्राप्नुयात्तदा तौ रूपिणौ गृहीत्वा गुणयेत्ताभ्यामुत्पन्नरूपिणा प्रष्टुर्मनोभिप्रायं ब्रूयात् । स प्रश्नरमलस्य यस्मिन् गृहे भवेत्तद्गृहविचारांशसदृशं मनोभिप्रायं वदेत् । यदि स रमलेषु कुत्रापि नो समागतः स्यात्तदा मनोभिप्रायः प्रवासस्य वा प्रवासिनः । नात्र संदेहः ।

अथ रमलस्य पंचपदवीराह ।

प्रथमा रूहवाई कोर्थश्चतुर्बिंद्वात्मिका यथा ⁞ द्वितीया खुमासी कोर्थः पंचबिंद्वात्मिका यथा ⁝ ⁝ ⁝ ⁝ तृतीया सुदासी कोर्थः षष्ठबिंद्वात्मिका यथा । ⁝ ⁝ ⁝ ⁝ चतुर्थी सुबाई कोर्थः सप्तबिंद्वात्मिका यथा । ≡ अथ संपूर्णरमलविद्याया मुख्यमूलमाह । शीतांशु ⁞ । ≡ यथा ≡ ≡ ≡ ≡ पञ्चम समानी कोऽर्थौ वसुबिंद्वात्मिका सौम्यौ मुख्यमूले ज्ञातव्ये आभ्यां शेषाणांसमुत्पन्नत्वात् । तत्र शीतांशुः पुमान्सौम्यः "स्त्री दंपतिभ्यां युतं सर्वजगत्स्थावरजंगमम्" इति स्मरणादाभ्यां शेषा बालका ज्ञातव्याः । यथा रूपिणामुत्पत्तिप्रकरणे पूर्वमुक्तं मया ।

अथ पंचपदवीनां प्रश्नसमये प्रयोजनमाह ।

यदा रमलः पतितो भवेत्तदैवं जानीयादयं रमलः कस्याः पदव्या मध्ये वर्त्तत इत्यत आह । प्रथमगृहरूपिणं पश्येत् । स रुवाई प्रभृतिषु किं पदवीरूपोस्ति तद्बिंदुसमूहं द्वितीयगृहादिषु दद्याद्यत्र पूर्णतां यायात्तद्गृहरूपिणमपि रुवाईप्रभृतिषु विलोकयेत । यदि प्रथमगृहसंदृशो भवेत्तदा द्वयोरेकरूपिणोर्बिंदुसमूहं कृत्वा षड्भि-

भंजेत्। शेषेण फलम्। यद्यत्र कोऽपि रूपी स्यात्तं बिंदुसमूहांकं वा ग्रामगृहादिषु प्रदद्यात्। यत्र संख्या पूर्णतां याति तद्गृहरूपिणं विलोकयेत्। एवं पुनः पुनः कर्त्तव्यं यावदेकपदवीरूपौ द्वौ साक्षीभूतौ निरंतरस्थौ प्राप्नुयात् । एवं कृते यस्याः पदव्या रूपिणौ प्राप्येते। तस्य रमलस्य सा एव पदवी ज्ञातव्या । तथैव प्रथमगृहप्रभृतिषु यस्योपरि रूपिबिंदुसंख्याऽवसानं स्यात्। तान्रूपिणः प्रगृह्य तेषां बिंदुसमूहं कुर्यात्। षड्भि ६ र्भक्ते शेषांकांस्तदवसानद्वितीयगृहादिषु दद्यात्। यत्र संख्या पूर्णतां यायात्तद्गृहरूपिणां गृहेण च मनोऽभिलषितं प्रष्टुः प्रश्नोत्तरं च ब्रूयात्। नात्र संदेहः। उदाहरणम्। प्रथमगृहे दैत्यार्चितोऽस्ति ⁝ अयं च खुमासी पंचबिंद्वात्मकः। द्वितीयगृहादिषु दत्ते षष्ठगृहेऽवसानं यातम्। तत्र चोष्णगु⁝श्चास्ति स तु सुदासी षर्बिंद्वात्मकः। तदङ्केषु सप्तमगृहादिषु दीयमानेषु द्वादशगृहेऽवसानं यातम्। अत्रनैरंतर्य्ये ⁝ षड्बिंद्वात्मकौ द्वौ रूपिणौ प्राप्तावत एवायं रमलः सुदासीपदव्यां वर्त्तते । तेषां त्रयाणां बिंदुसंख्या सप्तदश १७ अत्र षड्भि ६ र्भक्ते शेषांकाः पञ्च ५ अत एव प्रथमगृहादिषु दाने । पंचमगृहेऽवसानं यातम् । पंचमगृहे तु आरोऽ⁝स्ति । अत्रैवं पुत्रसंभवप्रश्नो वर्त्तत इति ज्ञेयम् । एतद्विचारः प्रकृतिक्रमोपरि सत्यरूपः बहुसमीचीनो ज्ञेयः। नात्र संदेहः।

अथ जन्मलग्नज्ञानमाह ।



श्रद्धाभक्तिविनयान्वितो रमलहस्तस्तदुद्देशं समाश्रित्य रमलं पातयेत् तस्य केंद्रस्थरूपिणो विलोकयेत । तदाह । प्रथमगृहरूपिणं चतुर्थगृहस्थेन गुणयित्वा रूपिणमुत्पाद्य भिन्नं स्थापयेत्। तथा सप्तम-

गृहस्थं दशमगृहस्थेन गुणयेत् । ताभ्यामुत्पन्नरूपिणां पूर्वरूपिणं गुणयित्वा रूपिणमुत्पाद्य तं पश्येत् । तस्य रूपिणो वर्णक्रमेण वर्णं गृहीत्वा तस्य वर्णस्याबजदमतेन संख्यांकान्गृह्णीयात् । तस्मिन्समूहे षोडशभि १६ भंजेत् । शेषांकान्प्रथमगृहादिषु दद्यात् । यत्रावसानं स्यात्तद्गृहरूपिणोक्तराशिं जन्मलग्नं विजानीयात् । तस्य रूपिणो ग्रहो जन्मलग्नस्वामी ज्ञातव्यः ।

अथ प्रकारांतरमाह ।

एकादशगृहरूपिणं पंचदशगृहस्थेन गुणयेत्ताभ्यामुत्पन्नरूपिणमुक्तगृहराशिं जन्मलग्नं विजानीयात् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

श्रद्धाभक्तिविनयान्वितो रमलज्ञो वारत्रयं स्वेष्टमंत्रं स्तोत्रं च पठन्रमलं पातयेत् । तस्य तृतीयगृहरूपिणं पंचमगृहरूपिणा गुणयित्वा रूपिणमुत्पाद्य तं पश्येत्तदुक्तगृहराशिं जन्मलग्नं विजानीयात् । यदि स रूपी प्रथमगृहस्वामी स्यात्तदा तस्य लग्नस्य द्वितीयांशे जन्म ज्ञातव्यमिति। द्वितीयगृहस्वामी चेत्तदा चतुर्थांशे । तृतीयगृहस्वामी चेत्तदा षष्ठांशे ।चतुर्थगृहस्वामी चेत्तदाष्टमांशे। एवं द्विघ्नमग्रेऽपि ज्ञातव्यन्नात्र संदेहः ।

अथ प्रकारांतरमाह ।

पंचमा ५ ष्टमगृहरूपिणोः केवलबिंदवो गणनीयास्तेषां समूहं कृत्वा प्रथमगृहादिषु दद्यात् । यत्र संख्या पूर्णतां यायात्तद्गृहरूपिणोक्तराशिं जन्मलग्नं विजानीयात् ।

अथोदाहरणम् ।

रमलं पातितं मया तस्य पंचमगृहे विधूः रूपी स्थितः । तथाष्टमगृहे वक्ररूपी स्थितो द्वयोः केवलबिंदुसंख्याश्चतस्रः ४ प्रथमगृहादिषु दत्ते चतुर्थगृहेऽवसानं यातम् । तत्र विधू रूपी प्राप्तस्तदा मयोक्तं कर्कलग्ने जन्म । नात्र संदेहः ।

अथ तस्यलग्नस्यांशज्ञाने केचिद्वदंति।

पंचमाष्टमगृहरूपिणोः केवलबिंदुसंख्या यत्र पूर्णतां यायात्तद्गृहरूपिणोः सर्वबिन्दुसंख्याभिर्लग्नांशं ब्रूयात्।

अथोदाहरणम्।

द्वयोः केवलबिन्दुसंख्याश्चतस्रः प्रथमगृहादिषु तासु दत्तासु चतुर्थगृहे प्राप्तो विधु ⁝ रूपी स तु सप्तबिन्द्वात्मकोऽत एवोक्तं मया कर्कलग्नस्य सप्तमांशे जन्म। सामान्यप्रकारोऽयम्। त्रिंशदधिकाभावात्।

अथ स पिशुनो दूतश्चास्मिन्नेव नगरे सैन्ये ऽवर्त्तते वा नेत्यत आह।

तदुद्देशं समाश्रित्य रमलं पातयेत्तदा चतुर्थगृहे पश्येत्। यद्येषां त्रयाणां ⁝ ⁝ ⁝ मध्ये चैकोऽपि स्यात्तदास्मिन्नगरे सैन्ये पिशुनो दूतश्च नास्तीति ब्रूयात्। यदि चतुर्थगृहे प्रवेशी वा द्विस्वभावो भवेत्तदा स दूतोऽस्मिन्नेव नगरे वर्त्तत इति ज्ञातव्यम्। यदि स एव नवम ९ सप्तम ७ पंचदश १५ गृहेष्वऽन्वादेशरूपं कुर्यात्तदा संप्रति पूर्वादिशं गंतुमिच्छति। यदि चतुर्थः स्थिरो भवेत्तदा तं दूतं कोऽपि धार्य्येत्। चेद्यदि चतुर्दशगृहेपि स्थिरः स्यात्तदा तु ध्रुवमेव। यदि चतुर्थगृहे निर्गमो भवेत्तदा तं दूतं पिशुनं च कोऽपि धर्तुं शक्तो न स्यात्। एवं चौरादीनामपि ज्ञेयम्। नात्र संदेहः।

अथास्मिन्वर्षे परसैन्यं समागमिष्यति वा नेत्यत आह।

तदुद्देशं समाश्रित्य रमलं पातयेत्। पूर्णं कृत्वा तस्याष्टम ८ सप्तम ७ चतुर्थ ४ नवम ९ गृहरूपिणां मातृगृहं विरच्य द्वितीयरमलं कुर्यात्तदा पश्येत। यदि तुलागृहे केवलवायुबिन्दुर्नो समागतः स्यात्तदा परसैन्यमस्मिन्वर्षे समागंतुमिच्छेत्परंतु तस्यागमनमस्थिरत्वे पतेत्। यदि प्रथमरमलस्य पंचदश १५ गृहरूपी द्वितीयरमलस्य चतुर्थगृहेऽन्वादेश कुर्यात्तदा ध्रुवमस्मिन्वर्षे परसैन्यं समागमिष्यति। यदि रमलेषु निर्गमा बहुतराः स्युस्तदा

नागमिष्यति । यदि स्थिरा बहुतराः स्युस्तदा ध्रुवमागमिष्यति प्रवेशी चेत्तदा स्थिरवत्फलम् । द्विस्वभावे निर्गमवन्नात्र संदेहः ।

अथ रमलेषु सहमूलआदतेति । तथा सहमूलगैबेति किमित्यत आह ।

सहमूलआदतेति कोऽर्थो भाग्यांशयोगः सहमूलगैबेति कोऽर्थः आस्नायोगस्तत्र रमलेषु त्रयोदशगृहं भाग्ययोग्यं विद्धि तस्य नवमगृहं साक्षीभूतं ज्ञेयम् । तथा चतुर्थगृहमास्नायोगं विद्धि तस्य साक्षीभूतं पंचदशगृहं ज्ञेयमिति । तस्य भाग्यांशयोगस्य बलं तीक्ष्णांशु ⁝ रूपिणा ज्ञातव्यम् । तथा आस्नायोगस्य बलं शीघ्रत्वं च शीतांशुना ⁝ जानीहि । यदि प्रश्नरमलस्य शुभगृहेषु तीक्ष्णांशुः ⁝ समागतः स्यात्तद भाग्यांशयोगो बलान्वितः । स्थिररूपश्च भवेत् । यदि रमलेषु शुभ ..षु शीतांशुः ⁝ समागतः स्यात्तदा आस्नायोगे बलाधिक्यं बहुशीघ्रत्वं च वाच्यम् । एवं यदि भाग्ययोगः प्रश्नरमलेषु विविधबलयुतो भवेत्तदा दशमगृहप्रश्ना राज्यप्रतापादयो झटित्येव सिद्ध्यंति । यदास्नायोगो यथोक्तविधिना विविधबलान्वितः प्रश्नरमलेषु स्यात्तदा चैकादशगृहप्रश्ना मित्राणि मित्रत्वादीनि झटित्येव सिद्ध्यंति ।

अथ द्वयोर्योगयोः साधारणफलमाह ।

भाग्यांशयोगे द्रव्यग्रामभूमिस्ववस्तूनां वर्द्धमानता विजयश्च स्यात् । आस्नायोगे चाशा प्रसन्नता जीवशरीराणां मुक्तरूपा भवेत् । विकसितरूपा च । बंधगृहाच्छोकाच्च । झटित्येव मुक्तो भवेत् । तथा शीघ्रतया मनोऽभिप्रायं प्राप्नुयात् । सहमूलआदतकस्य नाम सहमूशक इत्यपि वदंति । कस्माद्यस्तु तीक्ष्णांशुर्बलद इति वचनात्तथा सहमूलगैबकस्य नाम सहमूलकमर इति वदंति । कस्मात्पतिशीतांशुर्बलद इति वचनात् । सहमूलशब्दार्थः सूर्यः । कमरशब्दार्थश्च चंद्रो यद्वा सहमूलआदत स्थिररूपा तथा तीक्ष्णांशुरपि स्थिरः सहमूलगैब योगः प्रचलनरूपः शीतांशु ⁝ रत्रावश्यकं भाग्ययोग्य-

मास्नायोगं नीतिकर्त्तारं रूपिणां संपूर्णावस्थाशुभाशुभत्वं निर्गमप्रवेशित्वं द्विस्वभावस्थिरत्वं च प्रश्नकथने विलोकयेत् । तादृशं फलं वाच्यम् ।

अथ रूपिणां जौऽजुज्जौजादिसंज्ञामाह ।

येषां रूपिणां स्वरूपं विषमरूपं तथा विषमपदवीकं तेषां नामाऽकद इति वदन्ति यथा येषां रूपिणां स्वरूपं समरूपं तथा समपदवीकं च तेषां नाम जौऽजुज्जौज इति यथा येषां रूपिणां स्वरूपं समरूपं तथा विषमपदवीकं तेषां नाम जौजुलअकद इति यथा येषां रूपिणां स्वरूपं विषमं तथा समपदवीकं तेषां नामाऽकदलजौज इति यथा येषां रूपिणां स्वरूपं समं तथा समपदवीकं च तेषां नाम जौजुज्जौज इति यथा नात्र संदेहः ।

अथ ममाऽभिप्रायः सिद्ध्यति वा नेत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयित्वा । तस्य पंचमगृहरूपिणा चतुर्थदशगृहरूपिणं गुणयेत्ताभ्यामुत्पन्नरूपिणं चतुर्दशगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नरूपिणं भिन्नं संस्थाप्य पुनः प्रथमगृहरूपिणा प्रश्नगृहरूपिणं गुणयित्वा रूपिणमुत्पादयेत् । द्वाभ्यामेकं विधाय तेन मनोऽभिप्रायस्य प्राप्तिं ब्रूयात् । शुभाशुभत्वाऽन्वादेशत्वनिर्गमप्रवेशिस्थिरद्विस्वभावैस्तस्य रूपिणआवश्यकेनैव विलोक्य तादृगेव फलं वाच्यम् ।

अथामुकजनः स्वगृहे तिष्ठति वा नेत्यत आह ।

तदा मातृगृहेषु पश्यत् । यदि बोधनो वा मंदगो वा शीतांशुः समागतः स्यात्तदा स स्वगृहे तिष्ठतीति वाच्यम् । यदि तमुष्णगु वा कवि रूपी विलोकयेत्तदा तस्मिन्गृहे तं जनं पश्येत्प्रष्टा यदि तं नो विलोकयेत्तदा तं जनं नो विलोकयेत्परन्तु

गृहे तिष्ठति यदि तेषां त्रयाणां मध्ये कोऽपि नो समागतः स्यान्मातृगृहेषु तदा स जनः स्वगृहात्पलायित इति ज्ञेयन्नात्र संदेहः ।

अथ दिनचर्य्यायां शुभाशुभमाह ।

श्रद्धाभक्तिविनयान्वितो रमलज्ञः सुस्थितमनसा प्रत्यूषसमये रमलं पातयेत् । यदि चतुर्दश १४ पंचदश १५ पंचम ५ गृहेषु शुभाः समागताः स्युस्तदा तस्मिन्दिने विविधफलप्राप्तिर्द्रव्यादिभोजनादिलाभश्च स्यात् । अत्र दिनचर्याप्रश्नकथने त्रयो रूपिणो बहुशुभतरा ज्ञातव्याः । अतीव निषिद्धतरा इमे चत्वारः शेषाः समानफलदा ज्ञेयाः । अत्र केचिद्वदंति द्वावेतावपि शुभतरौ ज्ञेयौ ।

अथास्मिन्प्रचलने निषिद्धता भविष्यति वा नेत्यत आह ।

तदा षष्ठाष्टमद्वादशगृहेषु पश्येत् । यदि शुभानिर्गमाः स्युस्तदा तस्मिन्प्रचलने निषिद्धता स्यात् । यदि शुभाः स्युस्तदा निषिद्धता नो स्यात् । प्रवेशी चेद्वा निर्गमः । अत्र शुभाशुभयोगे च ग्रहणं शुभे सुखं दुःखं चाशुभे ज्ञातव्यम् । यदि तेषु गृहेषु शुभाशुभौ द्वावपि स्यातां तदाधिक्योपरि फलं ब्रूयात् । नात्र संदेहः ।

अथ प्रत्येकषोडशरूपिणां मातृगृहेषु समागतानां पृथक्फलमाह ।

यदि मातृगृहेषु १,२,३,४ चत्वार एकस्वरूपाः स्युस्तेषां विचारांशं दर्शयति । तत्रादौ प्रथमादिचतुर्षु गृहेषु यदि वाग्मी समागतः स्यात्तदा विचारांशोऽत्यजानां सैन्योपरि रोगिणां मरणोपरि वर्त्तते । चत्वारः स्युस्तदा विचारांशोऽशुभजनानां समूहोपरि तथा बहुफलप्रश्नोपरि येषां जनानां धर्मकार्य्याय समूहः स्यात्तेषामुपरि वर्त्तते यद्येते चत्वारः स्युस्तदा विचारांशो वस्तुनः क्षीयमाणतोपरि कुकर्मनिरतानां संतानोपरि तथा धर्म्मविरुद्धकार्योपरि वर्त्तते । अथ यद्येते चत्वारः स्युस्तदा विचारांशो बहुजनानां समूहोपरि जलस्थसैन्योपरि । तथांधकारोपरि

पुनस्तत्कार्योंपरि यस्मिन्कार्ये विषण्णचित्तो भवेत्परंतु सिद्धिं नो प्रयाति चेत्स्याद्बहुवर्षोंपरि । अथ यदीमे ⁝ ⁝ ⁝ ⁝ चत्वारः स्युस्तदा विचारांशः खड्गानां निःसृतोपरि चौरोपरि कुकर्मनिरतानां संतानोपरि तथा रोगिणां मरणोपरि वर्त्तते। यदि चैते ⁝ ⁝ ⁝ ⁝ चत्वारः स्युस्तदा विचारांशः स्त्रीणां समूहोपरि परंतु मरणोपरि ज्ञेयो यासां समूहः स्यात् तथोष्ट्राणामुपरि स्त्रीरूपाणामेडकादीनामुपरि वर्त्तते । अथ यद्येते चत्वारः ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशः परसैन्योपरि वर्त्तते । यदि प्रथमादि चतुर्षु गृहेषु १, २, ३, ४, एते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशो रुधिरपतनोपरि रुधिरविक्षेपोपरि तथा मरणप्रचलनोपरि चास्तव्यस्तरूपोपरि कार्य्यविध्वंसोपरि वर्त्तते । अथ यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशो बहुजलोपरि बहुवृक्षोपरि तथा पलायमानोपरि वर्त्तते । यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशो बलानां समूहोपरि कुशलोपरि वर्त्तते।यद्येते चत्वारः ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशो आह्वानोपरि राज्ञामग्रे चीत्कारोपरि वर्त्तते । परंतु तस्मिन्मध्ये किंचित्कुशलं न स्यात् । अथ यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशः स्त्रीणां संतानोपरि व्यभिचारिण्युपरि कुलटोपरि तथा कुमारोपरि शिष्योपरि वर्त्तते।यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशो वज्रोपरि कुंतोपरि लघुकुंतोपरि त्रिशूलोपरि वर्त्तते।यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशः स्त्रीणां जात्युपरि मार्गघ्नोपरि तथाततायिनामुपरि विचारांशो राज्ञामग्रे वाह्वानकरणोपरि वर्त्तते । यद्येते ⁝ ⁝ ⁝ ⁝ स्युस्तदा विचारांशः कलहोपरि युद्धोपर्यस्तव्यस्तरूपेऽपि तस्मिन्किंचिदपि कुशलं स्यात् । नात्र संदेहः । अथ विविधप्रश्नाः प्रोच्यंते ।

अथेदं कर्मकुर्यान्न वेत्यत आह ।

प्रथमगृहरूपिणा पंचमगृहरूपिणं गुणयित्वा । ताभ्यामुत्पन्नं त्रयोदशगृहरूपिणा गुणयेत् । आभ्यामुत्पन्नरूपिणं पंचमगृहरू-

पिणा गुणयेत्तस्या बजदक्रमेण संख्याकं गृह्णीयात् । अत्र विलोकयेत् । यदि कुत्तरी रमलः स्यात्तदा तस्मिन्समूहांके नवभिर्भजेत् ९ यदि चेज़िलइरमलो भवेत्तदा द्वादशभि १२ र्भजेत् । अंकानां समूहो हाराधिकश्चेच्छेषांकान्मनोऽभिलषितगृहप्रभृतिषु दद्यात् । यत्र संख्या पर्णतां यायात्तद्गृहरूपिणा गृहेण च तस्यान्वादेशेन फलं वाच्यन्नात्र संदेहः । इयमेव कर्त्तव्यता वक्ष्माणप्रश्नेष्वपि कर्त्तव्या ।

अथाहं व्यक्तत्वं करिष्यामि वा नेत्यत आह ।

प्रथमद्वितीयाभ्य रूपिणश्चाबजदमतेन संख्यासमूहं कृत्वा तत्र प्रागुक्तप्रकारवत्कुर्यात् । शेषांकान्मनोऽभिलषितगृहप्रभृतिषु दत्वा फलं ब्रूयात् ।

अथ मम द्रव्यादिकस्य वर्द्धमानता भविष्यति वा नेत्यत आह ।

द्वितीयगृहरूपिणमष्टमगृहरूपिणा गुणयेत । ताभ्यामुत्पन्नरूपिणं चतुर्दशगृहरूपिणा गुणयित्वा रूपिणमुत्पाद्य तस्य द्वितीयगृहरूपिणश्च संख्यासमूहं कृत्वा भजेच्छेषं पर्ववत् ।

अथ मम द्रव्यस्यागमनं केन कारणेन भविष्यतीत्यत आह ।

द्वितीयचतुर्दशाभ्यां २, १४ रूपिणमुत्पाद्य तं च पंचमरूपिणा गुणयित्वा रूपिणमुत्पादयेत् । तस्य चतुर्दशगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत ।

अथास्य द्रव्यस्य ऋणं ददाति वा नेत्यत आह ।

द्वितीयाष्टमरूपिभ्यांरूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयेत्।एतदुत्पन्नरूपिद्वितीयगृहरूपिणोः संख्यासमूहं कृत्वा भजेत्।

अथ कलहं करोमि वा नेत्यत आह ।

षष्ठ ६ दशमा १० भ्यां रूपिणमुत्पाद्य तं च सप्तमरूपिणा गुणयित्वाऽन्यरूपिण उत्पादयेत । तस्य तथैकादशगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ प्रवासस्य गमनं भविष्यति वा नेत्यत आह ।

द्वितीय २ सप्तमाभ्यां रूपिण उत्पाद्य तं च द्वितीयगृहरूपिणा गुणयेत् । आभ्यामुत्पन्नरूपिणं सप्तमगृहरूपिणः संख्यासमूहं कृत्वा भजेत् ।

अथ स्वसंगतजनेन फलं प्राप्स्यामि वा क्षयमित्यत आह ।

तृतीयनवमाऽभ्यां ३,९, रूपिणमुत्पाद्य तं चैकादशगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । उत्पन्नस्य पंचमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ निकटे प्रवासं करोमि वा नेत्यत आह ।

तृतीयनवमाभ्यां ३, ९ रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य तृतीयगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ स्वप्नफलं कीदृशं वर्त्तत इत्यत आह ।

तृतीय ३ पंचमाभ्यां ५ रूपिणमुत्पाद्य तं च नवमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवमगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ ग्रामभूमीनां क्रयं करोमि कीदृशं वर्त्तत इत्यत आह ।

चतुर्थ ४ प्रथमा १ भ्यां रूपिणमुत्पाद्य तं च चतुर्थगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य सप्तमगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ ग्रामभूमीनां विक्रयं करोमि कीदृशं वर्त्तत इत्याह ।

चतुर्थ ४ द्वितीयाभ्यां २ रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य प्रथमगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ भूमीतले निधिवर्त्तते वा नेत्यत आह ।

चतुर्था ४ ष्टमा ८ भ्यां रूपिणमुत्पाद्य तं च प्रथमगृहरूपिणा

गुणयित्वाऽन्यरूपिणमुत्पादयेत्तस्य चतुर्थगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ ममायुर्दायः कतिपरिमितो वर्त्तत इति प्रश्न आह ।

चतुर्थ ४ तृतीया ३ भ्यां रूपिणमुत्पाद्य तं च प्रथमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य चतुर्थगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ मम पिता द्रव्यं स्थापयेद्वा नेत्यत आह ।

चतुर्थ ४ पंच ५ माभ्यां रूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य प्रथमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ मम बालकानामवस्था कीदृशी वर्त्तत इत्यत आह ।

पंचम ५ द्वितीयाभ्यां २ रूपिणमुत्पाद्य तं च प्रथमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य पंचमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ स्त्री सगर्भा वर्त्तते वा नेत्यत आह ।

पंचम ५ तृतीया ३ भ्यां रूपिणमुत्पाद्य तं च तृतीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ गर्भे कन्या वर्त्तते वा पुत्र इत्यत आह ।

पंचम ५ सप्तमाभ्यां ७ रूपिणमुत्पाद्य तं च षष्ठगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथायमर्भको जीवेद्वा नेत्यत आह ।

पंचमैकादशाभ्यां ५, ११ रूपिणमुत्पाद्य तं च षष्ठगृहरूपिणा

गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य पंचदशगृहरूपिणश्च संख्या समूहं कृत्वा भजेत् ।

अथ स मित्रत्वं स्थापयति वा नेत्यत आह ।

पंचम ५ तृतीयाभ्यां ३ रूपिणमुत्पाद्य तं च प्रथमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य तृतीयगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ वृत्तांतस्यागमनं भविष्यति वा नेत्यत आह ।

पंचम ५ द्वितीया २ भ्यां रूपिणमुत्पाद्य तं च तृतीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवमगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथ वृत्तांतः समीचीनो वर्त्तते वा नेत्यत आह ।

एकादशपंचमाभ्यां ११,५,रूपिणमुत्पाद्य तं च प्रथमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य सप्तमगृहरूपिणश्च संख्या-समूहं कृत्वा भजेत् ।

अथास्माच्छोकान्मुक्तो भविष्यामि वा नेत्यत आह ।

एकादशपंचमाभ्यां ११,५ रूपिणमुत्पाद्य तं च चतुर्थगृहरूपिणा गुणयित्वाऽन्यं रूपिणमुत्पादयेत् । तस्य प्रथम १ गृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ काचिन्नूतनवस्तुप्राप्तिर्भविष्यति वा नेत्यत आह ।

पंचम ५ द्वितीयाभ्यां२रूपिणमुत्पाद्य तं चाष्टमगृहरूपिणा गुण-यित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ बालाः क्लेशान्विता भवेयुर्वा नेत्यत आह ।

सप्तमदशमाभ्यां रूपिणमुत्पाद्य तं च द्वादशगृहरूपिणा गुण-

यित्वाऽन्यरूपिणमुत्पादयेत् । तस्य पंचम ५ गृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ मित्राणामवस्था कीदृशी वर्तत इत्यत आह ।

पंचमसप्तमाभ्यां रूपिणमुत्पाद्य तं च नवमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य पंचमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ रोगिणोऽवस्था कीदृशी वर्त्तत इत्यत आह ।

षष्ठ ६ चतुर्था ४ भ्यां रूपिणमुत्पाद्य तं च द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ रोगः केन कारणेन जात इत्यत आह ।

षष्ठ ६ तृतीया३ भ्यां रूपिणमुत्पाद्य तं च द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ रोगी कदा स्वास्थ्यं प्राप्स्यतीत्यत आह ।

षष्ठ ६ द्वादशाभ्यां १२ रूपिणमुत्पाद्य तं च दशमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य चतुर्थगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथैतं दासं क्रीणीयां वा नेत्यत आह ।

द्वितीय२ द्वादशाभ्यां१२ रूपिणमुत्पाद्य तं च तृतीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठ ६ गृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथैतं दासं विक्रीणीयाश्चेत्कीदृशं स्यादित्यत आह ।

षष्ठ ६ सप्त ७ माभ्यां रूपिणमुत्पाद्य तं च द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ मम भेदो गुप्तत्वेन तिष्ठेद्वा नेत्यत आह ।

षष्ठ ६ द्वितीया २ भ्यां रूपिणमुत्पाद्य तं चाष्टमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

यदि पश्चिमस्थैडकानामवस्थां पृच्छेदित्यत आह ।

षष्ठपंचमाभ्यां रूपिणमुत्पाद्य तं च द्वितीय गृहरूपिणा गुणयित्वा अन्यरूपिणमुत्पादयेत् । तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ विवाहं करिष्यामि वा नेत्यत आह ।

चतुर्थप्रथमाभ्यां रूपिणमुत्पाद्य तं च चतुर्थगृहरूपिणागुणयित्वान्यरूणिणमुत्पादयेत् । तस्य सप्तमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ स्त्री सुंदरी वर्त्तते वा नेत्यत आह ।

एकादशसप्तमाभ्यां रूपिणमुत्पाद्य तं च नवमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य सप्तमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ सा स्त्री कुलं स्थापयिष्यति वा नेत्यत आह ।

पंचम ५ दशमा १० भ्यां रूपिणमुत्पाद्य तं चैकादशगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य सप्तमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ यदि पृच्छेत्सार्टिं कुर्य्यां वा नेत्यत आह ।

सप्तमप्रथमाभ्यां रूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्तस्य द्वितीयगृहरूपिणः संख्यासमूहं कृत्वा भजेत् ।

अथ प्रवासिनोऽवस्था कीदृशी वर्त्तत इत्यत आह।

सप्तम ७, ९ नवमाभ्यां रूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्। तस्य पंचमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत्।

अथ प्रवासी मृतो वा नेत्यत आह।

सप्तमदशमाभ्यां रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्। तस्य प्रथमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत्।

अथ स्पर्द्धकजनो मया सार्द्धं कीदृशो वर्त्तत इत्यत आह।

सप्तमद्वितीयाभ्यां रूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्। तस्य षष्ठगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत्।

अथ भयं वर्त्तते वा नेत्यत आह।

अष्टमदशमाभ्यां ८, १० रूपिणमुत्पाद्य तं च षष्ठगृहरूपिणा गुणयित्वान्यरूपिणमुत्पादयेत्। तस्य सप्तमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत्।

अथ मृत्युपरोक्षे स्वांशं प्राप्स्यामि वा नेत्यत आह।

अष्टम ८ द्वितीयाभ्यां२रूपिणमुत्पाद्य तं द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्। तस्य तथाष्टमगृहरूपिणः संख्यासमूहं कृत्वा भजेत्।

अथ ऋणं ग्रहीष्यामि वा नेत्यत आह।

अष्टम ८, २ द्वितीयाभ्यां रूपिणमुत्पाद्य तं चैकादशगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत्तस्य द्वितीयगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत्।

अथ रोगी मरिष्यति वा नेत्यत आह।

अष्टम ८ षष्ठा ६ भ्यां रूपिणमुत्पाद्य तं च षष्ठगृहरूपिणा

गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य तथाष्टमगृहरूपिणश्च संख्या समूहं कृत्वा भजेत् ।

अथ प्रवासं करिष्यामि कीदृशं वर्त्तत इत्यत आह ।

नवम ९ तृतीया ३ भ्यां रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य प्रथमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ प्रवासे कृते कियता कालेन निवृत्तिः स्यादित्यत आह ।

नवमै ९ कादशाभ्यां ११ रूपिणमुत्पाद्य तं च द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवम ९ गृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ प्रवासी मार्गे निर्भयो वर्त्तते वा नेत्यत आह ।

नवमपंचमाभ्यां रूपिणमुत्पाद्य तं च तृतीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य नवमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ पृथ्वीपतेर्द्रव्यादिकं यथास्थितं वर्त्तते वा नेत्यत आह ।

दशमतृतीयाभ्यां रूपिणमुत्पाद्य तं च द्वितीयगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य द्वितीयगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथैतत्सैन्यं ममाज्ञां मन्यते वा नेत्यत आह ।

दशमतृतीयाभ्यां रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य प्रथमगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ प्रतापतेजस्त्वादिकं कीदृशं वर्त्तत इत्यत आह ।

दशमद्वितीयाभ्यां रूपिणमुत्पाद्य तं च पंचमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य तथैकादशगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ व्यापारं कुर्यान्नेत्यत आह ।

सप्तम ७ द्वितीयाभ्यां २ रूपिणमुत्पाद्य तं च सप्तमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् । तस्य द्वितीयगृहरूपिणश्च संख्यासमूहं कृत्वा भजेत् ।

अथ जनैः परीक्षितं प्रश्नरमलबिंदूनामुपरि सद्यः प्रश्नानाह बिंदुसमूहं भजेत् । अत्र सर्वत्रैव केचिद्वदंति । पश्चादुत्पन्नरूपिणः समविषमं विलोक्य द्वादशभि १२र्नवभिश्च ९ भाजनं कार्यं न तु कुत्तरीजिलईरमलोपरि नात्र संदेहः ।

अथ भयान्मुक्तो भविष्यामि वा नेत्यत आह ।

तदाष्टमगृहं पश्येत्तस्य निर्गमादिरूपिभिः फलं वाच्यम् ।

अथ रमलेषु दिनमासवर्षाणां स्थानज्ञानकथनमाह ।

तथा मातृगृहाणि १, २, ३, ४, दिनानां स्थानानि ज्ञेयानि तथा । ५, ६, ७, ८, दुहित्रीगृहाणि मासानां स्थानानि ज्ञेयानि । ९, १०, ११, १२, तद्वद्दुहित्री गृहाणि वत्सराणां स्थानानि ज्ञेयानि । अथैषां प्रश्नसमये प्रयोजनमाह ।

अथ ममेदं कार्य्यं कदा भविष्यतीति प्रश्न आह ।

मनोभिलषितगृहरूपिणं प्रथमगृहरूपिणा गुणयित्वान्यरूपिणमुत्पादयेत् । तस्य नाम लिसानुलअमर इति कथयंति तं रमलेषु पश्येत् । कुत्र समागतो वर्त्तते यदि स मातृगृहेषु १, २, ३, ४ स्यात्तदा रूपिण उक्तदिनानि प्रश्नाऽवधौ वदेत् । यदि तेषु गृहेषु समा-५,६,७,८गतःस्यात्तदा तद्रूपिणा उक्तमासाः प्रश्नावधौ वक्तव्याः । यदि स दुहितृगृहेषु९,१०,११,१२पतितः स्यात्तदा तद्रूपिण उक्तवर्षाणि प्रश्नावधौ वक्तव्यानि एतानि सर्वाणि रूपिणां दिनमासवर्षाणि चक्रे प्रोक्तानि । नात्र संदेहः ।

अथ लिसानुलअमररूपिणमुपरि प्रश्नसिद्धासिद्धत्वंमाह ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| दिनानि १० | दिनानि | ०००। | | दिनानि २९ | दिनानि | ०।।। | |
| मासाः ६ | मासाः | | शुक्रः | दिनानि २० मासः १ | मासाः | | शनिः |
| वर्षाणि १० | वर्षाणि | ०।०० | | मासाः ६ वर्षाणि २ | वर्षाणि | ०।।० | |
| दिनानि ६ | दिनानि | ।००। | | दिनानि १८ | दिनानि | ।।।० | |
| गासाः १० | मासाः | | बुधः | मासाः ९ | मासाः | | गुरुः |
| वर्ष १ | वर्षाणि | ।।।। | | वर्ष १ | वर्षाणि | ००।। | |
| मुहूर्ताः १२ | दिनानि | ।।०। | | दिनानि ५० | दिनानि | ।।०। | |
| मासौ २ | मासाः | | चंद्रः | दिनानि ५ मासाः १ | मासाः | | भौमः |
| मासाः ९ वर्षाणि १० | वर्षाणि | ०००० | | वर्षाणि ६ | वर्षाणि | ००।० | |
| दिनानि ४ | दिनानि | ।०।० | | दिनानि १० | दिनानि | ।।०० | |
| मासाः ९ | मासाः | | राहुः केतुः | मासाः १० | मासाः | | सूर्यः |
| मासाः ६ वर्ष १ | वर्षाणि | ।००० | | वर्ष १ | वर्षाणि | ०।०। | |

प्रश्नरूपिणं प्रथमगृहरूपिणा गुणयित्वा यो रूपमुत्पन्नो भवेत्तस्य नाम निसानुलअमरेति वदंति। यदि शुभप्रवेशी भवेत्तदा प्रश्नः सुगमेन सिद्धत्वं प्राप्नाति। यद्यशुभप्रवेशी स्यात्तदा प्रश्नःकाठिन्येन सिद्धिं प्राप्नोति। यदि शुभनिर्गमो भवेत्तदा प्रष्टा स्वायत्त्येन मनोऽभिप्रायतिरस्कारं कुर्यात्। यद्यशुभो भवेत्तदा प्रष्टा प्रश्नसिद्धये बहुतरं क्लेशं प्राप्नुयाद्ध्रुवं मनोऽभिप्रायतिरस्कारं कुर्यात्। अथ यदि शुभस्थिरो भवेत्तदा प्रष्टुः स्वायत्त्येन तत्प्रश्नः स्थिरत्वे पतेत्। यद्यशुभो भवेत्तदा प्रष्टा प्रश्नरनायत्त्येन तत्प्रश्नः स्थिरत्वे पतेत्। अथ यदि शुभद्विस्वभावो भवेत्तदा किंचित्प्रश्नः सिद्धत्वं प्राप्नोति। यद्यशुभो भवेत्तदा प्रष्टा प्रश्न-

निमित्तं बहुतरं क्लेशं क्षीयमाणत्वं प्राप्नुयाद्ध्रुवम् । तस्य मनोऽभिलषितस्य तिरस्कारं कुर्यात् । नात्र संदेहः ।

अथ समविषमबिंदुचक्रोपरि मनोऽभिप्रायकथनमाह ।

मूकप्रश्ने । तदुद्देशं समाश्रित्यं रमलं पातयेत् । तस्य प्रथमगृहप्रभृति पंचदशगृहपर्यंतानां केवलबिंदवो गणनीयाः । एवं केवलबिंदुसमूहं कृत्वा विलोकयेत् । विषमांको वर्त्तते वा समांकः । यदि स विषमो भवेत्तदा विषमबिंदुचक्रे तदंकसम्मुखस्थं शेषांकं गृह्णीयात् । तदनंतरं शेषांकान्प्रथमगृहादिषु दत्त्वा यत्र संख्या पूर्णतां यायात्तद्रूपिणं विलोकयेत् । यदि स प्रथमगृहरूपिसदृशः स्यात्तदा तस्मिन्नेव रूपिणो गृहे वा मनोऽभिप्रायो वाच्यः । यदि स प्रथमरूपिसदृशो नो भवेत्तदा तं रूपिणं प्रथमगृहरूपिणा गुणयेत् । ताभ्यामुत्पन्नरूपिणोऽबजदक्रमेण संख्यांकं गृहीत्वा प्रथमादिगृहेषु दापयेत् । यत्रावसानं स्यात्तद्गृहेण रूपिणा वा केवलबिंदुभिर्मनोऽभिप्रायमूकप्रश्नो वाच्यः । अथ यदि केवल—

समबिंदुचक्रं द्रष्टव्यम् । विषमबिंदुचक्रं द्रष्टव्यम् ।

| बिंदवः | शेषांकः | बिंदवः | शेषांकः |
|---|---|---|---|
| ८ | ४ | ३२ | ४ |
| १० | १२ | ३४ | २ |
| १२ | १४ | ३६ | १२ |
| १४ | १ | ३८ | १० |
| १६ | ८ | ४० | ८ |
| १८ | ६ | ४२ | ६ |
| २० | ४ | ४४ | ४ |
| २२ | २ | ४६ | २ |
| २४ | १२ | ४८ | १२ |
| २६ | १ | ५० | १० |
| २८ | ८ | ५२ | ८ |
| ३० | ६ | ५४ | ६ |

| बिंदवः | शेषांकः | बिंदवः | शेषांकः |
|---|---|---|---|
| ७ | ४ | ३१ | ७ |
| ९ | २ | ३३ | ५ |
| ११ | ९ | ३५ | ४ |
| १३ | ७ | ३७ | १ |
| १५ | ९ | ३९ | ८ |
| १७ | ३ | ४१ | ६ |
| १९ | १ | ४३ | ४ |
| २१ | ८ | ४५ | २ |
| २३ | ६ | ४७ | ९ |
| २५ | ४ | ४९ | ७ |
| २७ | २ | ५१ | ५ |
| २९ | ९ | ५३ | ३ |

बिंदुसमूहः समांको भवेत्तदा समबिंदुचक्रे तदंकसम्मुखस्थं शेषांकं गृहीत्वा प्रथमगृहप्रभृतिषु दापयेत् । यत्रावसानं स्यात्तद्गृहरूपिणं विलोकयेत् । यदि स प्रथमरूपिसदृशो भवेत्तदा तस्मिन्नेव रूपिणो गृहे वा मनोऽभिप्रायः स्यात् । यदि सदृशो नो भवेत्तदा तं रूपिणं प्रथमगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पाद्य तस्य विजदहक्रमेण संख्याकं गृहीत्वा प्रथमगृहादिषु दापयेत् । यत्रावसानं स्यात्तद्गृहेण रूपिणो वा मनोऽभिप्रायो वाच्यः । उदाहरणम् । केनापि मूकप्रश्नः कृतस्तदुद्देशं समाश्रित्य रमलं पातितं मया प्रथमादिपंचदशपर्यंतानां केवलबिंदुसंख्या ३६ बिंदुसमूहः समांकोऽस्ति । अतएव समबिंदुचक्रे षट्त्रिंशत्संमुखस्थं शेषांकं द्वादश १२ परिमितं प्रथमगृहादिषु दत्ते द्वादशगृहेऽवसानं यातम् । तत्र मंद ⠅ गोऽस्ति स तु प्रथमगृहरूपि सदृशः । अत एवोक्तं मया चतुष्पदानां वा दुष्टानां प्रश्नो वर्त्तते । एवं सर्वत्रैव ज्ञातव्यम् । नात्र संदेहः । अथ संपूर्णवर्षस्य वृत्तांतज्ञानाय रमलपातनविधिमाह । वर्षरमलं सायने मेषसंक्रमणसमये पातयेत् । तस्य संज्ञां पारसीवाक्येन वरोजेति वदंति । तत्रादौ सायनसंक्रांतिसाधनम् । उक्तं च ।



पारसीवाक्ये । भूमिरिंद्राः १४ सुराः ३३ शैला ७ रदा ३२ प्रत्यब्दकं ध्रुवाः । अथ सौरतहवीलसमय ज्ञानोपायः । तहवीलेति सायने संक्रांतिः ।

शकस्तर्काक्षपंचेन्दु १५, ५६ हीने वर्ष ध्रुवा १, १४, ३३, ७, ३२, हतः ॥ स्वस्वक्षेपैर्युतास्ते स्युर्म्मेषाद्या राशयः क्रमात् ।

अथ वारादयो द्वादश मेषार्कादिषु क्षेपकाः । वाराद्या अजभे यमा २ नगगुणाः ३७ सप्ताग्नयः ३७ खाग्नयः ३० शेषाश्चैव वृषे

शराः ५ शरभुवः १५ खाक्षीणि२०शून्यं तथा ॥ युग्मे स्युः स शनिः क्षपापति यमौ २१ भान्य २७ ऽरामाः ३० क्रमात् ॥ कर्कें वेदमिताश्च ४ वेदकृतवः ४४ सतेषवः ५७ खाग्नयः ३० ॥१॥ सिंहे रात्र्यधिपो १ दिशश्च १० दशनाः ३२ शून्याग्नयश्च ३० क्रमात्स्त्रीभे वेदमिता ४ स्तथा यमकराः २२ खाक्षाश्च ५० पूर्णाग्नयः ॥ ३०जूकेऽभ्रं नवकं९०तथांबरगुणाः ३० शून्यं०च वारोदयः कूर्पेदस्रमिता २ जिना २४नगकृताः४७शून्याग्नयः३०सर्वथा॥२॥चापेवेदमिता ४ स्तथेंदुशिखरा१५बाणेंदवो १५ ऽप्याग्नयो ३० नक्रे पंच ५-नवाग्नयः २९ शशिगुणाः ३१ शून्यं० क्रमात्क्षेपकाः ॥ कुंभेऽभ्रं०च शरा ५० रदाः ३२ खदहना३०ज्ञेयाप्यथो मीनभे चन्द्रः पंचकृता

| मे. | वृ. | मि. | कर्क | सिं. | कन्या | तु. | वृ. | ध. | म. | कुं. | मी. | राशि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | ५ | १ | ४ | १ | ४ | ०० | २ | ४ | ५ | ०० | १ | |
| ३७ | १५ | २१ | ४४ | १० | २२ | ९ | २४ | ५१ | २९ | ५ | ४५ | |
| ३७ | २० | २७ | ५७ | ३२ | ५० | ३० | ४७ | १५ | ३१ | ३२ | ४० | |
| ३० | ०० | ३० | ३० | ३० | ३० | ० | ३० | ३० | ०० | ३० | ०० | |
| फ | अ | ु | ती | अ | श | मि | अ | आ | द | व | र | |

४५श्च शून्यनिगमाः४०शून्यान्विताश्च ध्रुवाः॥३॥अथ पारसीवाक्ये सौरमासनामानि । फरवर्दी १ अर्दीभिस्त २ खुरदाद ३ तीरसंज्ञकः ४ पञ्चमोऽमरदादश्च ५ षष्ठः स्यात् सहेरवरः६॥१॥ तद्वन्मिहिर ७ आवा ८ च आजीरश्च ९ दय १० स्तथा ॥ वहमन्न ११ इस्यंदारः १२ । सायनांशाः क्रमादिमे ॥ २ ॥ एवं सायनमेषसंक्रमणं साधयित्वा तस्मिन्मुहूर्त्ते वर्षे रमलं पातयेत् । अत्र बहवो मेषसंक्रमणसमये रमलं पातयंति । उभयोर्म्मध्ये साक्षात्संक्रमणोपरि बहुसमीचीनं परीक्षितं दृढतरं ज्ञेयम् । तत्साधनमाह मेषाद्यर्कसाधने । वारादौ देशांतरः ०।० । ४७ शकः । मिथिलायाम् ० । ० ॥ ३५ ॥

| १६१६ | १६४० | १६६४ | | | | | | | | | | | | | शका: |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५ | ०० | २ | ४ | ०० | २ | १ | ३ | ५ | ६ | ०० | १ | २ | ४ | ५ | वा |
| १९ | ३१ | ४४ | ४६ | ९ | १५ | ३१ | ४६ | २ | १७ | ३३ | ५८ | ४ | १९ | ३५ | रा |
| ५ | ४१ | १७ | ५३ | २९ | ३२ | ३ | ३५ | ६ | ३७ | ९ | ४ | १२ | ४४ | १५ | दि |

| | | | | | | | | | | | | | | शका: |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | १ | २ | ३ | ४ | ६ | ०० | १ | २ | ४ | ५ | ६ | ०० | २ | वारादि |
| ५० | ६ | २१ | ३७ | ५२ | ८ | २३ | ३९ | ५४ | १० | २६ | ४१ | ५७ | १२ | घटी |
| ४७ | ७८ | ५० | २१ | ५३ | २४ | ५६ | २७ | ५८ | ३० | १ | ३३ | ५ | ३६ | पला. |

अथोदाहरणम् ।

इष्टशकः । १६२४ पुस्तकीयशकः १६१६ शोधिते शेषं ८ शकोधःस्थांको वारादि ५, १९, ५० शकाधस्थांको वारादि ३, ४, १२ अनयोर्योगे यातं ८, २३ सहितो यातोऽब्दपः १, २४, ४ अयं द्वादश स्थाने स्थाप्यः पश्चात्क्रमेण मेषादिद्वादशसंक्रांतिक्षेपैर्युक्तः कार्य्यस्तदा मेषादिद्वादशसंक्रांतयः स्युः अयमेवमध्ये १, २४, ४, मेषसंक्रांतिक्षेपको .. । .. । .. युक्तः यातो मेषसंक्रातिः १ । २४ । ४ । एवं चैत्रशुक्लद्वादश्यां रवौ आसु घटी- २४ । ४ पलासु मेषसंक्रांतिप्रवेश एवं वृषादिष्वपि । एवं मेषसं- क्रमणसमयं ज्ञात्वा तस्मिन्नेव समये ( मुहूर्त्ते ) श्रद्धाभक्तिविनयान्वितो रमलज्ञः । श्रीस्वेष्टदेवं ध्यात्वा मंत्रं च पठेत्सम्यक् संवत्फलविज्ञा- नमनसा निश्चयान्वितेन रमलं पातयेत् । षोडशरूपेण उत्पाद्य तदनंतरं इनकिलावं कुर्यात् । तदाह । यो रमलं मेषसंक्रमणसमये पातयेत् पातितस्य तस्य त्रयोदश १३ दशमै १० कादश ११ चतु- र्दश १४ गृहरूपिणं मातृगृहं विरच्य द्वितीयरमलं कुर्यात् । तथाहि । त्रयोदशगृहरूपिणं प्रथमगृहे दशमस्थं द्वितीयगृहे । चैकादशस्थं तृतीयगृहे चतुर्दशस्थं चतुर्थगृहे संस्थाप्य द्वितीयरमलं कुर्य्यात् ।

| मे. | वृ. | मि. | क. | सिंह | कन्या | तु. | वृश्चि. | ध. | मकर | कुं. | मीन | राशि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ०० | २ | ६ | ३ | ६ | २ | ४. | ६ | १ | २ | ४ | ५ | वा. |
| ०० | ५७ | ३३ | ०० | ३० | ३० | ५५ | ४८ | १७ | ३६ | ३ | ५३ | रा. |
| ०० | १ | १ | ५ | ४ | २९ | ४८ | ३१ | ११ | ४ | १४ | २१ | दि. |

एवं पुनः पुनः कर्त्तव्यम्। यावद्रमलो जडरूपः स्यात् तथाहि जडरूपत्वम्। यदा प्रथम १ त्रयोदश १ ३यो र्म्मध्ये द्वितीय २ दशमयो १ ० र्म्मध्ये तृतीयैकादशयोर्म्मध्ये ३ । ११ चतुर्थचतुर्दशयोर्म्मध्ये ४ । १४ एकएव रूपी स्यात्। एवं कदापि वारद्वयेनापि कदापि वारत्रयेणापि कदापि वारचतुष्टयेन कदापि पंचावृत्त्या कदापि षडावृत्त्या रमलो जडरूपो भवति । यदि चतुर्थादुपरि पंचषडावृत्त्या रमलो जडतां प्राप्नोति तदा तस्मिन्वर्षे विविधचरित्राणि स्युः । चतुर्थादर्वाग्यथा स्थितं फलं वाच्यम् । अत्र केचिद्वदंति जडरूपं रमलस्य तुलागृहे यद्यपि विषमरूपी पतितः स्यात्तथापि फले किंचिदपि क्षयत्वं नो विद्धि ।

अथ संवत्सरफलानयनम् ।

संवत्सरफलजिग्राहयिषया जडरूपरमलस्य प्रथमगृहरूपिणं त्रयोदशस्थरूपिणा गुणयित्वा रूपिणमुत्पादयेत् । तथा चतुर्थगृहरूपिणं चतुर्दशगृहस्थेन गुणयित्वाऽन्यरूपिणमुत्पादयेत् । एवं सप्त- ७ पंचदशाभ्यां रूप्युत्पादनीयः । तद्वद्दशमषोडशा १६ भ्यां रूपिणमुत्पादयेत् । एवं चतुर रूपिण उत्पाद्य यथाक्रमेण चतुर्णां द्वयं द्वयोरेकं रूपिणं कुर्यात् । तद्रूपिणं वर्षलग्नं विद्धि । तेन संपूर्णवर्षस्य सर्ववृत्तांतं ब्रूयात् । यथाग्रे कथयिष्यामि । अथ यदि प्रतिमासस्य फलं ज्ञातुमिच्छेत्तदा चैषां चतूरूपिणां जडरमलादुत्पन्नानां मातृगृहं विरच्य रमलं कुर्यात् । प्रागुक्ताश्चत्वारो रूपिण उत्पाद्याः चतुर्णां द्वयं द्वयोरेकं कृत्वा तेन रूपिणा मेषार्कमासस्य

फलं वाच्यम् । तथा मासरमलादुत्पन्नानां चतुर्णां रूपिणां मातृगृहं विरच्य रमलं कृत्वा प्रागुक्तवच्चतुर रूपिण उत्पादयेत् । चतुर्णां द्वयं द्वयोरेकं विधाय तेन वृषादित्यमासस्य फलं वाच्यम् । एवं द्वादशमासानां द्वादश रमलान्विधाय तेभ्यश्चत्वारश्चत्वारो रूपिणः प्रागुक्तप्रकारेणोत्पाद्याः तेषां चतुर्णां द्वयं द्वयोरेकं रूपिणं कृत्वा तेन रूपिणा प्रतिमासानां फलं ब्रूयात् ।

अथ वर्षमासफलज्ञानाय रूपिणां विचारमाह ।

यदि तेभ्यश्चतुर्भ्यो वाग्मी ⸪ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा चतुष्पदा दासीदासाश्च नष्टा अस्तव्यस्तरूपा भवेयुः । कृषिर्बहुतरा भवेत् । अथान्नादिभीतीतयः स्वल्पतरा स्युः जनानां मनश्शुभकर्मणि तत्परं स्यात् तथा यजनजपदानव्रतादिकं बहुतरं भवेत् । ध्रुवं तिवरिस्तानदेशी । १ । गीलान । २ । इस्फहानि ३ नैसायुर ४ बलख ५ रूम६ मक्का ७ । सिंध ८ देशषु तद्वच्छामदेशवीतदेशभूमिषु यत्र कुत्रापि एतत्सर्वं स्यात् । अथ यदि तेभ्यश्चतुर्भ्यस्तीक्ष्णांशु ⸪ रुत्पन्नः स्यात्तर्हि तस्मिन्वर्षे मासे वाऽमृतफलादिपदार्था बहुतराः स्युः । व्यापारे बहुशो लाभः । ग्रहणं दानं सुगममार्गेण स्यात् । राजानः प्रजाश्च सुष्ठमनसः स्युः । संसारस्थितिरनुपद्रवेण स्वास्थ्यनिर्भरत्वाभ्यां वा स्यात् । राजानो राज्यंनीतिमार्गेण कुर्युः । पृथ्वीपतिः सिंहासनोपरि दृढतरो भवेत् । ध्रुवं तुरुकस्तानदेशेषु । तथा नैशायुरसमरकंददेशेषु सर्वमेतत्स्यात् । अथ यदि तेभ्यः चतुर्भ्यः पातरूपी ⸪ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा सर्वजना उद्विग्नमनसोऽस्तव्यस्तरूपाश्च भवेयः । वृष्टिर्बहुतरा स्यात् । ग्रीष्मतौ चोष्णत्वं बहुतरं भवेत् जनानां मध्ये कलहयुद्धादिकं स्यात् । नीचजातयः प्रबलाः स्युः पृथ्वीपतिरनीतिं प्रजानामपरि कुर्यात्कुकर्म्माणि बहुतराणि स्युर्यथा चौर्य्यं दंडहननं हत्यादिकम् । अनायासमृत्युः स्यात् । जलप्रवाहेण वस्तूनां क्षयो बहुतरो भवेत् ।

स्थानानि वह्निदग्धानि वह्नेरुपद्रवो बहुतरः स्यात् । दंशककीटकानां सर्पादीनां वर्द्धमानता स्यात् । ध्रुवमेतत्सर्वं तुरुकस्तानभूमिषु तथा समरकंददेशेषु ३ नैसाफर ४ केच ५ मकरान ६ देशेषु स्यात् । अथ यदि तेभ्यश्चतुर्भ्यः सौम्य ☰ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वाऽमृतफलादिपदार्थानां वर्द्धमानता समर्घता । अन्नादिष्वीतिभीतयःस्वल्पतराः स्युः । राज्ञां कार्य्याणि शुभतराणि भवेयः । जनेषु रोगादयः श्लेष्मतः प्रजायंते परं तु सुगमेन रोगाः क्षायमाणाः स्युः । ध्रुवमेतत्सर्वं फारशदेशभूमिषु । तथा हिराति २ ख्वारजम ३ किरमात ४ दैलमान ५ देशभूमिषु । तद्वद्गिलान् । ६ काबुल ७ निहत ८ वीरदेशभूमिषु स्यात् । अथ यदि तेभ्यश्चतुर्भ्यः दैत्यार्चित ⁝ उत्पन्नः स्यात् । तदा तस्मिन्वर्षे मासे वा संसारेषु सर्वजनाः प्रसन्नमनसः स्युः गृहेगृहे विवाहमंगलं तथा सर्वेषां शुभा जीववृत्तिः स्यात् । अन्नादिकं कदापि समर्घतां कदापि महर्घतां यायान्मनोनुकूला वृष्टिः स्यात्समयं प्राप्य शुभवायुर्वायात् । सगर्भाः स्त्रियः पुत्रान्प्रसूयेयुः केचिद्वदंति बहुतराःकन्यकाः स्युर्जनानां मध्ये जारकर्माणि बहुतराणि भवेयुः । राजानो विकासितमनसः स्युस्तथा ते शुभवृत्तांतं शृणुयू रत्नपरीक्षकैस्तथा संसारं विषमनिरतजनैः सार्द्धं कर्म समीचीनं स्यात् । ध्रुवमेतत्सर्वं रूमदेशभूमिषु । तथा कुबिल १ प्रभृति किरमानपर्य्यंतेषु कुत्रापि कुत्रापि बुखारादेशभूमिषु तद्वद्यमन ४ साम ५ मिसर ६ बलख ७ हिरात ८ देशभूमिषु स्यादथ यद्येतेभ्यश्चतुर्भ्यो मंद ⁝ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा सर्ववस्तूनां संकीर्णता महर्घता च स्यात् । रोगाः स्पर्द्धरूपा विविधप्रकारका भवेयुः । पृथ्वीपतयो राजानश्च तथा मांडलिका शिष्टजना उद्विग्नचित्ताः परिखिन्ना रोगग्रस्ताः स्युः दासदासी चतुष्पदानां कारणेन परंतु हिंदुस्थानानां राजानो बहुबलयुता भवेयुर्वृष्टिः स्वल्पा स्यात् । बहुवातैरंधकारोत्पात्तिस्तथा संसारेषु बहुतरा

रोगा भवेयुः । ध्रुवमेतत्सर्वं हिंदुदेशभूमिषु तथा जंगवार २ बर्बर ३ हबूस ४ अहवाजदेशभूमिषु स्यात् । अथ यदि तेभ्य-श्चतुर्भ्यः सौरी रूप्युत्पन्नः ⁝ स्यात्तदा तस्मिन्वर्षे वा मासे स्वल्पवृष्टिः स्याद्रोगाः कठोरा भवेयुः । अन्नादीनां महर्घता स्यात् । जनानामु-परि कार्याणि कठोररूपाणि लक्षितानि भवेयुः । स्पर्शजा उपद्रवा बहुतरोत्पन्नाः स्युः मेघच्छिन्नानि बहुतराणि जायंते परंतु निष्फ-लानि व्यर्थरूपाणि । दुष्टानां स्पर्द्धजनानां कारणेन पृथ्वीपतेरा-श्रितजनाश्च विषण्णमनसः स्युः परन्तु बहुसदेशवाशिनो जनास्तथा जंगवारदेशवासिनो हिंदुदेशवासिनश्च तथैषां भूपतयः प्रसन्नम-नसो बहुबलयुता भवेयुः । अथ याद तेभ्यश्चतुर्भ्यः लोहित ⁝ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा बहु नेष्टं फलं वाच्यम् । वृष्टिः स्वल्पा वाताधिक्यं भवेत् । भूपतयोऽन्यायमार्गे दण्डमुपद्रवत्वं स्वातंत्र्यं च बहुतरं कुर्य्युः । चौराः प्रबलाः स्युः संसारेषु निर्भयत्वं स्वास्थ्यं धैर्यं च स्वल्पं भवेत् । चौरैः क्षीयमाणत्वं क्षयत्वं च जनानां स्यात् । ध्रुवमेतत्सर्वं तुरुकिस्तान्देशभूमिषु तथा काबुल-देशस्य राजानो भयत्रस्ता भवेयुः । शत्रूणां कारणेन । तद्वत्कु-स्तनतीयै ३ पिता ४ रूम ५ फारस ६ दशमावंद ७ वर्गा ८ गं-जै ९ देशभूमिषु स्यात् । अथ यदि तेभ्यश्चतुर्भ्यो ⁝ विधुरुत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा प्रवासिनां प्रेषणं च कार्याणि शुभत-राणि भवेयुः । बहुतरा वृष्टिः स्यात् । अमृतफलादिपदार्था बहुतराःस्युः अन्नादीनां समर्घता भवेत् । भूपतयः स्वस्थाने कीलकरूपा दृढतरा भवेयुः । राजानो न्यायं नीतिमार्गे कुर्युः । विद्यापठनार्थाय जनाश्चाभि-लाषं कुर्य्युः शुभविद्यां पठेयुः यथा गणितज्योतिश्शास्त्रेन्द्रजाल-विद्यादिविचित्रकौतुकान् । ध्रुवं वृष्टिश्चंद्रदिने स्यात् । नदीजीविकानां कार्याणि शुभतराणि स्युः । पारसदेशस्य तथाखुराशानदेशस्य । राजानः स्वबाहुबलेनोदयत्वं प्राप्नुयुः । सर्वे जनाः प्रसन्नमनसः प्रसन्नावस्थका

भवेयुः । ध्रुवमेतत्सर्वं हि शतदेशभूमिषु १ तथा तालकान् २ बाबूल ३ नील४मिसर५देशभूमिषु स्यात्।अथ यदि तेभ्यश्चतुर्भ्यो य ⁞ उत्पन्नः स्यात्तदा तस्मिन्मासे वा वृष्टिः स्वल्पतरा स्यात् । व्यापारकर्त्तारो दंडं दद्युः क्षीयमाणत्वं प्राप्नुयुः यद्यपि चौरा व्यापारकर्त्तारं नो हन्युः । अन्नादिकं समं नातिमहर्घं नातिसमर्घं भवेत् । नद्यादिषु कठोरवायुरायाति येन नावो मग्नाः स्युः । पूर्वदिशि राजानो वशान्विताः प्रजा रोगिण्यश्च भवेयुः।उष्णत्वकारणेन ध्रुवमेतत्सर्वं नैशायुरर्वदेशभूमिषु तथा समरकंददेशभूमिषु कुत्रापि कुत्रापि बुखारादेशभूमिषु।अथ यदि तेभ्यश्चतुर्भ्यो यः ⁞ सूरी रूपी उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा जनाः प्रसन्नमनसः स्युः । ते च निर्भयाः सुखान्विताः सुस्थितचित्ता भवेयुः । अन्नादयः समर्घतां प्राप्नुयुः राजानो नीतिं कुर्य्युस्तेषां कारणेन प्रजा विश्रामं सुखं द्रव्यादिफलं प्राप्नुयुः जनाना कार्याणि दृढतराणि भवेयुः । सफला वृष्टिः स्यात् अमृतफलादीनि दोषरहितानि स्युः । जीवानां कर्माणि शुभतराणि भवेयुः । जना हर्षिता भवेयुर्द्रव्यादिलाभैस्ते च बहुदानं कुर्य्युः । ध्रुवमेतत्सर्वं सिंधुदेशभूमिषु १ तथा गिलानल २ नैशापुरा ३ बलख४ रूम ५ इस्कंदरि ६ साम ७ चीन ८ देशभूमिषु स्यात्॥ अथ यदि तेभ्यश्चतुर्भ्यो वक्ररूपी ⁝ उत्पन्नः स्यात्तदा तस्मिन्वर्षे मासे वा स्वल्पवृष्टिः स्यात् । भूमितले जलं स्वल्पं च । नानाप्रकाराः प्रवासाः स्युः । नद्यादिषु नावो मग्ना भवेयुः । स्पर्द्धिरूपवायोः कारणेन शीताधिक्यं तथोष्णत्वमपि चाधिक्यं स्यात् । निषिद्धतरो वायुर्वायात् । कठोररोगा जायंते । उष्णत्वशुष्काभ्यां रोगाधिक्यं स्यात् । प्रजानामुपरि भूपतय उपद्रवमन्यायं च कुर्य्युः । देशेषु मिथ्यापवादा उपद्रवा बहुतरा अस्तव्यस्तरूपाश्च भवेयुः । ध्रुव-

मेतत्सर्वं हिंदुदेशभूमिषु तथा वनेषु च तद्वत् । जंगवार । ३ हबूस ४ देशभूमिषु स्यात् विदीर्णभोक्तारः प्रबलाःस्युर्यथा व्याघ्रवृकसिंहचित्रकादयः । अथ यदि तेभ्यश्चतुर्भ्यं ⁝ श्चार उत्पन्नः स्यात्तदा तस्मिन् वर्षे मासे वा स्वल्पवृष्टिः स्यात् परंतु भयान्विता विद्युद्गर्जनादिभिः । जने स्वास्थ्यं स्वल्पतरं भवेत् । ग्रामनगरीणां सीम्नि चौरा धूर्त्ताः पापिनो जीवहंतारश्च बहुतरा भ्रमेयुः । ते प्रबलास्युः संसारेषु नैराश्यानि बहुतराणि भवेयुः भूपतीनामवस्था द्विधांधत्वरूपा स्याद्दुष्टानां कारणेन चतुर्देश सकाशाच्छत्रव उत्थिता भवेयुः । राजानो नीतिं नो कुर्य्युः । अन्नादयो महर्घतां प्राप्नुयुः । ध्रुवमेतत्सर्वं तुरकिस्तानदेशभूमिषु १ तथा जाबूल २ बाबुल ३ कुस्तनतीने ४ षिता ५ रूम ६ देशभूमिषु तद्वत् । कुत्रापि कुत्रापि पारसदेशेषु । तथा शहरगजादेशभूमिषु स्यात् । अथ यदि तेभ्यश्चतुर्भ्यः कविरूपी ⁝ उत्पन्नः स्यात्तदा तस्मिन् वर्षे वा मासे प्रसन्नता शुभजीविका विवाहादि मंगलानि जगत्सु बहुतराणि स्युः । समयं प्राप्य शुभा वृष्टिः स्याद्यतो जलार्णवा मही भवेत् । राजानो नीतिं कुर्युः । कार्य्याणि दृढतराणि समीचीनानि नाना भूत्वा सिद्ध्येयुः । अमृतफलादिपदार्था बहुतराः स्युः विवाहादिमंगलकारकाणामवस्था समीचीना स्यात् । शुभो यथारुचि वायुर्वायात् । जगति सुस्वास्थ्यं भवेत् । ध्रुवमेतत्सर्वं रूमदेशभूमिषु १ तथा काबुल २ मकरान ३ शाम ४ यम ५ मिसर ६ बलख ७ देशभूमिषु तद्वत् कुत्रापि कुत्रापि बुखारादेशे स्यात् । अथ यदि तेभ्यश्चतुर्भ्यो बोधन ⁝ उत्पन्नः स्यात्तदा तस्मिन् वर्षे वा मासे जनाः प्रसन्नमनसः स्युः । तथा शुभकर्माणि भवेयुः लेखनीकर्मकुशलानां प्राचुर्य्यं स्यात् । तथाऽमात्यगणितकारकाणां प्राचुर्य्यं भवेत् । भूपतीनामवस्था दृढतरा यथास्थिति निष्ठेत्परंतु स्वाधीनजनानां दुष्टानां कारणेन वित्ता-

न्विता भवेयुः । सुगंधपादपास्तथा रत्नपाषाणानि प्रचुराणि स्युस्तस्मिन् वर्षे मासे वा स्कंधवारे वृष्टिर्वायुर्ध्रुवं भवेत् । अन्नादयः समर्घतां प्राप्नुयुः । जनानां कार्य्याणि सदैवैकरूपाणि । तिष्ठेयुर्ध्रुवमेतत्सर्वं फलं पारसी देशभूमिषु १ तथाह रात २ फरात ३ ष्वानजम४ गुरगान ५ दैलमानि ६ गीलान ७ काबुक ८ नियत ९ चीन १० देशभूमिषु स्यात् । अथ यदि तेभ्यश्चतुर्भ्यः शीतांशु⋮रुत्पन्नः स्यात्तदा तस्मिन् वर्षे मासे वा वृष्टिर्बहुतरा स्यात्परंतु पूर्वदिशि देशेषु पुनः कतिपयदिनोपरि तज्जलानि स्वल्पतराणि शुष्काणि स्युः वापीकूपतडागप्रवाहादीनां जलानि स्वल्पतराणि भवेयुः । बहुशो वायुर्वायात् । चतुर्दिशः सकाशाद्दुष्टाः प्रजायंते प्रेषकपुरस्सरदूतपिशुनानां कार्य्याणि शुभतराणि भवेयुः । अनृतानि मिथ्यापवादाश्च जगत्सु बहुतराः स्युः । ध्रुवमेतत्सर्वं पुरा १ देशभूमिषु तथा तालकान् २ खर्जु ३ जाबुल ४ बाबुल ५ देशभूमिषु स्यान्नात्र संदेहः ।

अथात्र संवत्फलज्ञानाय भेदरहस्यानाह ।

जडरूपरमलेषु सर्वरूपिणः पश्येत् । यदि जलमुखा बहुशो बलिष्ठाः स्युस्तदा द्रष्टव्यं कस्मिन्दिग्गृहे समागता वर्त्तन्ते । यदि प्राचीगृहेषु बलिष्ठा जलमुखाः पतिताः स्युस्तदा पूर्वस्यां दिशि बहुतरा वृष्टिः स्यात् । यदि शुभो भवेत्तदा वृष्टिः सफला सुखदा ज्ञातव्या । यद्यशुभः स्यात्तदा वृष्टिर्निष्फला क्षयकरी बहुदुःखदा ज्ञातव्या । यदि केपि शुभाः केप्यशुभाः स्युस्तदा बलाधिक्योपरि फलं ब्रूयात् । अथ यदि बलिष्ठा जलमुखाः प्रतीचीनगृहेषु समागतास्तदा तस्मिन्वर्षे पश्चिमदिशि बहुतरा वृष्टिः स्यात् । शुभाशुभयोः प्रागुक्तवत्फलं वाच्यम् । अथ यदि बलिष्ठा जलरूपिण उदीचीगृहे समागताः स्युस्तदा तस्मिन्वर्षे सौम्यदिशायां बहुतरा

वृष्टिः स्यात्। शुभाशुभयोः प्रागुक्तवत्फलं ब्रूयात्। अथ यदि बलिष्ठा जलमुखा दक्षिणगृहे समागताः स्युस्तदा तस्मिन्वर्षे दक्षिणस्यां दिशि बहुतरा वृष्टिः स्यात्। शुभाशुभयोः प्रागुक्तवत्फलम्। अथ यदि बलिष्ठा वह्निमुखाः प्राचीगृहेषु समागताः स्युस्तदा तस्मिन्वर्षे पूर्वस्यां दिशि स्वल्पतरा वृष्टिः स्यात्। घर्म्मौष्णत्वं बहुतरं भवेत्। यदि शुभो भवेत्तदा स्वल्पापि वृष्टिः सुखदा बहुशस्यजनिका ज्ञातव्या। यद्यशुभो भवेत्तदा सा वृष्टिः क्लेशदा धान्यविनाशकरी ज्ञेया एवं दिग्भूपतीनामवस्था वक्तव्या तथा हि वह्निमुखरूपिषु यदि शुभः प्राचीगृहे समागतः स्यात्तदा तद्दिग्राजानो बलान्विता बहुसुखकराः प्रजाश्च विश्रामयुता भवेयुस्तथा स्वल्पवृष्ट्यापि सस्यानि जायंते। यद्यशुभः स्यात्तदा पूर्वदिग्राजानो विषण्णमनसो बलहीनाश्च भवेयुः। अनायासेन शीघ्रं जनादीनां मृत्युः स्यात्। तथा सर्वजनेषु कलहोपद्रवोत्पातयुद्धवाग्वादादीनि बहुतराणि स्युर्हिमानी कठिनतमा स्याद्यया वस्तूनां क्षयो भवेत्। तस्यां दिशि जना उद्विग्नचित्ताः परिखिन्ना भवेयुः। तथा चौरा व्यापारकर्तॄन्हन्युः क्लेशं दद्युश्चौरा हंतारो मिथ्यापवादादीनि प्रचिरतराणि बहुतराणि च भवेयुः। तद्वद्विदीर्णभोक्तारश्चापि प्रबलाः प्रचंडाश्च स्युः। यथा व्याघ्रवृकचित्रकादय एवं विषधराश्चापि बहुतराः प्रबला जायंते यथा सर्पवृश्चिकादयस्तथा लोकोत्पातसंकीर्णत्वादय उत्पन्नाः स्युर्जलप्रवाहस्थानानि शुष्काणि चाग्नेरुपद्रवाः स्वल्पा वृष्टिः। कदापि समर्घं कदापि महर्घं स्यात्। इति शुभाशुभयोः फलं सर्वरूपिणां वह्निमुखानां च चतुर्दिक्षु ब्रूयात्। नात्र संदेहः। अथ यदि वायुमुखाः प्राच्यादिगृहेषु समागताः स्युस्तदा द्रष्टव्यं शुभो वर्तते वाप्यशुभः। यदि शुभः स्यात्तदा तस्यां दिशि शुभो वायुः प्रचलेत्। येन सर्ववस्तूनि सफ-

लतां प्राप्नुवंति । बृहच्चतुष्पदाः प्रबलाः स्युः । जना विश्रामं कुर्युः लेखनीकर्मकुशलानां गंधर्वाणां च कार्याणि शुभतराणि भवेयुः । अथ यद्यशुभः स्यात्तदा वायुरनिष्टतरः प्रचलेद्येन सर्ववस्तूनां क्षयो भवेत् । बृहच्चतुष्पदा बलहीना भवेयुः । जनाः क्लेशं परिश्रमं च कुर्य्युः । लेखनीकर्मकुशलानां गंधर्वाणां कार्याणि निषिद्धतराणि भवेयुः । विविधरोगाणामुत्पत्तिः स्यात् । चतुष्पदाः क्षयं प्राप्नुयुः । अशुभवृत्तांतश्रवणं तत्रेत्याद्यनिष्टफलं वाच्यम् । एवं चतुर्दिक्षु । अथ यदि भूमिमुखाः प्राच्यादिगृहेषु पतिताः स्युस्तदा द्रष्टव्यं शुभो वर्त्तते वाप्यशुभो यदि शुभो भवेत्तदा तस्यां दिशि जना निर्भयाः संतुष्टाः प्रसन्नमनसः स्युः। तथाऽमृतफलादीनि पदार्थानि बहुतराणि भवेयुः कृष्या भीत्यादिभयं नो भवेत् । अंकुरादीनि सम्यक्प्रकारेण जायंते । सत्पात्राणां श्रेष्ठानां ग्रामीणानां च कार्याणि शुभतराणि स्युः ध्रुवमेतत्सर्वं दक्षिणस्यां दिशि स्यात् । अथ यद्यशुभः स्यात्तदा तस्यां दिशि जना भयान्विताः क्षुधार्त्ता म्लानमनसः स्युः । अमृत-फलादीनि पदार्थानि स्वल्पानि भवेयुः कृषिष्वीत्यादिभयं भवेत् । अंकुराः शुभप्रकारेण नोद्यंति । सत्पात्राणां श्रेष्ठानां ग्रामीणानां च कार्य्याणि शुभानि नो भवेयुः । तस्यां दिशि पंकवृष्टिर्बहुतरा जल-वृष्टिः स्वल्पा स्यात् । भूमितलस्य जलानि शुष्काणि स्युः । संकी-र्णत्वोत्पातदुर्भिक्षांतराया बहुतरं भवेयुः । तथा विविधरोगा बहु-तरा जायंते । स्त्रीणां तथाऽमृतफलानां निषिद्धता स्यात् । एवं चतु-र्दिक्षु फलं वाच्यम् ।

अथ प्राच्यादीनां गृहाणि शकलान्प्राह ।

प्रथमादयः पूर्वादिषु वामावर्त्तेन ज्ञेयाः । तथैतानि १, ५, ९, १२

पूर्वदिशो ज्ञेयानि । तथैतानि २, ६, १०, १४ गृहाणि । सौम्यदिशः पुनरेतानि ३,७,११,१५ गृहाणि पश्चिमदिशि ज्ञेयानि। तद्वदेतानि ४, ८,१२,१६ गृहाणि दक्षिणदिशि ज्ञेयानि। अथ वह्निमुखाः [रमल-आकृतयः] पूर्वदिशो ज्ञेयाः । जलमुखाः [रमल-आकृतयः] । उत्तरदिशो ज्ञेयाः । वायुमुखाः [रमल-आकृतयः] पश्चिमदिशो ज्ञेयाः । तथा भूमिमुखा [रमल-आकृतयः] दक्षिणदिशो ज्ञेयाः । नात्र संदेहः ।

अथ वर्षेषु चतुःसमयानां स्फुटतरेण फलमाह ।

यदा चतुरिनकिलावेन रमलो जडतां प्राप्नुयात्तदा तस्य जड रूपरमलस्य प्रथमादिचतुर्षु १, २, ३, ४ गृहेषु मेषादित्रयाणां मासानां विचारः कार्यः । तत्र प्रतिगृहेषु दिनानां मासानां तथाहि। एकविंशति २१ दिनानि प्रथमगृहे द्वाविंश २२ दिनानि द्वितीयगृहे त्रयोविंश २३ दिनानि तृतीयगृहे चतुर्विंश २४ दिनानि चतुर्थगृहे ज्ञेयानि एवं दिनविभागो मासानां सर्वत्रैव ज्ञातव्यः । अथ तस्य रमलस्य पंचमादिचतुर्षु गृहेषु ५, ६, ७, ८ कर्कादित्रयाणां मासानां विचारः कार्यो दिनविभागस्तु तद्वदेव अथ नवमादिचतुर्षु। ९ । १० । ११। १२ तुलादित्रयाणां मासानां विचारः कार्यो दिनविभागस्तु प्रागुक्तवत् । तथा त्रयोदशादिचतुर्षु गृहेषु १३ । १४ । १५ १६ मकरादित्रयाणां मासानां विचारः कार्यो दिन विभागस्तु प्रागुक्तवत् । एवं मासविभागः प्रतिगृहेषु दिनद्वयं प्रतिपक्षादिषु तथा दिनप्रश्ने दिनविभागः प्रतिगृहेषु घटिकाचतुष्टयो ज्ञेयः अत्र वह्निवायुजलभूमुखैः शुभाशुभरूपिनिर्गमप्रवेशिस्थिरद्विस्वभावैश्च प्रतिदिनानां फलं ब्रूयात् । नात्र संदेहः ।

अथ तस्मिन्नवर्षे मासे दिने वा कानि कर्माणि शुभानीत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयित्वा तस्य केंद्रगृहस्य रूपिगृहे ११ १२। पश्येत्तेषां मध्ये को रूपी प्रथमगृहरूपिसदृशोऽस्ति। यदि नवमगृहरूपी प्रथमरूपिसदृशो भवेत्तदा तस्मिन्वर्षे मासे दिने वा प्रवासकरणं समीचीनम्। यदि प्रथमगृहरूपी दशमगृहरूपिसदृशो भवेत्तदा प्रतापतेजस्त्वादिकरणांशस्तथा स्वकर्मकार्याणि समीचीनानि भवेयुः । यदि चैकादशगृहरूपिसदृशो भवेत्तदा पृथ्वीपतिभिः सार्द्धं गोष्ठीकरणं शुभं तथा मित्राणां कर्म्माणि समीचीनानि स्युः। यदि प्रथमरूपिसदृशो द्वादशगृहरूपी भवेत्तदा चतुष्पददासीदासादीनां कर्माणि समीचीनानि स्युः परंतु यद्येतेषु शुभरूपी स्याद्यद्यशुभो भवेत्तदा सर्वं फलं निषिद्धतरं वाच्यम् । यदि प्रश्नं वर्षस्य कुर्यात्तदा। सायनमेषसंक्रमणसमये रमलं पातयेत्। यदि मासस्य प्रश्नं कुर्य्यात्तदा मासारंभदिवसे रमलं पातयेत्। यदि प्रश्नं दिनस्य कुर्यात्तदा तद्दिनस्य प्रत्यूषसमये रमलं पातयेत्। यथोक्तफलं ब्रूयात् । एवं यदि गृहरूपिणः प्रथमगृहरूपिसदृशास्तदा तद्गृहकर्माणि शुभानि स्युः। परंतु शुभे चैतत्फलमशुभश्चेत्तदाऽनिष्टफलं वाच्यन्नात्र संदेहः।

अथास्मिन्वर्षे समर्घता वा महर्घता भविष्यतीत्यत आह ।

तदुद्देशं समाश्रित्य रमलं पातयेत्। तदा द्रष्टव्यं पंचदशगृहे षोडशगृहे च कः समागतो वर्त्तते। यदि द्वयोर्म्मध्ये १५। १६ गुप्तरूपी पतितः स्यात्तदा संपूर्णवर्षे महर्घता स्यात्। यदि पंचदशगृहे प्रत्यक्षरूपी तथा षोडशगृहे गुप्तरूपी समागतः स्यात्तदा वर्षप्रारंभे महर्घता वर्षांते च समर्घता भवेत्। यदि पंचदशगृहे

गुप्तरूपी तथा षोडशगृहे प्रत्यक्षरूपी स्यात्तदा वर्षप्रारंभ महर्घता समाप्ते च समर्घता स्यात् यदि द्वयोर्म्मध्ये । १५ । १६ प्रत्यक्षरूपी भवेत्तदा संपूर्ण वर्षे समर्घता स्यात् । तदाह गुप्तप्रत्यक्षरूपिणो श्चान्यत्र कुत्राप्यन्वादेशरूपं कुर्याद्यो रूपी तस्य नाम प्रत्यक्षरूपीति वदंति । यो रूपी कुत्राप्यन्वादेशरूपं नो कुर्य्यात्तस्य नामगुप्तरूपीति वदंति नात्र संदेहः ।

अथ संपूर्णवर्षस्य फलज्ञानाय प्रकारांतरमाह ।

संपूर्णवर्षफलज्ञानाय श्रद्धाभक्तिविनयान्वितः । सायनमेषसंक्रमणसमये रमलं पातयेत् । तस्य तुला १५ गृहरूपिणं विलोक्य भिन्नं स्थापयेत् । पश्चात्प्रथमगृहरूपिणं त्रयोदशगृहरूपिणा गुणयित्वाऽन्यरूपिणमुत्पादयेत् तुलागृह १५ रूपिणं प्रथमगृहे चैनं द्वितीयगृहे तथा चतुर्थगृहरूपिणं तृतीयगृहे चतुर्दशगृहरूपिणं चतुर्थे संस्थाप्यैवं मातृगृहं विरच्य द्वितीयरमलं कुर्यात् । पश्चात्पूर्वरमलतुला १५ गृहरूपिणा द्वितीयरमलस्य तुलागृह १५ रूपिणं गुणयेदेवं द्वाभ्यां तुलागृहरूपिभ्यां यो रूप्युत्पन्नो भवेत्तेन रूपिणा संपूर्णवर्षस्य फलं ब्रूयात् । तथाहि । यदि ताभ्यां तीक्ष्णांशु ⁞ रुत्पन्नः स्यात्तदा तस्मिन्वर्षेऽमृतफलादयोऽनेकपदार्था भवेयुः । जनानां कार्य्याणि शुभतराणि स्युः । सर्वहट्टाः प्राचुर्ययुताः स्युः । गुर्वाचार्यादयो बृहज्जनानां संतुष्टा भवेयुः मार्गा निर्भयाः स्युः प्रवासाधिक्यं स्यादमृतफलानि बहुतराणि भवेयुः । परंतु मूल्यं समानं मांसानि महर्घाणि भवेयुः । अथ यदि ताभ्यां पात ⁞ उत्पन्नः स्यात्तदा तस्मिन्वर्षे विविधोपद्रवाः क्लेशा रोगाश्च भवेयुरमृतफलादिपदार्थाः स्वल्पा भवेयुः । जनाः क्षीयमाणत्वं प्राप्नुयुः हट्टायां स्पर्द्धा भवेत् । गुर्वा-

चार्यादयो बृहज्जनाः स्वस्मिन्दुष्टा भवेयुः । मार्गा निर्भयाः स्युः प्रवासो बहुतरः स्यात्परंतु तत्र गते फलप्राप्तिर्वृष्टिः समा भूमितले जलं चापि समानं नाति स्वल्पं नाति बहुतरं भवेत् । मांसानि महर्घाणि स्युरथ ताभ्यां यदि सौम्य ≡ उत्पन्नः स्यात्तदा तस्मिन् वर्षे विविधोपद्रवाः क्लेशा रोगान्विता जनाश्च भवेयुः । जनानां कार्याणि बहुतराणि स्युः । हट्टासु प्राचुर्यता स्यात् । गुर्वाचार्यादयो बृहज्जनाः क्लेशान्विता भवेयुः । मार्गा भयसहिताः स्युरमृतफलानि बहुतराणि भवेयुः । जलं समानं स्यात् । मांसानि बहुतराणि स्युः प्रवासः स्वल्पः स्यात् । अथ यदि ताभ्यां मंद ÷ ग उत्पन्नः स्यात्तदा तस्मिन्वर्षे सर्वं फलं समानं वाच्यम् । जना उद्विग्नचित्ताः परिखिन्नरूपा भवेयुः । रोगा बहुतरा जायंते जनानां कार्याणि समानरूपाणि स्युः गुर्वाचार्यादयो बृहज्जना निषिद्धावस्थां प्राप्नुयुः भक्ष्ययोग्यानि वस्तूनि महर्घाणि भवेयुः स्वल्पा वृष्टिः स्यात् । भूमितलेऽपि जलं स्वल्पं भवेत् । मांसानि बहुतराणि जायंते । प्रवासोऽपि स्वल्पः स्यात् । अथ यदि ताभ्यामय ≡ मुत्पन्नः स्यात्तदा तस्मिन्वर्षे विविधानि दानानि भवेयुः । अन्नादीनां समर्घता स्यादमृतफलादिपदार्था बहुतराः स्युः । गुर्वाचार्यादिबृहज्जनानां कार्याणि शुभतराणि भवेयुः । हट्टाप्राचुर्यता स्यात । मार्गा निर्भयाः स्युः खानपानादीनि वस्तूनि बहुतराणि जायंते । अमृतफलानि शुभतराणि भवेयुः । जलं समानं भूमितले वृष्टिश्चापि समानरूपा स्यात् । मांसानि बहुतराणि प्रवासोपि बहुतरः स्यात् । अथ यदि ताभ्यामयं रूपी चोत्पन्नः स्यात्तदा तस्मिन्वर्षे सर्वाणि बद्धरूपाणि भवेयुः । प्रवासः स्वल्पः स्यात् । वृष्टिर्बहुतरा भवेत् । भूमितलेपि जलं बहुतरममृतफलादयः

पदार्था बहुतराः स्युः परंतु महर्वा जायंते। गुर्वाचार्यादिबृहज्जनानां कार्याणि शुभतराणि भवेयुः। हट्टासु प्राचुर्य्यं नो स्यात्। तथा ऽवरोधत्वं तासु भवेत्। मांसानि बहुतराणि भवेयुः। अथ यदि ताभ्यां ⁝ बोधन उत्पन्नः स्यात्तदा तस्मिन्वर्षे समानं फलं वाच्यम्। अमृतफलादयः पदार्था बहुतराः स्युः जनानां कार्याणि स्वल्पतराणि भवेयुः। लेखनीकर्मकुशलानां कार्याणि शुभतराणि स्युः। हट्टासु प्राचार्य्यं स्यात् मार्गा न निर्भया भवेयुः। खानपानादिवस्तूनि शुभानि जायंते। बहुतरा वृष्टिः स्यात्। तथा भूमितलेपि जलं बहुतरं भवेत्। प्रवासः स्वल्पः स्यात्। मांसानि बहुतराणि जायंते। अथ यदि ताभ्यां ⁝ शीतांशुरुत्पन्नः स्यात्तदा तस्मिन् वर्षे सर्वत्रैव द्विविधत्वं भवेत्। परिणामे भव्यम्। प्रवासो बहुतरः स्यात्। अनेकवर्णाश्चामृतफलादयः पदार्थाः स्युः। मधुरफलानि बहुतराणि जायंते। क्षुद्रजना बहुतरा भवेयुः बहुतरा वृष्टिः भूमितलेपि जलं बहुतरं स्यात्। मांसानि बहुतराणि भवेयुः। अथ कश्चिद्विशेष उच्यते। यो रमलो वर्षफलज्ञानाय पातितो भवेत्तस्य प्रथमगृहरूपिणां जनानां शरीरसुखदुःखादिकं वदेत्। द्वितीयगृहेण द्रव्यादीनां प्राप्तिव्ययादिकं वदेत्। तृतीयगृहेण भगिनीभ्रातृगोत्रकुटुम्बानामवस्थां वदेत्। चतुर्थगृहेण ग्रामभूमीनां प्रश्नं वदेत्। पंचमगृहेण पुत्रादीनामवस्थां वदेत्। षष्ठगृहेण संसारस्य रोगादिकं वदेत्। सप्तमगृहेण विवाहसाठीसम्बन्धादिकं जनानां ब्रूयात्। अष्टमगृहेण जनानां मृत्युहननताडनवधादिकं वदेत्। नवमगृहेण जनानां प्रवासादिकं वदेत्। दशमगृहेण राज्ञां प्रतापतेजस्त्वादिकं वदेत्। एकादशगृहेण मित्रादीनामस्था वाच्या। द्वादशगृहेण चतुष्पदानां विचारांशं

वदेत् । अत्र रूपिणां निर्गमत्वं प्रवेशत्वं स्थिरत्वं द्विस्वभावत्वं शुभाशुत्वं चापि विलोकयित्वा फलं वाच्यम् । नात्र संदेहः ।

अथ प्रकारांतरमाह ।

सायनमेषसंक्रमणसमये श्रद्धाभक्तिविनयान्वितो रमलज्ञः संपूर्णवर्षफलं ज्ञातुमुद्देशं समाश्रित्य प्रष्टुर्वा स्वात्मनो रमलं पातयेत्। द्वितीयसायनमेषसंक्रमणं यावत्प्रतिदिनानां फलज्ञानाय तद्रमलमिनकिलावं कुर्यात्। तदाह । प्रथमतृतीयाभ्यां रूपिणं तथा पंचमसप्तमाभ्यां रूपिणं कृत्वा द्वाभ्यामेकं रूपिणं कुर्य्यात् । एष प्रथमगृहे दातव्यस्तथा नवमैकादशाभ्यामेकं त्रयोदशपंचदशाभ्यां च परं रूपिणं कृत्वा द्वाभ्यामेकं रूपिणं कुर्यात् । एनं द्वितीयगृहे दद्यात् । पुनस्तथैव द्वितीयचतुर्थाभ्यां रूपिणं कृत्वा षष्ठाष्टमाभ्यां रूपिणं कृत्वा द्वाभ्यामेकं कुर्यात् । एवं तृतीयगृहे दातव्यः । तद्वद्दशमद्वादशाभ्यां चतुर्दशषोडशाभ्यां रूपिणं कृत्वा द्वाभ्यामेकं कुर्यात् । एनं चतुर्थगृहे दद्यादेवं चतुर्भी रूपिभिर्म्मातृगृहं विरच्य द्वितीयरमलं कुर्यात् । अत्र प्रथमगृहे त्वेकविंशति २१ दिनानि सायन मेषसंक्रमणप्रभृति न विचारयेत । तदग्रस्थानि द्वाविंशति २२ दिनानि विचारयेत् । तथा त्रयोविंशति २३ दिनानि तृतीयगृहे विचारयेत् । चतुर्विंशति २४ दिनानि चतुर्थगृहे विचारयेत् । एवमेकविंशति २१ द्वाविंशति २२ त्रयोविंशति २३ चतुर्विंशति-२४ दिनानि पंचमादिचतुर्षु गृहेषु विचारयेत् । एवमग्रेऽपि ज्ञेयम् । अत्र शुभाशुभरूपैर्निर्गमादिरूपिभिः संपूर्णवर्षस्य प्रतिदिनानां फलं ब्रूयात् । नात्र संदहः ।

अथ मम वर्षफले प्रतिवर्षाणां फलं कीदृशमित्यत आह ।

ताजकोक्तं वर्षफलं भवेत् । रमलज्ञः शुभदिने शुभमुहूर्त्ते लग्ने च शुभावलोकिते पापग्रहयुतदृग्वर्जिते श्रद्धाभक्तिविनयान्वितः प्रष्टुः प्रतिवर्षफलज्ञानाय रमलं पातयेत् । तस्य द्वादशगृहरूपिभिः शुभाशुभरूपैः प्रष्टुः संपूर्णवर्षफलं ब्रूयात् । तथाहि प्रथमगृहेण शरीरस्य सुखदुःखादिकं वदेत् । द्वितीयगृहेण द्रव्यलाभालाभं वदेत् । तृतीयगृहेण भगिनीभ्रातृगोत्रकुटुंबानां निकटगमनसंगत्योर्विचारांशः । एवमग्रेऽपि ज्ञेयम् । अथ यदि प्रतिदिनानां फलं ज्ञातुमिच्छेत्तदा प्रथमादिगृहेषु दिनविभागं रमलपातनसमयप्रभृति प्रागुक्तवत् । अत्र निर्गमादिरूपिभिः शुभाशुभरूपैः षोडशपर्यंतगृहस्थैः प्रतिदिनानां फलं ब्रूयात् । इति स्थूलफलम् । संपूर्णवर्षफलज्ञानायैतद्वर्षरमलं पत्रोपरि लिखित्वा यत्नेन स्थापयेत् । अथैकैकदिनानां सूक्ष्मफलज्ञानाय तस्यैव रमलस्य प्रथम १ त्रयोदशाभ्यां १३ चतुर्थ ४ चतुर्दशाभ्यां १४ सप्तम ७ पंचदशाभ्यां १५ दशम १० षोडशाभ्यां १६ रूपिणमुत्पादयेत् । क्रमश एतैश्च रूपिभिर्म्मातृगृहं विरच्य द्वितीयरमलं कुर्यात् । एवं केंद्रविपर्ययं कृत्वा द्वितीयात्तृतीयं तृतीयाच्चतुर्थकं चतुर्थात्पंचमरमलं निष्कासयेत् । एवं पुनः पुनः केंद्रविपर्य्ययं कृत्वा वर्षरमलात्क्रमशो वर्ष रमलं विहाय चतुर्विंशति २४ कात्रमलानुत्पादयेत् । तैश्चतुर्विंशतिभिः प्रश्नसमयं समासाद्य प्रत्येकदिनानां फलं ब्रूयात् । तदाह । एकैकरमलेन पंचदशदिनानां क्रमशः फलं वाच्यम् । रूपिणां प्रत्येकदिनफलानि वक्ष्यमाणचक्रे कथयिष्यामि । तस्य रमलस्य प्रत्येकगृहरूपिणा प्रश्नसमयं समासाद्य प्रत्येकदिनानां फलं ब्रूयात् । यथा प्रथमगृहरूपिणा प्रथमदिनस्य द्वितीयगृहरू-

पिणा द्वितीयदिनस्य फलं वाच्यम्। एवं पंचदशदिनपर्यं-
तं प्रथमरमलेन फलं वाच्यम्। तदग्रे द्वितीयादिरमलेनैकैकं पंच-
दशदिनानां फलं ब्रूयात्। एवं रमलपातनदिनमारभ्य संपूर्णवर्षस्य
षष्ट्युत्तरत्रिंशदिनानां ३६० फलं पत्रोपरि लिखित्वा प्रष्टुरग्रे
कथनीयं स्यात्। तदाह। लिखनोपायं प्रथमं मंगलादिस्तुतिं
लिखित्वा स्थूलफलनानार्थं वर्षरमलं लेखनीयम्। तदग्रे रमल-
पातनदिनमारभ्य संपूर्णवर्षदिनानां सूक्ष्मफलज्ञानाय तान्प्रथमादि
चतुर्विंशत्यंकान्रमलान्पत्रोपरि लिखेत्। तथाहि। प्रथमकोष्ठे
प्रश्नसमये वारप्रभृति लेख्यम्। द्वितीये तद्दिनं चन्द्रांशप्रभृति ले-
ख्यम्। तृतीयकोष्टके प्रथमगृहादीनां प्रश्नोद्भवरूपिणो लेख्याः।
रूपिसम्मुखे चक्रोक्तफलान्येवमग्रेऽप्येतदुपलक्षणमात्रं ज्ञेयमेवं पंच-
दशदिनानां फलमग्रे लेखनीयम्।

अथ प्रत्येकदिनफलानि।

## इति प्रश्नफलानि ज्ञेयानि एवमग्रेऽपि ज्ञातव्यम् ।

वाराः सं. रूपि.

| सू. | १ | ०<br>—<br>—<br>— | संतुष्टमनः स्वायत्त्येऽपि कुत्रापि प्रचलनं संमेलनं सत्कर्मयुतो जनैर्द्रव्यादिलाभः । |
|---|---|---|---|
| चं. | २ | ०<br>—<br>०<br>— | किंचिल्लाभः संतुष्टमनः द्रव्यादीनां हस्तागमनं मनोऽभिप्रायः सिद्ध्येत्प्रसन्नमनास्तिष्ठेत । |
| मं. | ३ | ०<br>—<br>०<br>— | अस्मिन्दिने युद्धं वाग्वादिकलहादिकं भवेन्नीचजनैरुद्विग्नचित्तो भवेल्लाभो न व्ययाधिकम् । |
| बु. | ४ | —<br>—<br>—<br>— | संतुष्टप्रसन्नचित्तः किंचिल्लाभो द्रव्यादीनां हस्ते वा गमनं भवेन्मनोऽभिप्रायं प्राप्नुयात । |
| बृ. | ५ | ०<br>०<br>—<br>० | प्रसन्नमनाः हस्ते किंचिल्लाभः मंगलकारकेण विश्रामः शुभवृत्तांतलाभः । |
| शु. | ६ | ०<br>—<br>—<br>० | शोकातुर उद्विग्नमना विवादः कलहश्च भवेत् स्वजनोपरि कलहो नैराश्यता स्यान्नलाभो व्ययाधिक्यम् । |
| श. | ७ | —<br>—<br>—<br>० | चिन्तारहितः संतुष्टः प्रसन्नमना मनोऽभिप्रायं प्राप्नुयात् । आशासिद्धिर्लक्ष्मीप्राप्तिर्वा । |
| सू. | ८ | —<br>०<br>—<br>— | उद्विग्नचित्तः शोकातुरश्चिंतान्वितो युद्धकलहादिकं बहुतरं स्यादत एव सर्वेभ्यः संयमं कुर्यात । |
| चं. | ९ | —<br>—<br>०<br>— | मनोऽभिप्रायसिद्धिः संतुष्टः प्रसन्नमनाः शोकरहितः स्याच्छुभवृतांतप्राप्तिश्च । |
| मं | १० | ०<br>०<br>—<br>— | द्विविधचित्तः परंतु परिणामे झटित्येव प्रसन्नता स्याद्बृहज्जनै राज्ञादिभिर्वा किंचिल्लाभः । |
| बु. | ११ | —<br>—<br>०<br>० | मित्राणां कृते क्लेशान्वितः सचिंतो भवेत् । लाभाभावः परिणामे कल्याणं स्यात् । |
| बृ. | १२ | ०<br>०<br>०<br>— | कलहयुद्धझकटकादिकं विवादश्च स्यात उद्विग्नचित्तोऽतएव समयं कुर्यात्तदा शुभं स्यात् । |
| शु. | १३ | ०<br>—<br>०<br>० | विवाहादिमंगलं स्यान्मनोभिलाषसिद्धिर्मित्रैः सह विश्रामो भवेत् । |
| श. | १४ | —<br>०<br>०<br>० | शोकातुर उद्विग्नचित्तः परिखेदितमनाः वित्तनाशः प्रत्यूषसमयादारभ्य संध्यासमयपर्यंतमेवमेवम् । |
| सू. | १५ | —<br>०<br>०<br>— | कुत्रापि प्रचलनं भवेत्तेन संतुष्टं मनोमनोऽभिप्रायसिद्धिः स्यात् । |
| चं. | १६ | ०<br>०<br>०<br>० | |

| वारः | १२ सूर्यः | चंद्रमाः | मंगलः | बुधः | बृहस्पतिः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|---|
| ०।।। | निश्चित सुस्थितमनः प्रचलनं स्वामित्वेन सुकर्मकर्तृभिः सह सांगत्यलाभः | कुत्रापि प्रचलन निर्भयं प्रसन्नता किञ्चिल्लाभः प्रवास शुभवृत्तांतप्राप्तिः | शरीरे कुशलं कुत्रापि प्रचलनं भवेत् विवाहादि मंगल तथा सत्कर्मवाद्धिः सह मेलनम् | धर्ममतिः। जपादिषु तत्परः शुभकर्मणि निरतो गुणज्ञैः सह मेलनं विद्याध्ययने स्वल्प लाभः | शरीरे कुशलं निर्भयत्वं मनोभिप्रायसिद्धिः। लाभः पंडितैः सह संमेलनांते फलप्राप्तिः | निश्चिन्तं मनः लाभः पंडितैः सह संमेलनं भाग्योदयः प्रसन्नता स्यात् । | उद्विग्नः खेदितचित्तः स्वायत्त्येन शोकदुःखातुरः अस्वामित्वेन द्रव्य क्षयः स्यात । |
| ।०।० | निश्चितः सुस्थितचित्तः द्रव्याणामागमनं हस्तेमित्रैःसह प्रसन्नता विकसित समयश्च स्यात्सुखम् | प्रवासेन आगमनं अनायासेन द्रव्याणामागमनं शुभवृत्तांत प्राप्तिः प्रसन्नता च स्यात | किंचिदुद्विग्नमना भवेत् परिणामे कार्याणि सिद्धानि भवंति अत्रपराह्ने लाभे विश्रामः | निश्चितः सुस्थितचित्तः लाभाधिक्यं मित्रैः सह मेलनं तैरेव विश्रामप्राप्तिर्मनः प्रसन्नं भवेत | द्रव्यादीनां लाभो मनोभिप्रायसिद्धिः शोकदुःखादिना लक्ष्मीवृद्धिः स्वजनैः सहसंमेलनम् । | द्रव्यादीनां लाभःमनोभिप्रायाःसिद्ध्यंति यातं वस्तु हस्ताद्व्रजेत तस्य गमनेन सुस्थित चित्तः | प्रातःकाले वृद्धि चितः विस्तृतचित्तो पराह्णे द्रव्यलाभः मनःप्रसन्नता स्यात |
| ०।०। | उद्विग्नः परिखेदत चित्तः अस्वामित्वेन कुत्रापि प्रचलनं भवेत् नीच जनैः समयं कुर्यात | विषणमना उद्विग्नचित्तः स्याद्व्ययाधिक्यं नीच जनैः संयमं कुर्यात् निश्चितं भयं शुभम् | युद्धोपद्रवः स्यादक्वचित लाभाभावः सांगत्यजनैःसह संयमं कुर्यात्तदा भव्यं नो चोद्विवाद कलहः स्यात । | मनः सिद्धाद्धिधत्वं भवेत शोक दुखाधिक्यं शत्रुता स्या त्रीचजनैस्तथा क्षुद्रैः संयमं कुर्यात्तदा भव्यम् । | अस्वामित्वेन कुत्रापि प्रचलनं स्याच्चित्तोद्विग्नता किंचिल्लाभोनो परंतु क्षयत्वमपि न स्यात् परिणामे भव्यम् । | शोक दुःखातुरः उद्विग्नचितः झकटकं भवेद स्वामित्वेन कुत्रापि प्रचलनं स्याद्धस्तात्किंचिद्व्रजेत । | मनःसिद्धेर्द्विविधत्वं भवेच्चित्तोद्विग्नता। पराह्णेमनसि प्रसन्नता स्यात् वाग्वादेन सयमं कुर्यात । |

| वारः | सूर्यः | चंद्रः | मंगलः | बुधः | तः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|---|
| ०\|\|\| | किंचित्स्वल्पमेवागमनं भवेत धर्मवेत्तॄणां पण्डितानां च सभायां गच्छेत्प्रसन्नता स्यात। | निश्चिन्तः सुस्थितमनाः विस्तारितत्वं पंडितैस्तथा गुणज्ञैः सह संमेलनं विश्रामं पश्येत | उद्विग्नः परिखेदित चितः परंतु किंचित क्षयत्वं नो भवेत पंडितैः सह संमेलनं भवेत | निश्चिन्तः सुस्थितमनाः प्रसन्नता स्यात गुणज्ञैः सह संमेलनं स्यात द्रव्यादीनां प्राप्ति र्विश्रामः | द्रव्यादीनामागमनं मित्रैः सह विश्रामं प्राप्नुयात पंडितैः सह सम्मेलनं प्रसन्नता स्यात | निश्चिन्तःसुस्थितमनाःप्रसन्नता शुभ वृत्तांतप्राप्तिर्गुणज्ञैः सह संमेलनम्। | उद्विग्नः परिखेदितचित्तः शोकदुःखादिकं झकटकेभ्यो लेखनीकर्मकुशलेभ्यो वाग्वादः स्यादपराह्ने |
| \|०\|० | किंचिल्लाभः प्रसन्नतामनोभिप्राय सिद्धिः मित्रैः सह मनोभिलषितकार्य सिद्धिर्विश्रामसुखम्। | विवाहादिमंगलं प्रसन्नता शुभवृत्तांतप्राप्तिर्निश्चिता सुस्थितचित्तप्रवासिन आगमं स्यात | विवाहादिमंगलं प्रसन्नता लेखनीकर्मकुशलैः सह संमेलनं तथा पाचकैः कुकर्मकारिभिश्च। | प्रसन्नता मंगलं स्वामित्वेन द्रव्यादीनामागमनं मित्रैः सार्द्ध कौतुक मंगलान्याश्चर्यरूपाणि विविधप्रकराणि | प्रसन्नता द्रव्याणामागमनं मित्रैः सह विश्रामसुखं मंगलकारकैः संमेलनं किंचिद्वस्तु प्राप्तिः | शुभवृत्तांतप्राप्ति मित्रद्वारा मनोभिप्रायसिद्धिरथवा बालकैर्द्वारा प्रसन्नता स्य त | द्रव्याणामागमनं शुभवृत्तांतः कार्यसिद्धिः प्राप्तिः प्रसन्नता मित्रैः सह संमेलनं सुस्थित चित्तः स्यात |
| ०\|०\| | उद्विग्नः परिखेदतचित्तः हस्ते शुभ द्रव्याणामागमनं वाग्वादो बहुलतरः कुत्रापि संस्थानो द्भवात | शोकदुःखातुर उद्विग्नः परिखेदित चित्तः कुपात्रैर्नीचजनैश्च संयमं कुर्यात्तदा शुभंनोचेदुपद्रवः स्यात | मनोद्विविधत्वं बहुतरंभवेच्चिंताधिक्यं विश्राम स्वल्पः बंधचित्तः निषिद्धः वार्ता श्रवणं यदि संयमं कुर्यात्तदा विश्रामः . | उद्विग्नः परिखेदत चित्तः कुकर्मकारकैःखांगत्यजनैःसह झकटकं भवेत् वाग्वादश्च यदि संयमं कुर्यात्तदा कशलं स्यात परिणामे मिश्रफलम्। | शोकदुःखातुरः उद्विग्नः परिखेदित चित्तः झकटकैर्नरास्पता स्यात्कुपात्र नीचजनैः सह संयमं कुर्यात्तदा शुभं नान्यथा | शोक दुःखातुर उद्विग्नचितः नीच जनैः सह झकटकं भवेत व्ययाधिक्य मन्त्रप्रयत्नतः संयमं कुर्यात | यथास्थितप्रकृतिकः प्रसन्नमनाः स्यात शोकदुःखादिमुक्तो भवेन्मनोभिलषित कार्याणां सिद्धिः विश्रामसुखं द्रव्याणामागमनं हस्ते स्यात |

| वारः | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| ।।।० | दुष्टैर्नीचजनैः सह वाग्वादस्स्यात् परंतु व्यर्थमेव अत्र संयमं कुर्यात् | शोकदुःखातुर वद्धचित्तः निजजनैः सह संमेलनं दुष्टानां माध्यंन्तेनात्र संयमं समीचीनम् | उद्विग्नवंधौ चित्ते नैराश्यता किंचिदपि द्रव्याणामागमनं न स्यात्संयमं कुर्यात् | युद्धोपद्रवत्वं दुष्टैः सह तथा सांगत्यजनैः सहझकटकं कुर्यात् परंतु संयमं शुभम् | उद्विग्नवंधचित्तः सांगत्यजनैः सह झकटकं व्यर्थमेव कुत्रापि प्रचलनं यत्र संयमं कुर्यात | चिंताग्रस्तोवद्धचित्तः इतस्ततो झकटकोत्पत्तिः संयमे तिष्ठेत्तथा द्रव्याणां हस्ताद्व्ययो नो भवेत | लाभो निश्चितः सुस्थितचितः मनोभिप्रायसिद्धिः बृहज्जनैः संमेलनं मित्रैविश्रामप्राप्तिर्मन्योभिप्राय सिद्धिः |
| ।।०। | उद्विग्नपरिखेदिताचित्तः शोकदुःखातुरो विवादः वाग्वादः झकटकंस्यात्तेन संयमं कुर्यात् | किंचित्स्वल्पमेव प्राप्तिरुद्विग्नपरिखेदितचित्तो पथि भारलक्षितो भवेत झकटके संयमो भवेत् | प्रसन्नः सुस्थिताचित्तोलाभकर्मकारकेण सह संमेलनं विश्रामे प्रसन्नता स्यात्। स्थानागमनं हस्ते | शस्त्रपाणिभिश्चतुष्पदैश्चोद्विग्नपरिखेदितचित्तो झकटकं भवेदत्र संयमं विद्धि तदा समीचीनम् | व्यर्थमेव कुत्रापि प्रचलनं भवेच्छोकदुःखातुरः चिंताधिक्यं वंधोत्र सहायदातृभिः संयमं कुर्यात | युद्धकलहवाग्वादादिकं भवेत विवादो गुर्वाचार्यादिभिः शस्त्रपाणिभिश्च संयमं कुर्यात्तदा शुभं भवेत | उद्विग्नः परिखेदिताचित्तोबंधमनाः सहायदातृभिः संयमं कुर्यान्मध्याह्नादुपरि कार्याणि सिद्ध्यंति |
| ।।०। | द्रव्याणामागमनं निश्चितं सुस्थितमनाः मनोभिप्रायसिद्धिः शुभवृत्तांतप्राप्तिर्मित्रैः सह मेलनम् | शोकदुःखान्मुक्तो भवेत् द्रव्यादिलाभः सुस्थितचित्तः शुभवृत्तांतप्राप्तिः प्रसन्नतावस्था विश्रामसुखं स्यात् | शोकदुःखातुरउद्विग्नपरिखेदितचित्तः झकटकेन चिन्ताधिक्यं भवेत् वाग्वादः परिणामः समीचीनः | द्रव्यादिलाभो मित्रैः सह मेलनं शोकदुःखमुक्तो भवेन्मनोभिप्रायसिद्धिश्चित्तप्रसन्नता विश्रामादिकम् | सर्ववस्तूनां विस्तृतफलप्राप्तिर्मित्रैः सह समेलनं शोक दुखान्निर्मुक्तो भवेत्प्रसन्नता स्यात | सर्ववस्तूनां विस्तृतत्वं स्यात् सुस्थिताचित्तः शोकदुखान्मुक्तो भवेत्पहितैः सह संमेलनं प्रसन्नता विश्रामत्वं गापिः स्यात | स्वल्पमेव द्रव्यादिफलं मनसि द्विविधत्वं भवेत मध्याह्नादपरत्र समीचीनं स्यात प्रसन्नता विश्रामः |

| वारः | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| ००।। | द्विविधत्वे मनसि मनोभिप्राय न प्राप्नुयात । शोकदुःखातुरः लाभोपि न परंतु परिणामे शुभम् | अस्वायत्त्येन कुत्रापि प्रचलनं भवेत् परंतु तत्रगते सति फलप्राप्तिर्द्रव्याणामागमनम् | द्विविधचित्त उद्विग्नः परिखेदितमनाः परंतु मध्याह्नादुपरि बृहज्जनैः सह मनोत्सवः स्यात् | परिष्वगः समीचीनः बृहज्जनैर्मनोभिप्रायसिद्धिर्लाभो द्रव्याणां परिणामे शुभम् | मंत्रणा जनैः सह संमेलनं यशश्च प्रसन्नता पदवी न स्यान्मनोभिलषितं प्राप्नुयात् | शोकदुःखातुरः दिनार्द्धात प्राक्चित्तोद्विग्नता मध्याह्नादुपरि प्रसन्नता स्यात् | अस्वायत्त्येन द्रव्यागमनं बहुतरं भवेत्तस्मात्स्थानात् समानं फलं परिणामे शुभम् |
| ।।०० | शरीरे कुशलं मनश्चिंता सुस्थितचित्तः मनोभिप्रायं प्राप्नुयात । शुभवृत्तांतप्राप्तिर्द्रव्याणामागमनं स्यात् | शरीरे कुशलं मनोभिप्रायसिद्धिः शोकदुःखादिमुक्तो भवेत् द्रव्याणामागमनं स्यात् | बंधचित्तः उद्विग्नमनाः खेदान्वितः निषिद्धतरां चिंतां कुर्याद्दुष्टैः सह झकटके संयमं कुर्यात्तदा शुभम् | बंधप्रकृतिकमित्रैः सह स्वात्मानं क्लेशो भवेद् व्ययाधिक्यं अत्र यदि संयमं कुर्यात्तदा बहुसमीचीनं स्यात | द्रव्याणामागमनं निश्चितं सुस्थितचित्तो मित्रद्वारा मनोभिप्रायं प्राप्नुयात् विश्रामं च । | प्रसन्नता निश्चितं सुस्थितमनाः मित्रैः सह संमेलनं याचकैः प्रसन्नमूर्त्तिभिश्च संमेलनम् | बद्धप्रकृतिकः निषिद्धतरां चिंतां कुर्यात् । उद्विग्नचित्तः परिखेदत्वं च लाभो न स्यात् |
| ०००। | उद्विग्नपरिखेदितचित्तः बंधमनाः कलहेन दुष्टैः सार्द्धं झकटकं भवेदत्र संयमं कुर्यात | शोकदुःखातुरे मनसि बहुतराचिंतास्यात् दुष्टैः सार्द्धं झकटकं भवेदत्र संयमं कुर्यात्तदा शुभम् | द्विविधत्वं चिंता बहुतरा स्यात् अपराह्ने गुर्वाचार्यादिभिः सह विश्रामप्राप्तिः झकटकेन संयमं कुर्यात | कुत्रापि प्रचलनं उद्विग्नपरिखेदितचित्तः दुष्टैः सह संयमः कर्त्तव्योऽपराह्ने कार्यसिद्धिः | युद्धोपद्रवकलहवाग्वादादि बहुतरं भवेत् झकटकं भवेदत्र संयमकरणं समीचीनम् | प्रतापतेजस्तपस्सुद्विग्नपरिखेदितचित्तो हस्ते किंचिद्द्रव्यागमनं न स्यात् संयमं कुर्यात्तदा | निश्चितसुस्थितमनाः सर्ववस्तूनां विस्तारोऽपराह्ने मित्रैः सह संमेलनं द्रव्याणामागमनं हस्ते स्यात्। |

| वारः | सू. | चन्द्र. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| ०\|०० | दिनारम्भे परिखेदितचित्तोद्विग्नः द्विविधत्वं दिनान्ते द्रव्यादीनां लाभः सुस्थितचित्तः प्रसन्नः | प्रसन्नताप्रसंगेन भोजनप्रसङ्गेन वा मित्रैः सह सम्मेलनं मनोभिप्रायसिद्धिर्द्रव्यादिलाभः | प्रसन्नतां सुभोजनं मनोभिप्रायं प्राप्नुयात् शोकदुःखान्मुक्तो द्रव्यादिलाभात्सुस्थितचित्तः | उद्विग्नपरिखेदितचित्तो दिनप्रारंभे दिनप्रांते द्रव्यादिलाभस्तेन निश्चिन्तसुस्थितमनाः | अस्मिन् दिने समानं फलं प्रत्येकघटिकायांविविधरूपो दिनांते द्रव्यादिलाभः प्रसन्नता स्यात् | विवाहादिमंगलमनोभिप्रायसिद्धिर्विश्रामप्राप्तिर्मित्रैः सह द्रव्यादीनामागमनं स्यात् | उद्विग्नः परिखेदितचित्तो दुष्टानां प्रसंगेन एभ्यो दूरस्थितौ समीचीनं ज्ञेयम् |
| ०००\| | शरीरे कुशलं निश्चिंतः सुस्थितचित्तः शोकदुःखान्मुक्तोऽत्रसमीचीनं संमेलनं प्रसन्नता स्यात् | प्रसन्नता मनोभिप्रायसिद्धिर्द्रव्याणामागमनं शोकदुःखान्निर्मोक्षः मनोभिलाषितं प्राप्नुयात् | बंधमना उद्विग्नः परिखेदिताचित्तः परंतुदिनांते निश्चिंतं सुस्थितमनाः प्रसन्नता स्यात् | मनोभिप्रायसिद्धिर्मित्रैस्सह सुस्थितचित्तः प्रसन्नता चात्र दुष्टैः सह संयमस्समीचीनः | द्रव्याणामागमनं यस्य द्रव्यस्य किञ्चिदपि सम्भवो नो भवेत्तस्यागमनं तेन मनसि प्रसन्नता स्यात् | कार्याणि विरुद्ध तत्वं यान्त्युद्वेगे खेदस्तथा शोकदुःखेभ्यो मुक्तो भवेत् | बन्धचित्तः उद्विग्नपरिखेदितमनाः अत्र सहायदातृभिस्तथा नीचजनैः संयमं कुर्याद्दिनांते शोकान्मोक्षः |
| \|००\| | निश्चिंतः सुस्थितमनाः मनोऽभिप्रायसिद्धिः शुभवृत्तांतश्रवणं वृद्धैः सह संमेलनम् | उद्विग्नः परिखेदितचित्तो अमात्यजनैः संयमं कुर्यात्परन्तुदिनांते विवाहादि मंगलं भवेत् मनसि प्रसन्नता स्यात् | बंधमनाः उद्विग्नःपरिखेदिताचित्तः कलहकरणं नीचजनानामत्र संयमो भवेत्तदा समीचीनम् | निश्चिन्तः सुस्थितचित्तः विवाहादिमंगलं शोकदुःखमुक्तो भवेद्विदुषां सांगत्येन प्रसन्नता विश्रामश्च | मनसि प्रसन्नता प्राप्तिर्द्रव्याणां शोकदुःखभयेभ्यो मोक्षः स्यात् कुत्रापि प्रचलनं सफलं भवेत् | स्वल्पमेव द्रव्याणामागमनं सुस्थितमना मित्राणां वृत्तांतं श्रृणुयात्तेन मनसि प्रसन्नता स्यात् | शोकचिंताधिक्यमुद्विग्नपरिखेदितचित्तो अत्र सहायदातृभिस्तथा नीचजनैः संयमकरणं समीचीनं स्यात् |

| वार | . | चं. | मं. | बु. |
|---|---|---|---|---|
| | कुत्रापि प्रचलनं स्यात्तेन द्रव्यादि लाभः सुस्थिताचित्तः मनोभिप्राय सिद्धिः | स्वल्पचिंता परन्तु शोकान्मोक्षो द्रव्याणां मर्गेगमनं यदिच्छेत्तदेव प्राप्नुयात् | कुत्रापि प्रचलनं स्यात्तेन द्रव्यादि लाभोपि परन्तु द्रव्यक्षयत्वं विवादेन संयमं कुर्यात् | निश्चिन्तः सुस्थितचित्तः शोक दुःखान्मोक्षः मनोभिप्रायसिद्धिः प्रसन्नताविश्रामौ स्याताम् |
| | बृ. | शु. | श. | |
| ⁘ | लाभाधिक्यं कुत्रापि प्रचलनं तेन बहुशो लाभः मनोऽभिप्रायसिद्धिः पदवीं च प्राप्नुयात् | मंगलं प्रसन्नता सुभोजनं सर्ववस्तूनां विस्तृतत्वं शोकान्मुक्तिः | द्विविधत्वं मनसि तस्मिन्प्रचलनंकाचित्फलप्राप्तिनंपरन्तु दिनांते प्रसन्नता विश्रामश्च स्यात् | |

अथ वारानयनम् ।

कल्पाद्यब्दगणः प्रभाकर १२ हतश्चैत्रादिमासैर्युतस्त्रिघ्नः खाद्रि-७० हृतात्तयुक्सुर ३३ हृतो लब्धोऽधिमासैर्युतः ॥ खत्रि३० घ्नः सतिथिर्द्विधा शिवहतो ११ घ्निव्योमशैलै ७०३ र्हृतो हीनो लब्ध-दिनावमैः शितनिशार्द्धे सावनोऽहर्गणः ॥१॥ शुक्राद्गणनीया वाराः तदा कल्पादब्दगणना'संवत्सरः सायकवह्निभूमी १३५हीनो भवेच्छे-षमितः शकाब्दः ॥ शाकोंकशैलक्षितिवीतिहोत्रै ३१७९ र्युतः कलेरब्दगणस्तु वृत्तः॥२॥'अथ पंचांगानयनम्। वारादि द्विगुणीकृत्य पूर्ववारादिखंडलम् । पंचागं साधयेदेवमित्युक्तं ब्रह्मयामले॥३॥अथ चंद्रदर्शसाधनम् । दर्शस्ययो भवेद्दंडः षष्ट्यासंपातयेत् किल॥शेषां-कं दिनमानं तु योजयेत्तदनंतरम् ॥ ४ ॥ सूर्यो राहुश्च दंडाभ्यां यद्यंकमधिकं भवेत् । दृश्यते च तदा चंद्रः प्रायः प्रोक्तं मनीषिभिः५॥ न्यूनश्चेत्तदा द्वितीयायां दृशते।

अथ पारसीवाक्ये पूर्वोक्ताः संज्ञा आह ।

लहीयानः ⁝ वाग्मी हुमरा ⁝ लोहितः ⁝ नुस्रतुलखारिजउष्णगुः वयाज ⁝ विधुः कब्जुल खारिज ⁝ पातः इज्जतमा बोधनः ⁝ अत-

| ० | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मेष | ५१ | ४४ | ५५ | ५२ | ५६ | ५५ | ५४ | ५३ | ५२ | ५५ | ५३ | ५३ |
| वृषभ | ४८ | ५१ | ४४ | ५८ | ५७ | ५७ | ५५ | ५३ | ५० | ४६ | ४७ | ४७ |
| मिथुन | ४४ | ४७ | ५२ | ४७ | ५९ | ६३ | ६१ | ५९ | ५६ | ४९ | ४४ | ० |
| कर्क | ४८ | ४९ | ५३ | ६० | ६० | ३३ | ७७ | ७७ | ७२ | ६६ | ६२ | ५२ |
| सिंह | ६४ | ५८ | ५९ | ६४ | ७१ | ८१ | ८९ | ८४ | ९३ | ८९ | ८१ | ७२ |
| कन्या | ७९ | ६९ | ५६ | ६५ | ६९ | ७८ | ८८ | ८७ | १०२ | १०० | ९७ | ८९ |
| तुला | ८४ | ४ | ६६ | ६२ | ६२ | ६६ | ७५ | ६४ | ९२ | ९७ | ९२ | ९१ |
| वृश्चिक | ८८ | ७१ | ६३ | ५७ | ५४ | ५० | ५७ | ६४ | ७२ | ७६ | ८२ | ८१ |
| धन | ६६ | ६३ | ५७ | ५२ | ४८ | ४५ | ५२ | ४८ | ५३ | ५९ | ६३ | ६६ |
| मकर | ५८ | ५८ | ५६ | ५३ | ५० | ४७ | ४६ | ४६ | ४८ | ५७ | ४४ | ५९ |
| कुंभ | ५३ | ५६ | ५५ | ५४ | ५३ | ५२ | ५१ | ४९ | ५० | ५१ | ५२ | ५३ |
| मीन | ५५ | ५३ | ५५ | ५६ | ५५ | ५५ | ५४ | ५६ | ५३ | ५३ | ५४ | ५४ |
| राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु | राहु |

वेखारिज ⁝ वक्रः । इ ⁝ नकीससौरि उक्ला ⁝ मंदगः कब्जुल दाखिल ⁝ तीक्ष्णांशुः फरह ⁝ दैत्यार्चितःनुस्रतुलदाखिल ⁝ शूरी । नकी ⁝ आरः । अतवेदाखिल ⁝ कविः । तरीक ⁝ शीतांशुः । जमात ⁝ सौम्यः सकलरूपी । जौजयुग्मम् । फर्दकेच । आतशी वह्निमुखः बादी वायुमुखः आबी जलमुख खाकी भूमुखः । असुरतत्त्वम् । नुक्ताबिंदुः । दाखिल प्रवेशी खारिज निर्गमः । साबित स्थिरः । मुनकलिब द्विस्वभावः । तसकीन क्रमः । सुकूनप्रकृतिक्रमः । तसकीनअददः संख्याक्रमः । तसकीनमिजाजीखेटकः । तालिवग्राहकः । मतलूबग्राह्यम् । मराती च सोपान । मर्त्तवा । पदवी । गलवा । प्रकर्ष । तकरार । अन्वादेशः । हज्जसंबंधस्थानम् उम्महाति १, २, ३, ४ मातृगृहं वानात् । कुदामुलयद ५, ६, ७, ८ दुहितृगृहम् । मुतवलदात् । मुसल्लसात् । तहतुलपद ९, १०, ११, १२ दौहितृगृहम् । जवाइद शचाहिद । षलषुलय १३, १४, १५, १६ साक्षीगृहम् । मीजानुलमवाजीन १२ रमलचठधरः ।

मीजा १९ तुलागृहम् । सैररमल । रमलावृत्ति । सुवह । प्रत्यूष-समयः । मजहूल मध्याह्नः जुहर अपराह्णः असरसंध्या । मगरिब-रात्रिसुख । इशानिशा । नुक्तयसुंतहीबिंदुः यत्रपूर्णतां याति । जाय-चा रमलचक्रम् । तसकीनहुरूफवर्णक्रमः तसकीनऽनसुत्तत्त्वक्रमः । नाजीरदृष्टिकर्त्ता । संस्कृतविदि च पारसीज्ञाता । पारसीविदि च संस्कृतज्ञाता तदूद्वयविदि तदूद्वयज्ञाता जायते हि तदधिपताविदम्। पुण्याकारो दर्दशाख्यश्च पूर्वे याम्ये सौम्ये शंभुर्विष्णवोर्गृहेवै।क्षेत्राधीशो वारुणे दिग्विभागे मध्ये चात्राप्राकृतायासुनाथः ॥ २॥ सुरसरिदति पुण्या तत्समा चारुधन्या मुनिजननृपमान्या नैमिषारण्यकन्या । अमृतफलचतुर्भिः संयुता पुण्यतोया यमनपुरतलस्था गोमनृपू-स्तलस्था॥३॥यमनपुरतलस्था गोमती चारुतोया विमलसुफलदात्री पापहंत्री नराणाम् । भवति परममोक्षः स्नानमात्रेर्जनानां नयति न किमु तान्वै ये नराः पीततोयाः ॥ ४ ॥ गोमत्यां शुभ्रसेतु-र्दृढपरिरचितश्चारुपाषाणवृन्दैः शुद्धैः स्निग्धैः प्रशस्तैर्वि-मलरुचियुतैः पुण्यरूपैर्विशालैः । देशे देशे प्रसिद्धो नृपतिहृदि सदा चारुशोभाप्रसक्ताऽन्ये सर्वेप्रचलंत्यहर्निशमिति द्रष्टुं प्रसेतुं शुभम्। ५ सेतोर्निकटे दुर्गः शोभते सद्वीरधीरपुरुषैः । मिरजाखाननरेशस्ति-ष्ठति यत्रार्क इव बिंबे ॥ ६॥ धर्माधारनरेशवीरपुरुषः सत्कीर्त्तियुक्तः सदा विद्यायां कुशलः सदा शुभकरः सर्वज्ञसाधुप्रियः । नित्या-नंदभरो रमासुखकरो जातश्च कर्त्तान्वये दायी दीनजनेषु सुस्थित-मनाः शत्रुप्रहंता च सः॥७॥संवत्सरः पंचगुणेंदु १३५हीनः शाको भवे द्विक्रमराज्यतश्च।शाके विहीने दशपंचशेषे मुहुर्रमादीहिजरीति सन्नः ८

अथ स्वशाकोपरि यवनसन्नमासयोर्ज्ञानोपायः ।

शकः खाभ्रपंचेंदु १५००हीनोर्क१२निघ्नो मघोमासयुक्तो ह्यध-रुयश्वि २३ युक्तः॥ द्विनिघ्नः २ स्वखव्योमनंदांश ९०० हीनः शरांगै६५खाप्ताधिमासैर्युगूर्द्ध्वम् ॥ पतं१२ गातिशेषैर्मुहर्म्मादिमासो रसाष्टांकयुक्तेषु लब्धस्तु सन्नः॥ १०॥अस्योदाहरणम्।शकः १६२२ खाभ्रपंचेंदु१५००हीनः शेषः१२२अर्क१२निघ्नः१४६४अत्र चैत्रादेः

कृष्णपक्षादिगणनया वर्त्तमानो मासः पौषः १०तेन युक्तः १४७४अयं पृथक्।एकस्मिन्स्थले त्र्याश्वि२३युक्ते जातः १४९७द्विनिघ्नः२९९४ अयं स्वखव्योमनंदांशेन९००हीनः३शेषः२९९१अत्र शरांगै६५र्भक्ते लब्धामासाः४९अधिमासा द्वितीयस्थले१४७४युक्ता १५२० अत्र द्वादशभक्ते लब्धं१२६शेषं८तेन मुहर्म्मादिना वर्तमानो मासःसावनोऽष्टमः।लब्धमध्ये१२६रसाष्टांकै९८६र्युक्ते जातोवर्त्तमानसन्नः१११२ एवमन्यत्रापि विचारणीयम्।अथ मुहर्म्मादिचांद्रमासनामानि।मुहर्रम सफर।रवीलौवलः।तथाऽऽखिरः । जमादिलौवलस्तद्वज्जमादिलाखिरः स्मृतः१० । रज्जब सावान् रमजान् शवालो जिलकादि च । जिलहिज्ज इमे मासाः क्षपेशोदयतः सदा११अत्र रवीलारिवस्थाने रवीलस्सानी तथा जमादिलारिवस्थाने जमादिस्सानीति केचिद्वदंति।अथ सन्नोपरि हिन्दूकशकमासयोर्ज्ञानोपायः।सनस्तर्कवस्वंक९८६हीनोऽर्कनिघ्नो १२ मुहर्म्मादिमासान्वितोऽधस्त्रिदस्रैः२३विहीनोऽश्वि२निघ्नः स्वखाभ्रांकभागै९००र्युतोक्षारसै६५र्लब्धाधिमासैर्विहीनः द्युनाथा१२प्तशेषे मधोर्मास इष्टः खखाक्षेंदु१५००युक्तेषु लब्धेषु शाकः।अस्योदाहरणम् वर्त्तमानसन्नः१११२तर्कवस्वंक ९८६ हीनः शेषः १२६ अर्कनिघ्नः १५१२अत्र मुहर्मादिमासः।सावन८स्तेनयुक्तः १५२० अयं पृथक् । एकस्मिन्स्थले त्रिदस्रै २३ विहीनः शेषः १४९७ द्विनिघ्नः २९९४ अयं स्वखभ्रांक९००भागै ३ र्युक्तः २९९७ अत्राक्षांगैर्भ ६५ क्ते लब्धाधिमासाः४६तैरधिमासैर्द्वितीयस्थाने १५२० विहीनः १४७४ अत्र द्वादशभि१२र्भक्ते लब्धं१२२शेषं१०तेन चैत्रादिवर्त्तमानोदशमः १०पौषः । लब्धमध्ये१२२खखाक्षेंदु १५०० युक्ते जातो वर्त्तमानः शकः १२२३ एवमुभयपथेन सन्नमुत्पाद्य । सन्ने रविभवै । १११२ हीने शेषं ग्रंथाब्दमानकम् ॥ सन्ने रविभवैः१११२ सौम्ये पौषे कामतिथौ सिते ॥ १३ ॥ तस्मिदिन्ने रात्रिघटीचतुष्के श्रीमन्महाराजविराजमानैः ॥ भूपैः सदा दानविशालरूपैर्युक्तं कृपापूर्वकटाक्षनेत्रैः ॥ १४ ॥ राज्ञस्तस्य महानुभावसुधियः संगृह्य चाज्ञां शुभां प्रश्नं सारतरं महाशुभकरं वाच्यं मनः संभवम् । प्रोक्तज्ञानतरं सरूपविमलं लग्नं यथासंभवं खेटैर्वद्धतरं दिवानिशयुतं सौख्यप्रदं

ज्ञानिनाम्॥ १५ ॥रमलरहस्यं संप्रोक्तं ग्रंथसारं कृतं ध्रुवम् । लाभालाभौ सुखं दुःखं जयं चैव पराजयम् ॥ १६ ॥ जीवनं मरणं गुह्यं मनोऽभिलषितं तथा ॥ वृत्तांतं सर्वजंतूनां येन जानाति साधकः ॥ १७ ॥ उक्तं च । ब्रह्मद्वेषितुरुष्कसंभवमिदं तार्तीयकं वर्त्तते । शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हं भवेत्।यस्माद्यत्सदसत्फलन्निगदितं सत्यं हि किं पंकजे॥शंकापंकभवो भवेत्फणिफणोत्पन्ने मणौ दूषणम्॥१८॥यात्राशास्त्रमकारि यत्कृतयुगे तन्नान्यथा सर्वथा त्रेतायामपि बादरायणकृतं तच्चानृतं नो भवेत् । यद्गर्गेण विनिर्मितं कृतिचमत्काराय च द्वापरे कालेच प्रवले कलौ त्वविकलं तार्त्तीयकोक्तं फलम् ॥ १९ ॥ अतः सत्यं पुनः सत्यं पुनः सत्यं तथैव च । नान्यथा विद्धि दैवज्ञयवनाचार्यभाषितम् ॥ २० ॥ लोभतो नैव दातव्यो न दातव्यो भयैरपि ॥ रमलरहस्यग्रंथो गोपनीयः प्रयत्नतः ॥ २१ ॥ दुराचारयुते पुंसि दुष्टे क्षुद्रे गुरुद्विषि ॥ दुर्जने सत्यहीने च नैतच्छास्त्रं प्रकाशयेत् ॥२२॥ नैतद्देयं कृतघ्नाय वंचकाय न कौतुके । शिष्याय भक्तियुक्ताय साधकाय प्रदापयेत् ॥२३॥ सुपरीक्ष्य हितं मित्रं चिरकालमुपागतम् । तस्मै निवेदयेच्छास्त्रं यतो धर्मो विवर्धते ॥२४॥ शांताय शुद्धचित्ताय सत्यधर्मरताय च । यशस्विने कृतज्ञाय चैतच्छास्त्रं प्रकाशयेत् ॥२५॥ भारद्वाजकुलोद्भवो हि मतिमान्ख्यातः सदा कीर्तिमाञ्छिष्टाचारयुतः पुरंदरसुतो यः सद्द्विजो भक्तिमान् । शैवे मंत्रविधौ सदा शिवसुधीर्धीमज्जनो नम्रधीः सूनुस्तस्य महद्विलासगणिते शास्त्रे कृतातिश्रमः ॥ २६ ॥ प्रणमामिगुरोरंघ्रिकंजंभ्रमररूपभृत् । परागगंधानुरतो द्विजानां भक्तितत्परः ॥ २७ ॥ शममर्दनधातोश्च ह्युक्तं पूर्वं मयेति हि । ल्युट्प्रत्यये त्वनादेशे शर्म्मणा रचितं त्विदम्॥२८॥उदितो ह्याद्यवर्णो यो द्वितीयःचोष्मणां तथा । क्रमेण ऋणसंयुक्तः सदा चाद्यः प्ररक्षताम्॥ २९ ॥ यत्कुत्रापि परिभ्रमो यदि भवेत्पद्येविशाले त्वहो शब्दे वापिमनोविकारवशतस्तच्छोध्यतां सादरात्। ये शिष्टा हि परोपकारनिरताः स्वात्मावबोधास्तथा विज्ञातिर्म्मम सावधानमनसा तेषां तु पांडित्यके ॥ ३० ॥

इति श्रीभयभंजनशर्मकृते रमलरहस्ये सारसंग्रहे मिश्रितप्रकरणं समाप्तम् । समाप्तश्चायं ग्रन्थः ॥

